अनेकजैनपूर्वाचार्यविरचितः

# स्तोत्रसमुच्चयः ।

जैनाचार्य-न्यायाम्भोनिधि-

श्रीमद्विजयानन्दसूरीश्वरचरणारविन्दसमाराधक-

दक्षिणविहारि श्रीमदमरविजयमुनिपुङ्गवशिष्याणुना

श्रीचतुरविजयमुनिना ।

संपादितः संस्कृतश्च ।

दक्षिणविहारि श्रीमद्राजविजयमुनिवरादेशेन

मुम्बय्यां

पाण्डुरङ्ग जावजी

इत्येतैः स्वीये निर्णयसागरमुद्रणयन्त्रालये

मुद्रयित्वा प्राकाश्यमानीतः ।

संवत् १९८४.     सन १९२८.

मूल्यं १॥ सार्धरूप्यकम् ।

# ॐ श्री अर्हन्नमः ॥

नत्वा तीर्थङ्करादीन् सुविजितकरणान् ज्ञानविज्ञानसिन्धून्
कृत्वा मूर्धन्यनुज्ञां मुनिवरजयिनां दक्षिणाशाचराणाम् ॥
कुर्वे प्रस्तावमस्य त्रिभुवनविदितस्तोत्रसामुच्चयस्य
सर्वे क्षाम्यन्तु सन्तः सकरुणमयि भोः साहसं मामकीनम् ॥ १ ॥

अयि भोः श्राद्धमहाशयाः! तत्रभवतां भवतां नितान्तशान्तान्तःकरणानां श्रुतिविषयमापतितमेव यथा खलु चतुःसमुद्रसंवेष्टिते षट्खण्डमण्डिते अस्मिन् भारते वर्षे कोटिशोऽब्देभ्यः प्राक् सकललोककामनाकल्पतरुरिव श्रीमद्भगवान् युगादिजिनमताधिपो महापुरुषलक्षणोपेतस्तीर्थङ्कर ऋषभदेवो नाम्ना तृतीयारकप्रान्ते प्रादुरासीद्धरण्याम्। अमन्दानन्दनिस्यन्दिनो भगवतो बालेन्दोरुदय इव श्रीमदृषभदेवमहाभागस्य, "अहिंसा परमो धर्मः" इत्यात्मकः सिद्धान्तः सर्वैः सादरं सशिरःकम्पमभिनन्दितः।

तदानीमखिलाः प्रजा अनवलोकितसद्धर्ममार्तण्डाः कालानुभावबलेनात्यन्तान्तर्हिततत्त्वज्ञाना अन्तरायतिमिरावृते प्राकृतजनदुर्वहकर्मोर्मिमालापरिपूरितेऽमुष्मिन् संसारपारावारे परं पारं नाद्राक्षुः। जननीजठरजनिनिरोधकं शाश्वतसुखैकहेतुभूतं ज्ञानमिदमदो वेति सन्देहकूपान्तःपतिता मज्जनोन्मज्जनदुःखमन्वभूवन्। ये केचिदमानुषमनीषान्वितास्तेऽपि सन्मार्गदर्शकानां धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थप्रतिपादकानां महतां धर्मप्रेरकाणामभावात् धर्मतत्त्वमजानाना एवासन्। एवं च निजपुत्रकलत्रमोहनिगडनिगडितेषु, विस्मृतपरोपकारदीक्षेषु, मानुषेषु, सद्विद्यावदातचेतास्तप्तचारुचामीकररसतरङ्गिण्यवगाहित इवापिशङ्गावदातवर्णेन मुखमण्डलेन विभ्राजमानो भगवान् जिनेन्द्रोऽग्निरिव खाण्डववनदिधक्षयास्मिन् क्षोणीतलेऽवततार।

सर्वेन्द्रियाह्लादनसमर्थमन्यथावबोधमहीरुहकुठारं तदुपदेशसुधारसमाकण्ठं पीत्वा तदनुसारिणो गणधराद्याचार्यवर्या भारतषट्खण्डमण्डलानि धर्ममण्डितान्यकुर्वन्। गणधरा गणधरशिष्याः प्रशिष्याश्च पृथक् पृथग्विषयेषु विहृत्य तेषु तेषु जनपदेषु

नन्दनवनमिवानन्ददायिनो विहारान् कारयामासुः । तत्र सदासन्निहितसुमनःसन्ताना नागपुन्नागमालतीजम्ब्वादयो लताश्चाम्रतमालहिन्तालाम्रादयो महीरुहाः सर्वर्तुभिरधिष्ठिता आसन् । एषां लताविटपिनां मध्यभागे स्फटिकमणिभिरिवातिनिर्मलैरुदकैः परिपूर्णा जलाशयाश्च तत्र प्रस्फुरन्ति स्म ।

संसारासारतप्ताः शतशः सहस्रशः साधकवर्गास्तत्र ग्रामंग्रामं हेमारविन्दोत्थरेणुवासिताम्भसि गाहंगाहं श्रीसर्वज्ञजिनेन्द्रप्रणोदीर्णं शासनं श्रावंश्रावं महाराजाधिराजाश्चापि सागरवाससं वसुधां वधूं च परित्यज्य करतलामलकवत् करगतकैवल्या अभूवन् ।

इत्थं श्रीचतुर्विंशतिजिनोत्तमानां शिष्याः प्रशिष्याश्च करगततत्त्वज्ञानकरवाला एभ्यो विहारेभ्यो दिग्विजयार्थं निर्गम्य प्राकृतजनान्तःसंचारिणामज्ञानपरिपन्थिनां छेदनं समूलं विधाय तत्स्थाने सुज्ञानजिनमुनीन् संस्थापयितुमारेभिरे । उत्तरोत्तरं जिनोत्तमानां परमो धर्मो नूनमासेतुहिमाचलमङ्कुरितः । ततोऽल्पेनैव कालेनानायासेनच सोऽङ्कुरो नित्यर्तुफलपुष्पैरलंकृतो महान् महीरुह एव संवृत्तः रोदसी आवृत्य संस्थितश्च । परित्यक्तसर्वस्वाश्चतुर्विंशतितीर्थकराः प्रतिप्रयाणमुपचीयमानश्राद्धसेनासमुदायेन जर्जरन्तो वसुन्धरां मेघगम्भीराभिरुपदेशवाग्भिः पूरयन्तोऽम्बरतलं जगदुद्धरणार्थं धरणीं प्रदक्षिणीकृत्यान्ते कण्ठीरवा इव वैकुण्ठमाक्रम्याकण्ठममृतं प्राश्नन्तोऽद्यापि तत्र भ्राजिष्णवस्तिष्ठन्ति ।

अहो धन्याः खलु जैनाः, यथा माता दुर्ललितानपि बालान् लालयति । अस्तत्पथवृत्तानपि करुणापूर्णकटाक्षैः संवीक्ष्य सद्बोधामृतं पाययति च तथैवैते वैराग्यसागरनिमज्जितात्मानोऽगण्यगुणराजिविराजमाना राकाशशाङ्कधवलद्युतिदीप्यमानमुखमण्डलाः केचिदाचार्यपुङ्गवा भवतां भवरोगपरिभवार्थं श्रीमच्चतुर्विंशतितीर्थकराणां स्तवनस्तोमान् सहृदयहृद्यान् तत्तच्छतकेषु व्यधासिषुः । परमेते सुगृहीतनामानः सूरिशिखामणयः कस्मिन् समये कतमं जनपदं जन्मभिर्भूषयांचक्रुरित्येतद् ज्ञातुं नैव शक्यते इतिहाससाधनसंपत्त्यभावात् । तथापि तेषां चारित्र्यपत्राणि केषांचिदलसानां निलयेषु गुर्जरदेशे जर्जरीभूतानि धूलिधूसरिताङ्गानि क्रिमिकीटकाखादिताक्षराणि सम्पेदिरे । भवतामभ्युदयाय मुनिश्रीमहाराजानामास्माराममहाराजप्रशिष्याणां गुरुवान्धवा मुनिश्रीचतुरविजयमहाभागाः खेटकग्रामनगरपुरपत्तनादिषु गेहंगेहं संचार्य जर्जरीभूतानि स्तोत्रपटलानि समासाद्य तान्ये-

कीकृत्य "स्तोत्रसमुच्चयः" इति नाम विधाय मुद्रणार्थं संप्रेषितवन्तः। एतेषां च ये स्वभवनगतानि स्तोत्राण्यर्पितवन्तस्तेषां चोपकारपरम्परास्मिन् जगतीतले सूर्याचन्द्रमसवत् सदैव सोज्वलं विजयतामित्याशास्यते।

अधुना स्तोत्रसमुच्चयगतानां श्लोकानां गुणधर्ममुद्दिश्य यथामति विवेचनं क्रियते। तत्र कानिचित् स्तोत्राणि संस्कृत, प्राकृत, शूरसेनी, मागधी, पैशाची, फारसीति षट्सु भाषासु सम्यग्ग्रथितानि। शब्दचित्रं, अर्थचित्रम्, शब्दाक्षरयमकम्, अनुलोमप्रतिलोमपादानीति चित्रविचित्ररचितानि, मुरज-गोमूत्रिका-सर्वतोभद्रेति बन्धाश्चापि तत्र तत्र रमणीयतया विराजन्ते।

"चमत्कृतिजनकत्वं वा लोकोत्तराह्लादकारकत्वं वा रसात्मकं वा काव्यं" इत्यादि काव्यशब्दानुशासनं काव्यालंकारधुरीणेन मम्मटमहाशयेन सर्वविश्रुते 'काव्यप्रकाश'ख्यालंकारशास्त्रे, पण्डितराजराजतिलकेन जगन्नाथेन च रसविद्गजयिनि 'रसगङ्गाधरे' च निदर्शितम्। तदनुसारेणात्रत्याः केचित् श्लोकाः श्रोतृनध्येतृंश्चापि विगलितवेद्यान्तारन् विधायानन्दैकरसे नूनमान्दोलयतीत्येतत्प्रत्याययितुमेकं श्लोकमुदाहरिष्येः—

कान्तं तवेश नयनद्वितयं विलोक्य
कारुण्यपूर्णपयसा भरितं सरोवत्।
मल्लोचने हरिणवच्चपले चिराय
सन्तोषपोषणमितां भवदाहतत्ते॥ १॥

एवमेव विभावानुभावस्थायीभावजा रसा अपि केषुचित् श्लोकेषु दृश्यन्ते। निम्नलिखितश्लोके प्रत्यक्षरदृग्गोचरीभवद्वीरो रसः, 'योधानां निष्कोषखड्गानां खणखणायमानध्वानैश्चाकर्णान्ताकृष्टानां धनुषां टणत्कारैश्च संकुलिते रणाङ्गणे वयं स्वयमेव वर्तामहे' इत्यनुभवमनुभावयत्यस्मान्।

तद्यथा—दोर्दण्डास्तगदाभिचूर्णितबृहन्मातङ्गकुम्भोच्छलत्
रक्तस्रोतसि खड्गलूनसुभटोघन्मुण्डखण्डावनौ।
नृत्यभव्यकबन्धभीषणतरे शस्त्राभिघातोद्धुरे
युद्धे ते स्मरणाद् वृणोति विजयश्रीः प्राणिनं देव सा॥

तथा च वीरजिनेन्द्रस्तवनारम्भे स्वयमेव ग्रन्थकर्त्रा प्रतिज्ञातम् ।

यथा— चित्रैः स्तोष्ये जिनं वीरं चित्रकृच्चरितं मुदा ।
प्रतिलोमानुलोमाद्यैः खड्गाद्यैश्चातिचारुभिः ॥

उदाहरणम्—"वन्दे मन्ददमन्देवं यः शमाययमाशयः ।
नायेनघघनायेना पाकृता ममताकृपा ॥"

एतत् श्लोकस्थं प्रतिपादमारम्भतो वान्ततो वा पठितमपि स एवार्थः सैव शब्द-रचना सम्पद्यते । एतादृशमदृष्टश्रुतपूर्वं स्तोत्रसमुच्चयं जैनजनितानुकम्पाः श्रीमदमरविजयमहाराजशिष्या मुनिचतुरविजयमहाभागाः श्रीमन्मुनिवर्येभ्यो राजविजयेभ्य उपायनीकृतवन्तः । तं ग्रन्थं मुम्बापुर्यां मुद्रणालयव्यपस्थापका रा. रा. रामचन्द्र यशवन्त शेडगे इति ख्याता निर्णयसागरमुद्रणालये मुद्रितवन्तः प्रकाशितवन्तश्च । तेषामुपकृतिं वारंवारं संस्मरामः ।

संवदितुं प्रत्यन्तराभावात् मानुषतासुलभप्रमादस्खलनाद्वास्मिन् स्तोत्रसमुच्चये यदि दोषाः स्युस्तान् ये केऽपि अस्मद्दृष्टिपथमानेष्यन्ति तान् सबहुमानं संस्मृत्य दोषान्नूतनावृत्तौ परिशोधयिष्यामः । इति शम् ।

नारायणिर्विठ्ठलोऽहं निवासी च हरिद्वने ।
विजापुरेऽस्य ग्रन्थस्य प्रस्तावं कृतवान् शुभम् ॥

# अनुक्रमणिका.



## द्वितीय भागः।

श्रीः

# स्तोत्रसमुच्चयः।

## मङ्गलस्तोत्रम्।

नित्ये श्रीभुवनाधिवासिभवनव्राते मणिद्योतिते
कोट्यः सप्त जिनौकसां द्विकयुता लक्षास्तथा सप्ततिः।
प्रत्येकं भवनादिषु प्रतिसभं स्तूपत्रयं शाश्वतं
तत्र श्रीऋषभादयो जिनवराः कुर्वन्तु वो मङ्गलम्॥ १॥
रम्ये व्यन्तरसत्कभौमनगरव्यूहे सुरत्नोज्वले
श्रीसिद्धायतनानि सन्ति गणनातीतानि चैत्यानि च।
तेभ्यः सङ्ख्यगुणानि चैत्यभवनान्यन्तः सदा ज्योतिषां
तत्र श्रीऋषभादयो जिनवराः कुर्वन्तु वो मङ्गलम्॥ २॥
सौधर्मादिविमानराजिषु तथा ग्रैवेयकाण्युत्तर-
स्वर्गेष्वस्ति सहस्रसप्तनवतिः शुद्धाश्रयोविंशतिः।
चैत्यानाममितश्चतुर्भिरधिकाशीतिश्च लक्षाः सदा
तत्र श्रीऋषभादयो जिनवराः कुर्वन्तु वो मङ्गलम्॥ ३॥
वैताढ्येषु शतं च सप्ततियुतं नित्यं तथा विंशति-
श्चैत्यानां गजदन्तकेषु नवतिः कुर्वद्रिपेषु स्थिताः।
त्रिंशद्वर्षधरेषु मेरुषु तथाशीतिश्च पञ्चाधिका-
तत्र श्रीऋषभादयो जिनवराः कुर्वन्तु वो मङ्गलम्॥ ४॥
प्रत्येकं रुचकेषु मानुषनगे चत्वारि सत्कुण्डले
चत्वार्यायतनानि सन्ति सततं सर्वेषुकाराद्रिषु।

वक्षस्कारगिरिष्वशीतिरनघा नन्दीश्वरे विंशति-
स्तत्र श्रीऋषभादयो जिनवराः कुर्वन्तु वो मङ्गलम् ॥ ५ ॥

वैताढ्ये रथनूपुरादिनगरस्तोमे विदेहेष्वपि
क्षेमादिर्नगरव्रजोऽस्ति भरतेऽयोध्या तथैरावते ।
सौर्यं कुण्डपुरं तथा गजपुरी चम्पा च वाणारसी
तत्र श्रीऋषभादयो जिनवराः कुर्वन्तु वो मङ्गलम् ॥ ६ ॥

अस्त्यानन्दपुरं फलर्द्धिनगरी श्रीसत्यनाम्ना पुरं
नासिक्यं भृगुकच्छमङ्गलपुरं सोपारकं विश्रुतम् ।
मोढेरं मथुराणहिल्लनगरं श्रीस्तम्भनं पावनं
तत्र श्रीऋषभादयो जिनवराः कुर्वन्तु वो मङ्गलम् ॥ ७ ॥

ख्यातोऽष्टापदपर्वतो गजपदः सम्मेतशैलाभिधो
वैभारः कनकाचलोऽर्बुदगिरिः श्रीचित्रकूटादिकः ।
श्रीमान् रैवतकः प्रसिद्धमहिमा शत्रुञ्जयो मण्डप-
स्तत्र श्रीऋषभादयो जिनवराः कुर्वन्तु वो मङ्गलम् ॥ ८ ॥

देवाः श्रीऋषभाजितप्रभृतयः श्रीपुण्डरीकादयः
श्रीमन्तो भरतेश्वरप्रभृतयः श्रीबाहुबल्यादयः ।
श्रीमद्रामयुधिष्ठिरप्रभृतयः प्रद्युम्नशाम्बादयः
श्रीमद्गौतममुख्यसाधुयतयः कुर्वन्तु वो मङ्गलम् ॥ ९ ॥

यस्मात्तीर्थमिदं प्रवृत्तिमगमत् श्रीमत्सुधर्मो गुरु-
र्धन्यो धन्यमुनिः सुकोशलमुनिः श्रीशालिभद्राभिधः ।
मेतार्योऽथ दृढप्रहारिसुयतिर्मेघो दशार्णाभिधः
श्रीश्रीमत्करकण्डुमुख्ययतयः कुर्वन्तु वो मङ्गलम् ॥ १० ॥

श्रीजम्बुः प्रभवप्रभुर्गतभवः शय्यंभवः श्रीयशो-
भद्राख्यः श्रुतकेवली च चरमः श्रीभद्रबाहुर्गुरुः ।
शीलस्वर्णकषोपलः सुविमलः श्रीस्थूलिभद्रः प्रभुः
सर्वेऽप्यार्यमहागिरिप्रभृतयः कुर्वन्तु वो मङ्गलम् ॥ ११ ॥

श्यामाचार्यसमुद्रमङ्गसहिताः श्रीभद्रगुप्तादयः
श्रीमान् सिंहगिरिस्तथा धनगिरिः स्वामी च वज्राभिधः ।
श्रीवीरो मुनिरार्यरक्षितगुरुः पुष्यो गुरुः स्कन्दिलः
श्रीदेवर्द्धिपुरस्सराः श्रुतधराः कुर्वन्तु वो मङ्गलम् ॥ १२ ॥

ब्राह्मी चन्दनबालिका भगवती राजीमती द्रौपदी
कौशल्या च मृगावती च सुलसा सीता सुभद्रा शिवा ।
कुन्ती शीलवती नलस्य दयिता चूला प्रभावत्यपि
पद्मावत्यपि सुन्दरी दिनमुखे कुर्वन्तु वो मङ्गलम् ॥ १३ ॥

तीतानागतवर्त्तमानविषयाः सर्वेऽपि तीर्थङ्कराः
सिद्धाः सूरिवराश्च वाचकवराः सर्वेऽपि सत्साधवः ।
धर्मः श्रीजिनपुङ्गवैर्निगदितो ज्ञानादिरत्नत्रयं
श्रीमन्तो जिनसिद्धसाध्वतिशयाः कुर्वन्तु वो मङ्गलम् ॥१४॥

शाश्वताशाश्वतान्येवं चैत्यानि पुरुषोत्तमाः ।
भवेभ्यो मङ्गलं दद्युः स्तुताः श्रीधर्मसूरिभिः ॥ १५ ॥

इति श्रीचैत्यस्तुतिस्तोत्रं समाप्तम् । लिपीकृतमिदममृत-
विजयेन सूर्यपुरस्थितेन जीवचन्दपठनार्थे सं. १८३९
चैत्र सुद ३ शुक्रवासरे ॥ कल्याणमस्तु ॥

---

## प्रतिपदसरस्वतीशब्दयमकमयं श्रीयुगादिजिनस्तवनम् ।

सदा चिदानन्दनिदानमद्वयं जगत्त्रयीत्राणधुरीणपद्द्वयम् ।
सरस्वतीतुष्टिकृते सरस्वतीपदार्थसार्थैः प्रथमं जिनं स्तुवे ॥ १ ॥

सरस्वतीलब्धवरावगाह्ये सरस्वतीवेश! तव स्तवे स्वाम् ।
सरस्वतीमेष परस्तवैकसरस्वतीर्णामपि तारयामि ॥ २ ॥

सरस्वतीमेकलकन्यकास्वःसरस्वतीसिन्धुमुखेषु मज्जन् ।
सरस्वतीष्वर्थयते न शुद्धिं सरस्वतीव स्तवने तवास्तान् ॥ ३ ॥

सरस्वतीमेत्य मनोरतीरं सरस्वतीत्यत्रिदशैः प्रभो! यत् ।
सरस्वतीतेषु दिनेषु दोग्धृसरस्वतीभिः स्नपितोऽसि वार्भिः ॥ ४ ॥

सरस्वतीनाथनिरस्य पाद्मसरस्वतीमम्बुजवासलीलाम् ।
सरस्वतीरुग्भिरुपैत् पदे वे सरस्वतीतार्त्तिरदोऽर्चको यत् ॥ ५ ॥

सरस्वतीपङ्क्तिरपि प्रदत्तसरस्वतीदुग्धसुधासुधात्वैः ।
सरस्वतीसद्धवलैः कृता च सरस्वतीर्थोद्भवगायति त्वाम् ॥ ६ ॥

सरस्वती पत्रभरैर्हरं मत्सरस्वतीर्घ्ये परिपूज्य पूर्वम् ।
सरस्वती त्वत्कुमुदोपमे वा सरस्वतीवापुषि वादहेतोः ॥ ७ ॥

सरस्वती पूजयते मयि त्वं सरस्वतीत्थं तव कर्त्तलाब्धे ।
सरस्वतीर्थङ्करकर्मभावं सरस्वतीव प्रकृते तथाऽस्य ॥ ८ ॥

सरस्वती यन्नयनेन वीक्ष्य सरस्वतीस्त्वय्यपि दुष्टकृताः ।
सरस्वती न क्षुधितस्य तस्य सरस्वतीतिश्च पिपासितस्य ॥ ९ ॥

---

१ मेखलकन्यका—नर्मदानदी ।

सर्वत्र सर्वज्ञपुरः सरस्वतीस्तवाङ्गभाग्भव्यपदे सरस्वतीम् ।
भजेत नक्तं दिनके सरस्वतीतयन्मुखात् श्रीघृतिभासरस्वती ॥ १० ॥
तनूमतां योऽभविभूसरस्वती तनस्तनूरत्नचकासरस्वती ।
न तत्र कर्त्तर्यपि मत्सरस्वतीर्थिकेरमीशस्य न भा सरस्वतीः ॥ ११ ॥
तनोति यः कश्चिदपासरस्वतीपूर्वस्थवर्णाननुतः सरस्वतीन् ।
त्वच्छासने सत्त्वियुक्सरस्वतीर्वधू भुनक्त्येष सुहा सरस्वती ॥ १२ ॥
यशस्ततिस्ते जगतीं सरस्वती पुनाति नेवः सुखवा सरस्वती ।
विधुं धरां चाभिसु वा सरस्वती कर्त्तुं च याक्तप्रतिमा सरस्वतीः १३
त्वं तीर्थप व्यत्ययतः सरस्वती वयुस्मृता श्रैरनिरा सरस्वती ।
ततोऽपि च त्वं वरदा सरस्वती वलाकभूमौ समवासरस्वतीः ॥१४॥
योऽनङ्गसौख्येन परा सरस्वतीनृपत्ययुग् रसूपदमुक्सरस्वतीम् ।
बध्नाति किं तर्हि परा सरस्वतीं ह्रियाऽन्यचित्ते विरमत्सरस्वतीः १५
कर्मोपराह्वाधरका सरस्वती रणक्रियापूर्वतवा सरस्वती ।
तया विना त्वां भुवि चेत्सरस्वती लिकादियोनौ बहुशो सरस्वतीः १६
स एव शस्यः परिवत्सरस्वती तपस्तपोऽन्यैर्यमत्सरस्वती ।
भव्याघहारेऽथ वधूसरस्वती नकादिपूज्य श्रितकेसरस्वतीः ॥ १७ ॥
क्रष्टुं नरैः किं हरिकेसरस्वतीप्सते यथांसे ह्यके सरस्वती ।
हन्तुं परेषामिव ते सरस्वती शाच्यस्य भान्यैर्न तथा सरस्वती ॥१८
सरस्वतीरव्रतशब्दपूर्वसरस्वतीमूलविधं विमुच्य ।
सरस्वतीक्ष्गं क्रमयामलं ते सरस्वती तं कलयन् श्रिया भूः ॥ १९ ॥
सरस्वतीदानवती द्विषत्कसरस्वतीवं त्वहते सृजेथः ।
सरस्वती सङ्गमनं जिनाग्रे सरस्वतीहेष न केवलस्त्वा ॥ २० ॥

सरस्वतीयप्रतिलोमसंवत् सरस्वतीकारितविश्वलोक ।
सरस्वती नाथ विहाय नन्दी सरस्वतीम्यत्तव पूजकोऽग्नी ॥ २१ ॥
सरस्वती कण्ठविभूषणा स सरस्वतीयन्मनसां नतानाम् ।
सरस्वतीनां गिरमेतदापे सरस्वतीर्व्याकरणाम्भसा यत् ॥ २२ ॥
सरस्वतीद्वीपसमीपवर्त्ति सरस्वती वारिधिपारनर्त्ति ।
सरस्वतीयँश्चरणं यशः सा सरस्वती भूसुराच्र्यतेऽदः ॥ २३ ॥
........ ........ ........ ।
........ ........ ........ ॥ २४ ॥
........ ........ ........ ।
........ ........ ........ ॥ २५ ॥
सरस्वतीत्रं भवमत्रमार्सीं सरस्वतीर्थे जलधाविव स्वम् ।
सरस्वती यां तव नेतरेषा सरस्वती मां ब्रुवतीव मूर्त्तिः ॥ २६ ॥
सरस्वतीपत्तननर्त्तकीर्त्तेः सरस्वतीबन्धुसमानमूर्त्तेः ।
सरस्वतीभ्रातृजसद्गुरोर्गीः सरस्वतीजस्य मयाऽङ्घ्रिभाजा ॥ २७ ॥
सरस्वतीति प्रकृतेर्भवो यः सरस्वतीति त्वदुवेदिशब्दः ।
सरस्वतीवर्णभृदित्यपुण्यसरस्वतीरः प्रणुतः स्तुतोऽर्हन् ॥ २८ ॥
भूनाभिक्षितिभृत्सनाभिमहिमश्रीनाभिभूपान्वय
श्रीमन्मौक्तिकरत्नशेखर शिवश्रीनामवामभ्रुवः ।
इत्थं नाथ मया विनीतमनसा नीतो नुतिं देहि चि-
ल्लक्ष्मीसागरसोमदेवमहितां चारित्ररत्नश्रियम् ॥ २९ ॥

इति श्रीप्रतिकाव्यपदचतुष्टयसरस्वतीशब्दयमकमयं श्रीयुगादिजिन-
स्तवनं कृतं महोपाध्यायाधिराजश्रीचारित्ररत्नगणिशिष्य पं०
जिनमाणिक्यगणिना । कल्याणमस्तु श्रीरस्तु श्रीः ।

## श्रीसोपारकस्तवनम् ।

श्रीसोपारकपत्तनावनी वामाक्षीकरकङ्कणप्रभम् ।
हृद्भक्त्या नवनाकिनायकं श्रीनाभेयजिनं स्तवीम्यहम् ॥ १ ॥
( [1]शुद्धविराट् )

गङ्गानदीप्रौढतटस्थितं यः सङ्ख्याति दक्षः सिकतासमूहम् ।
सङ्ख्यातिगान् सोऽपि गुणांस्त्वदीयान् वक्तुं न शक्नोति मनागपीह २
( [2]इन्द्रवज्रा )

तथाप्यहं जाड्यतमोभरेण स्वामिन्! निरुद्धान्तरलोचनश्रीः ।
त्वत्स्तोत्रनिर्माणपथे प्रवृत्तिं कुर्वेऽन्धयष्ट्याभविशिष्टभक्त्या ॥ ३ ॥
( [3]उपजातिः )

विमलाचलमेखलावनीस्थितसोपारकपत्तने पुरा ।
त्वयि जीवति भूरिराजभिः प्रतिमैषा तव पूजिता प्रभो! ॥ ४ ॥
( [4]प्रबोधिता )

आद्यतीर्थकर! भाग्यमद्य मे मेदुरं किल बभूव सत्त्वरम् ।
येन लोचनचकोरचन्द्रमा वीक्षितोऽसि भुवनाधिपो मया ॥ ५ ॥
( [5]रथोद्धता )

---

१ म्सौ ज्गौ शुद्धविराडिदं मतम्
ऽऽऽ ऽऽ। ऽ।ऽ ऽ वर्ण १० ।

२ स्यादिन्द्रवज्रा यदि तौ जगौ गः
ऽऽ। ऽऽ। ।ऽ। ऽऽ वर्ण ११ ।

३ अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।

४ विषमे ससजा गुरुः समे सभरा ल्गौ तु तदा प्रबोधिता ।
।।ऽ ।।ऽ ।ऽ। ऽ, ।।ऽ ऽ।। ऽ।ऽ ।ऽ
(विषमच्छन्दः) १० । ११ ।

५ राज्रौ लघुगुरू रथोद्धता
ऽ।ऽ ।।। ऽ।ऽ ।ऽ वर्ण ११ ।

नाभिमहीपतिवंशविशालाकाशविभासनभानुसमान ! ।
त्वं विधृतोऽसि विभो हृदये यैर्नाशमगादशिवं जिन ! तेषाम् ॥६॥
(दोधकं)

आदिदेव ! तव दर्शनमात्रात् पातकानि सकलानि जनानाम् ।
यान्ति शोषमिव गाढनिदाघादित्यतापविसरेण सरांसि ॥ ७ ॥
(स्वागता)

स्वामिन् पूजां विदधति तव ये भास्वद्भक्त्या नवनवकुसुमैः ।
आश्रीयन्ते त्रिभुवनविभवैस्ते पुष्पौघैरिव तरुनिवहाः ॥ ८ ॥
(भ्रमरविलसितम्)

संसारविकारविनाशविधौ हृद्यौषधसोदरवाक्यभरः ।
जीयाज्जिननायक विश्वविभो त्रैलोक्यजनावलिवन्द्यपदः ॥ ९ ॥
(मोटनकम्)

ध्यायन्ति त्वां नाभिसूनो नरा ये
श्रीसोपाराधीश्वरं भक्तियुक्ताः ।
तेषां न स्यान्मानवानां कदाचि-
दुःखं तिर्यङ् नारकाणां भवोत्थम् ॥ १० ॥
(शालिनी)

---

१ दोधकमुक्तमिदं भभभाद्गौ
⌢ – – ⌢ – – ⌢ – ⌢ – ⌢ वर्ण ११ ।
२ स्वागतेति रनभाद्गुरुयुग्मम्
⌢ – ⌢ – – – ⌢ – – ⌢ ⌢ वर्ण ११ ।
३ मभौ न्लौ गः स्याद्भ्रमरविलसितम्
⌢ ⌢ ⌢ ⌢ – – – – – – ⌢ वर्ण ११ ।
४ तो जौ लगुरू यदि मोटनकम्
⌢ ⌢ – – ⌢ – – ⌢ – – ⌢ वर्ण ११ ।
५ वेदैश्छिन्ना शालिनी मस्ततौ गौ
⌢ ⌢ ⌢ ⌢ ⌢ – ⌢ ⌢ – ⌢ ⌢ वर्ण ११ ।

शिवसौख्यरमावर! नाभिनृपोज्ज्वलवंशविभूषण! पापहर!।
संवीक्ष्य तवाननशीतकरं मुमुदे जननेत्रचकोरगणः ॥ ११ ॥
( तोटकम् )

त्वच्चैत्याद्भुतपादपस्य चरितं वृन्दारदेवासुर–
श्रेणीमानवतिर्यगातपभरप्रध्वंसरूपं प्रभो! ।
श्रुत्वा किं तरवोऽधुनाऽपि कदलीसन्नालिकेर्यादयः
पार्श्वे ते प्रथयन्ति सज्जनव्रातापापनोदं सदा! ॥ १२ ॥
( शार्दूलविक्रीडितम् )

चम्पकाशोककुन्दादयः पादपा
नाथ! नाकिप्रमुक्तप्रसूनावलिम् ।
वीक्ष्य किं पुष्पवृष्टिं वितन्वन्ति ते
सर्वतः सारसौरभ्यविभ्राजिताम् ॥ १३ ॥
( स्रग्विणी )

चैत्याद्भुतप्रतिरवं तव सेवनाविधौ
संप्राप्तनिर्जरनरादिकशब्दसम्भवम् ।
श्रुत्वेतितर्कमनिशं रचयन्ति केऽप्यहो
स्वामी किमेष वदति स्फुटसर्वभाषया ॥ १४ ॥
( मृदङ्गकम् )

---

१ इह तोटकमम्बुधिसैः प्रथितम्

⏑⏑– ⏑⏑– ⏑⏑– ⏑⏑– वर्ण १२।

२ सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्

––– ⏑⏑– ⏑–⏑ ⏑⏑– ––⏑ ––⏑ – वर्ण १९।

३ रैश्चतुर्भिर्युता स्रग्विणी सम्मता

–⏑– –⏑– –⏑– –⏑– वर्ण १२।

४ प्रोक्तं मृदङ्गकमिदं तभजा जरौ यदा ।

––⏑ –⏑⏑ ⏑–⏑ ⏑–⏑ –⏑–

यद्‌र्चा दृरीदृश्यते श्वेतवर्णा विभो! तावकीनाऽपि हेमाङ्गकान्ते!।
मृगाङ्कोज्ज्वलानां महाचामराणां प्रभामण्डलं केवलं तत्र हेतुः ॥१५॥

(भुजङ्गप्रयातम्)

तव जिनेन्द्र! मृगाधिपविष्टरं मणिमयं त्रिदशैर्विहितं यदा।
इह तदा जलधिः किल भक्तितो निजवसून्यपि दातुमुपाययौ ॥१६॥

(द्रुतविलम्बितम्।)

दिवसोद्गमे च तव पृष्ठिगतं रविमण्डलं जिनपते! विमलम्।
अधुनाऽपि मुग्धमनुजेष्वनिशं द्युतिमण्डलभ्रममिहातनुते ॥ १७ ॥

(प्रमिताक्षरा)

बलानकस्थैरधुनाऽपि मानवैः समुद्रकल्लोलसमुद्भवं रवम्।
निशम्य शङ्का क्रियते जगद्विभो! परिस्फुरद्दुन्दुभिनादसम्भवा ॥१८॥

(वंशस्थम्)

जिनेन्द्र! विश्वत्रयवत्सलत्वात् किल त्वया दूरितदण्डमीश!।
त्रिमण्डपस्य च्छलतः पवित्रं तवाऽऽतपत्रत्रितयं चकास्ति ॥ १९ ॥

(उपेन्द्रवज्रा)

---

१ भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः
ऽऽ ऽऽ ऽऽ ऽऽ वर्ण १२।

२ द्रुतविलम्बितमाह नभौ भरौ
वर्ण १२।

३ प्रमिताक्षरा सजससैर्गदिता
वर्ण १२।

४ वदन्ति वंशस्थमिदं जतौ जरौ
वर्ण १२।

५ उपेन्द्रवज्रा जतजा गयुग्मम्
वर्ण ११

श्रीकुङ्कणप्रवरदेशविभूषणेऽस्मिन् सोपारकाह्वनगरे तव वीतराग ! ।
इत्थं सदापि विबुधैः परिगीयमाना सत्प्रातिहार्यकमला वरिवर्त्ति सर्वा

(सिंहोद्धता)

जिनवर ! भवदग्रे मन्त्रिभण्डारिकस्य
त्रिदशपथविलग्नप्रौढचैत्यच्छलेन ।
गुरुमणिमयकेतुः स्वीयचञ्चत्प्रभाभिः
प्रतिहतदिननाथः किं विराराष्टि शश्वत् ॥ २१ ॥

(मालिनी)

नागेन्द्रप्रमुखगणेशमूर्त्तिदम्भात्
श्रीदानप्रभृतिवृषाणि मूर्त्तिमन्ति ।
श्रीनाभिक्षितिपसुत ! प्रभो ! पुरस्ते
प्रासादे ऋषभ ! विभो ! विभान्ति किन्तु ॥ २२ ॥

(प्रहर्षिणी)

प्रभो ! षड्गव्यूतप्रपतितमहज्जीवशटित-
प्रभूताङ्गश्रेण्यां पतति न कदाचित् कृमिकुलम् ।
तथा विण्मूत्राऽम्भश्छगणनिचये जीवनिवहः
प्रभावात् स्वामिंस्ते सकलजनताचित्रकरतः ॥ २३ ॥

(शिखरिणी)

---

१ सिंहोद्धतेति गदिता तभजा जगौ गः
ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ ऽ  वर्ण १४ ।

२ ननमयययुतेयं मालिनी भोगिलोकैः
। । । । । । ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ  वर्ण १५ ।

३ त्रिच्छेदा मनजरगैः प्रहर्षिणीयं
ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ  वर्ण १३ ।

४ रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी
। ऽ ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । । । ऽ  वर्ण १७ ।

भविककमलवनदिनकरकरणो
प्रशमरशमरसविनिसृतहृदयः ।
हिमकरसममुखविदलितमदनो
भवदवनवघन ! जय जय जिनप ! ॥ २४ ॥
(मणिगुणनिकरः)

प्रथमजिनेश्वरः प्रथममेदिनीपतिस्त्वं,
प्रथममहाव्रती प्रथमलब्धकेवलश्रीः ।
ऋषभ ! मुदा नतत्रिदशनाथसेव्यमानो
जय विजितेन्द्रियोत्कटहयेन्दुमण्डलास्यः ॥ २५ ॥
(वाणिनी)

जिनेन्द्र ! तव शासनं भविककोकमालारविं
भवाब्धितरणे तरिं भजति यो जनः सादरम् ।
मनोरमरमाततिः भयति तं समुत्कण्ठिता
द्रुतं जलनिधिं यथा सकलमेदिनीसिन्धवः ॥ २६ ॥
(पृथ्वी)

शमरससुधामग्ने नेत्रे सुधाकरसन्निभं
वदनममलं शखैर्हीनौ करौ वरविग्रहम् ।
अपरमपि ते सौम्याकारं विलोक्य जनावली
त्यजति सकलं मिथ्यात्वं श्रीजिनेन्द्र कुदेवजम् ॥ २७ ॥
(हरिणी)

---

१ वसुमुनियतिरिह मणिगणनिकरः (४ नगण–१ सगण)
वर्ण १५।
२ नजभजतैः सदा भवति वाणिनी गान्वितैः
वर्ण १५।
३ जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुः
वर्ण १७।
४ नसमरसला गः षड् वेदैर्यैतो हरिणी मता
वर्ण १७।

प्रभो! त्वत्पूजार्थं विरचयति विधिः कुङ्कुणाह्वानदेशे
सदाऽप्यस्मिन् जातीकुमुदकजलसत्केतकीचम्पकाद्यैः ।
प्रसूनैः सम्पूर्णां विपुलवनततिं ते यथा ढौकनार्थं
महाभक्त्या युक्तो विविधफलभरं दुर्लभं विश्वमध्ये ॥२८॥

(शोभा)

देव! त्वां ये त्रिसन्ध्यं परिमलबहुलैर्जात्यादिकुसुमै-
र्भक्त्या कुर्वन्ति पूजां प्रथमजिनपते कारुण्यजलधे ।
आश्लिष्यन्ते सदा ते धृतिमतिकमलासौभाग्यविभवै-
र्हस्तीन्द्रा दानमत्ता इव बहुमधुपैर्झङ्कारसुभगैः ॥ २९ ॥

(सुवदना)

रागद्वेषप्रभवमपहरेत् पापपूरं समस्तं
भव्यानां ते पदकमलयुगप्रेक्षणं देव! सद्यः ।
श्रीमन्नाभिक्षितिपकुलरमाभालभूषाललामा
दित्या लोकः किमु तिमिरभरं नाशयेन्न क्षमायाम्? ॥ ३० ॥

(चन्द्रलेखा)

---

१ रसाश्वर्षिंच्छिन्ना यदि यमननता जो गुरू विद्धि शोभाम्

-⌒⌒ ⌒⌒⌒ --- --- ⌒⌒- -⌒- ⌒⌒

२ ज्ञेया सप्ताश्वषड्भिर्मरभनययुतौ भ्लौ गः सुवदना

भगण रगण भगण नगण यगण भगण ल०गु०

⌒⌒⌒ ⌒-⌒ ⌒--- --- -⌒⌒ ⌒-- -⌒ वर्ण २०।

३ म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा

मगण रगण मगण यगण यगण

⌒⌒⌒ ⌒-⌒ ⌒⌒⌒ -⌒⌒ -⌒⌒ वर्ण १५।

याचे स्वामिन्न धननिकरं नैव भूमीपतित्वं
नो चक्रित्वं न सुरपतितां नो महानन्दलक्ष्मीम् ।
आसंसारं तव पदकमलासेवनं किन्तु नित्यं
दद्यास्त्वं मे त्रिभुवनविभो! त्वामिति प्रार्थयेऽहम् ॥ ३१ ॥

( मन्दाक्रान्ता )

एवं श्रीकुङ्कुणाख्यप्रवरतरमहादेशमध्यप्रतिष्ठ-
श्रीमत्सोपारकाह्वाऽद्भुतनगररमाकण्ठहारोपमं त्वाम् ।
सद्भक्त्या ये स्तुवन्ति प्रथमजिनपते! ते रयात् प्राप्नुवन्ति
प्रौढं षट्खण्डराज्यं सुरपतिविभवं मोक्षलक्ष्मीं क्रमेण ॥३२॥

( स्रग्धरा )

॥ इति श्रीसोपारकस्तवनम् ॥

---

## अर्बुदमण्डनऋषभनेमिजिनस्तवनम् ।

श्रीमच्चम्पकमुख्यपुष्पनिकरैरावासिताऽऽशामुखे
माकन्दादिवनोद्भवैः फलभरैरानन्द्यमानावनौ ।
भास्वत्कुण्डसरोनदीगतजले श्रीअर्बुदे भूधरे
श्रीनाभेयजिनं तवो जिनपतिं श्रीनेमिनं च स्तुवे ॥ १ ॥

---

१ मन्दाक्रान्ता मभनततगा गो यतिर्वेदषड्भिः

म म न त त गु गु

वर्ण १७।

२ विज्ञेया स्रग्धराऽसौ मरभनययया वाहसप्तर्षिभिश्च

न स्वर्नाथगुरुर्न दानवगुरुर्नो भारती देवता
स्तोतुं यान् प्रभवो न ते गुणगणांस्तेषु स्पृहा मे विभो ।
तन्नाभेयजिनाऽल्पमेधसममी लोका हसिष्यन्ति मां
युक्तायुक्तविचारकुम्र तरलीभूतोऽथवा भक्तितः ॥ २ ॥
पत्रं व्योम मषी महाम्बुधिसरित्कुल्यादिकानां जलं
लेखिन्यः सुरभूरुहाः सुरगणास्ते लेखितारः समे ।
आयुः सागरकोटयो बहुतराः स्युश्चेत्तथापि प्रभो !
नैकस्यापि गुणस्य ते जिन! भवेत् सामस्त्यतो लेखनम् ॥३॥
मोहान्धकारहरणे तरणे ! त्रिलोकी
भूषामणे ! गतरणेऽस्तु मदीयचित्तम् ।
सौख्येन्दिरेकवरणे करुणेश! लीनं
स्वामिंस्त्वदीयचरणे धरणे गुणानाम् ॥ ४ ॥
भ्रान्तः परेषु सुरभूमिधरेषु पुण्य-
चिन्तामणिः किमुत नाथ! मया न लेभे ।
त्वां रोहणाद्रिमथ देव ! समागतोऽत-
स्तद्दानतो जिनपते ! तु गृहाण सद्यः ॥ ५ ॥
श्रीमद्गौर्जरभीमदेवनृपतिर्धन्यः प्रधानाग्रणीः
प्राग्वाटान्वयमण्डनं स विमलो मन्त्री सुतेऽप्यस्पृहः ।
योऽष्टाशीत्यधिके सहस्रगणिते संवत्सरे वैक्रमे
त्वत्प्रासादमचीकरच्छशिरुचिं श्रीअम्बिकादेशतः ॥ ६ ॥
स्वामिन् ! दृशोरमृतवृष्टिसमां त्वदीयां
मूर्त्ति कषोपलमयीं प्रविलोक्य नेमे ।

भव्याङ्गिनां प्रमदमेदुरमानसानां
तापः प्रयाति सकलोऽपि भवभ्रमोत्थः ॥ ७ ॥

निद्रायां समवेक्ष्य भोजनतया या प्राप्तवान् मे प्रियो
नूनं मद्विरहादिति स्फुटभवद्रागव्यथोन्मन्थता ।
त्वां संभुज्य मनाग् बभूव सुखिनी साक्षात्समागत्य तां
प्रीणीहीति तदालिवाचि विमुखः श्लाघ्यस्त्वमेव प्रभो ! ॥८॥

---

॥ इत्याद्यरसस्याऽऽद्यो भेदः ॥

त्वत्सङ्गमो मम यदा भविता तदेव
श्लाघ्यं दिनं सकलमप्यपरं वृथैव ।
एवं वियोगमयवाचि जिनेन्द्र ! राजी-
मत्यां विरागहृदसीति न कस्य वर्ण्यम् ॥ ९ ॥
( अभिलाषविप्रलम्भः )

मुक्ता या भवताऽतिनिर्दयमसौ राजीमती प्रोद्भवन्-
मानात् त्वत्सविधेऽपि नाऽगमदियत्कालान्मुने ! साऽधुना ।
त्वामाकारयते नु सादरमिति प्रोक्तोऽपि तस्याः सखी-
वृन्दैरार्द्रमना मनागपि विभो ! जातो न चित्रं महत् ॥ १० ॥
( मानविप्रलम्भः )

संप्राप्ते त्वयि रैवते विरहती नाथोग्रसेनात्मजा
कण्ठाभ्यन्तरघोलनाऽतिमधुरं गीतं तथेयं जगौ ।
यद्वृत्ते पशुपक्षिणोऽपि भगवन् सार्द्रा बभूवुः क्षणात्
श्रुत्वाऽदोऽपि न दुःखितस्त्वमसि तत् श्रीवीतरागो ध्रुवम् ११
( प्रवासविप्रलम्भः )

काश्चिद्दुर्भगभामिनीह भगवंस्त्यक्ताऽपि भर्त्रा सदा
त्वामाराध्य सुवर्णसोदररुची रम्भेव रूपश्रिया ।
जाता सा स्वगृहं गता पतिरथो तस्या रमागादियं
मद्भाग्यादिति तत्पदोर्निपतितः कैर्नाम नाऽहस्यत? १२
(हास्यः)

दृष्ट्वाऽवैरतिभीषणान् नृपनरान् सर्वाङ्गकम्पाकुला-
ऽनाच्छाद्याऽऽत्मशिशूनसूनव जिनेत्याक्रन्दतो मूर्च्छितः ।
नानापक्षिपशून् निरीक्ष्य भगवन्! जाता कृपा ते तथा
मुक्त्वा तानपरेऽङ्गिनोऽपि भवता दुःखाद्यथा मोचिताः १३
(करुणा)

दोर्दण्डात्तगदाभिचूर्णितबृहन्मातङ्गकुम्भोच्छल-
द्रक्तस्रोतसि खड्गलूनसुभटोद्यन्मुण्डचण्डावनौ ।
नृत्यभव्यकबन्धभीषणतरे शस्त्राभिघातोद्धुरे
युद्धे ते स्मरणाद् वृणोति विजयश्रीः प्राणिनं देव! सा १४
(रौद्रः)

सर्वे स्थावरजङ्गमास्त्रिभुवनान्तर्वर्तिनो जन्तवः
स्युः सौख्यैकमया मया यदि समाविर्भाव्यते शासनम् ।
ध्यात्वेत्थं गुरुगर्जितेभतुरगश्रेणी मणीबन्धुरं
तद्राज्यं भगवन्! जरत्तृणमिव त्यक्त्वा त्वयात्तं व्रतम् १५
(धर्मवीरः)

नानाप्रकारमणिमौक्तिकहाटकानां
कोटीर्यथेष्टमनृणीकृतविश्वविश्वः ।
अर्थिव्रजे त्वयि वदत्यविराममेव
जज्ञे सदैव धनदोऽपि मदोज्झितः स्नाक् ॥ १६ ॥
(दानवीरः)

आकर्णान्तनिकृष्टदुर्धरधनुर्दण्डप्रचण्डायुध-
श्रेणीभीषणमुद्भटव्यतिकटद्भुटत्कण्टकं सङ्गरे ।
लक्षं दक्षमहीभुजामभिसमायादेव देवाऽभव-
द्वीरव्रातशिरोमणे भुजमहो दृष्ट्वैव ते निर्मदम् ॥ १७ ॥

( युद्धवीरः )

शङ्खे त्वत्परिपूरिते त्रिभुवनक्षोभप्रदे कोऽप्ययं
मत्तोऽपि प्रबलो बभूव भरते राज्यं ध्रुवं यास्यति ।
इत्युद्भूतभियाकुलः परिगलत्प्रस्वेदबिन्दुर्भव
द्रोमाञ्चः क्षणमात्रमत्र हरिरप्यासीत् त्रिलोकीपते ! ॥१८॥

( भयानकः )

वर्चोमूत्रमुखस्रवन्मलनवस्रोतःश्रिते प्रस्फुरद्दुर्गन्धा-
स्थिशिरोरुकीकसरसासृक्चर्मभिः पिच्छिले ।
देहेऽभ्यन्तरसञ्चरत्कृमिकुले मुह्यन्तु मा प्राणिनः
श्रुत्वैतद्वचनं जिनेन्द्र ! भवतो नैके जनाः प्राव्रजन् ॥१९॥

( बीभत्सः )

यश्चाणूरमपाकरोद्रिपुजरासन्धं स्म विध्वंसते
कंसं भ्रंशितवानरिष्टमपिनट् मब्वादिकांश्चाऽवधीत् ।
बाह्वोः कोटिशिलां दधार धरणीपीठात् समुत्क्षिप्य तां,
स्वामिन् ! सोऽपि हरि त्वयेह हरिवद् दोःपादपेऽन्दोलितः २०

( अद्भुतः )

प्राकारत्रितये सुरैर्विरचिते ज्ञानोद्भवे ते विभो !
रम्भारम्भितनाटकेति झटिति प्राचीकटत् कौतुकम् ।
अङ्गुल्यग्रतटे शतं करटिनां तेषां शिरस्स्वामरं
भूभ्रं तत्र च दुग्धवारिधिमुखान् सप्तापि वारांनिधीन् ॥२१॥

( अद्भुतो रसः )

योगीन्द्रं समशत्रुमित्रमचलध्यानाधिरूढं जग-
न्मैत्रीभावमुपागतं जिनपते ! त्वां वीक्ष्य साक्षाद्वने ।
ते हर्यक्षतरक्षुभोगिशरभव्याघ्रादयो दुर्धराः
क्रूरा अप्यभवन् गजादिषु गलत्क्रोधानुबन्धाः क्षणात् २२
( शान्तः )

स्वामिन् शान्तरसाधिपे विनिहितेऽन्तश्चित्तमूषं ज्वलत्
शुक्लध्यानतनूनपाति समिधीभूतेषु दुःकर्मसु ।
नागं ज्ञानचतुष्टयं समभवत्ते केवलं हाटकं
येनाऽस्मिन् भुवनेऽप्यजायत जने दौस्थ्यस्य दौस्थ्यं महत् २३
( शान्तः )

तेजःपाल इति प्रसिद्धसचिवः श्रीगूर्जराधीशितुः
श्लाघ्यः कस्य न निर्मलैर्गुणगणैः श्रीवस्तुपालानुजः ।
यः श्रीविक्रमतोऽष्ट(१२८८)मङ्गलकरोर्वीसम्मिते वत्सरे
निर्मातिस्म तवेश ! विस्मयकरं प्रासादमुच्चैस्तरम् ॥ २४ ॥

श्रीनाभेः कुलमण्डन ! त्रिजगतीहारादिदेव ! प्रभो !
श्रीधर्मामृतसोमसुन्दरगुरो ! स्वर्भूर्भुवोवन्दितः ।
श्रीनेमेऽर्बुदभूधरे त्रिजगतीसङ्कल्पकल्पद्रुमः
स्वामिंस्त्वं भव सर्वदापि भवने श्रेयोऽभिवृद्धिश्रिये ॥ २५ ॥

इति श्रीअर्बुदमण्डनश्रीयुगादिदेवश्रीनेमिनाथस्तवनं
श्रीभुवनसुन्दरसूरिकृतम् ॥

---

ॐ नमः ।

## युगादिजिनस्तवम् ।

ॐकारः सकलत्रिलोककमलास्वीकारलीलाविधौ
ह्रींकारः कलिकालकल्मषमलप्रक्षालनाकर्मणि ।

सत्यङ्कार उरुप्रसिद्धमहिमश्रीमत्परब्रह्मणः
श्रीनाभेयजिनेश्वर क्रमनमस्कारः श्रिये स्तान्मम ॥ १ ॥
सच्चारित्ररमा विवाहसमये यद्देहगेहाङ्गणे
वंशप्रांशुभुजाग्रजाग्रदतुलस्कन्धद्वयव्यापिनी ।
यत्ते मङ्गलकृन्नवाङ्कुरयवश्रेणीव वेणी जटा
स श्रीनाभिभवः श्रियेऽस्तु विभवः संप्राप्तसद्वैभवः ॥ २ ॥
शुक्लध्यानजलैः शशाङ्कविमलैर्मुक्तार्गलैः शीतलै-
राकण्ठं परिपूरितात् प्रतिदिशं यन्मानसान्मानसात् ।
कल्लेवर्हि·····रुज्झिता शितितरा रेजे रजःशैवल-
श्रेणीवांसजटा स टालयतु वो विघ्नान् युगादीश्वरः ॥ ३ ॥
यस्यान्तःकरणाम्बुजान्मुकुलितान्मायातमायाविशा-
दिव्यज्ञानसहस्रदीधितिकरप्राग्भारविस्मेरीतान् ।
मिथ्यानल्पविकल्पकोटिपटलीभृङ्गावलीवाद्ययौ
स्कन्धालम्बिजटाच्छलेन ऋषभः सोऽस्तु श्रिये भाविनाम् ४
सन्धिं कारयितुं यदीयवचसा पीयूषयूषस्य किं ?
माधुर्येण निराकृतस्य भयतः पातालमासेदुषः ।
तत्कुण्डाधिकृताः फणाभृत इमे प्राप्ता जटाकैतवात्
कर्णाभ्यर्णमसौ स सौख्यमखिलं देयाद्युगादीश्वरः ॥ ५ ॥
श्रीमद्भिर्भुवनानि भासुरतरैस्तेजोभिराभासयन्
श्रीनाभेः कुलदीप उत्तमगुणस्थानैकपात्रे स्थितः ।
दग्धानङ्गपतङ्ग उज्ज्वलदिशासङ्गः सुरङ्गज्जटा-
प्रोद्भीद्राञ्जनरेख एष ऋषभस्तत्त्वप्रकाशी द्रुषः ॥ ६ ॥

स्वामिन् ! मां निष्कलङ्कां परिहरसि किमु स्नेहलां कर्तुमेवं
विज्ञप्तिं राज्यलक्ष्म्याऽनुनयनिपुणया दूतिके प्रेषिते किम् ? ।
दीक्षायां यस्य शर्[1]श्रुतितटजटयोः कैतवाद्वैतदम्भात्
स श्रीनाभेयदेवः प्रथयतु भवतां संहतीरीहितानाम् ।। ७ ।।
यद्वक्त्रेण जिता पयोजपटली नंष्ट्वाऽम्बुदुर्गे श्रिता
तत्रापि व्यथिता मरालविहगैः कीर्तेः सुहृद्भिस्ततः ।
तन्मा····ऽम्बुजिनीव संधिविधये यत्पृष्ठिलग्नाऽभ्रमत्
प्रेङ्खत्कुन्तलमालिकाकपटतः सोऽस्तु श्रिये नाभिभूः ।।८।।
स्वामिंस्त्वन्मुखमत्सरान्मम पतिर्जातः कलङ्की ततः
कारुण्यैकनिधे ! प्रसीद न पुनः सेर्ष्यो भविष्यत्यसौ ।
कर्णाभ्यर्णमिवाययाविति तमी विज्ञिप्सुरिन्दुप्रिया-
व्याजात् स्कन्धजटावलेः स भवतां श्रीआदिदेवः श्रिये ।।९।।
सौभाग्यैकनिधिर्जरोपधिलुलच्छ्रीलालिमालोदधि-
र्दारिद्र्यप्रलयः प्रभारुणनखप्रेङ्खत्प्रवालालयः ।
निर्वाणैकफलः कराङ्गुलिदलश्च्छायाश्रिया मांसलः
कल्पद्रुर्वृषभः करोतु स शुभश्रेणीं सुवर्णप्रभः ।। १० ।।
उद्यद्ध्यानदवानलोच्छलदुरुज्वालावलीप्रज्वलत्-
दुर्वारस्मररागरोगविषयाऽहङ्कारकान्तारतः ।
धूमश्रेणिरुदुल्ललास किमसौ यन्मौलिदेशे जटा-
व्याजेन त्रिजगत्प्रभुः स जयतात् श्रीआदितीर्थङ्करः ।।११।।
यस्मिन् श्रीसदने विभावि भुजयोर्युग्मं बृहत्तोरणं
स्तम्भद्वन्द्वनिभं सपूर्णकलशं पीनांसयोर्दम्भतः ।

---

१ शस्य—बालको तृणे ।

खेलत्केकिकलं तदूर्ध्वमतुलं रेजे जटामण्डलं
देवः सेवकवत्सलः स जयताच्छ्रीमारुदेवश्चिरम् ॥ १२ ॥
धर्मद्रोहणलम्पटं जितवतोर्मोहं जगत्कण्टकं
स्वामभ्यर्णमवाप्तयोः सबलयोः सुध्यानयोर्वीरयोः ।
मुक्तेः खड्गलते इव प्रबभतुर्यत्के जटासन्तती
स श्रीआदिजिनस्तनोतु विजयं स्वर्भूर्भुवोनायकः ॥ १३ ॥
सोल्लासं परिरब्धयोः सुचरणज्ञानश्रियोः सन्ततं
दिव्यन्नीलमणीघृणीविलुलिते········वेणीदृशोः ।
यस्यांसस्थलयोर्विलोलनलिनीनीलीदलश्यामले
भ्रातः कुन्तलमालिके स जयतु श्रीनाभिजन्मा जिनः ॥१४॥
नाभेः सम्भवमाप पापशमनः स्रष्टा च वेदस्थितेः
संप्राप्तः परमेष्ठिनां वरचतुर्वर्णव्यवस्थाकरः ।
यो ब्रह्मा जनकश्चतुर्मुखधरः स ब्रह्मरूपः सतां
लोलन्नीलजटावलिः कलिमलं भिन्द्याद्युगादीश्वरः ॥ १५ ॥
शुक्लध्यानानलेन प्रसृमरमहसा देहमूषान्तराले
जीवद्रव्यात् सुवर्णादतिमलिनतमाद्यैश्च सन्ताप्यमानात् ।
रागद्वेषादिकिट्टिप्रकर इव बहिः कुन्तलालीछलेन
जातः सज्जातरूपद्युति ऋषभजिनः स श्रिये भूर्भुवःस्वः ॥ १६ ॥
स्पर्द्धा सार्द्धं त्वया यत्प्रतिहतमितिमिर्निर्मिता कल्पवृक्षै-
र्हानिस्तेषां ततोऽभूद्भुवि भवति शुभं स्पर्द्धया किं महद्भिः ।
स्वामिंस्तेभ्यः प्रसीद त्वमिति कथयतुं तत्प्रियाकल्पवल्ल्यः
प्रापुर्दम्भाज्जटानामुपयदमृषभः श्रेयसे वः स भूयात् ॥१७॥
······युगलस्वभावसरले लावण्यपुण्यामृता-
यस्य प्राणिगणैः स्वलोचनपुटैः पेपीयमानात्स्ववा ।

तद्बिन्दुप्रकरैः पतद्भिरुदगुर्दूर्वाङ्कुरा अंशयो-
लोलत्कुन्तलकैतवात् स भवताच्छ्रीनाभिभूर्भूतये ॥ १८ ॥
सौभाग्यैकनिधानयोर्नयनयोर्यस्य प्रशस्यश्रियो
रक्षाधानकृतावधानमुरुगद्वन्द्वं घनश्यामलम् ।
पीनस्कन्धतरा विलम्बितजटाव्याजात्तनु भ्राजते
श्रेयः श्रेयगुणाश्रयः स वृषभस्तन्यात् सुभव्यात्मनाम् ॥१९॥
चक्रेऽस्माभिस्त्वदीये नहि खलु विषयग्रामभङ्गादिराज्ये
तस्मात् कस्मादकस्मात् प्रभुरधिगतवानस्मदुच्छेदकर्त्रीम् ।
दीक्षामेतामितीवाऽनुनयनविधये मोहराजस्य दूतो
यत्कर्णाभ्यर्णमाप्तौ चिकुरततिमिषात् स श्रिये नाभिसूनुः २०
पावित्र्योज्ज्वलतादिकान् गुणगणान् गङ्गापगाया इव
त्वं मह्यं जिन ! देहिदेहिपटलीवाञ्छासुपर्वद्रुम ।
एवं प्रार्थनयेव सूर्यतनया यस्याऽन्तिकं सङ्गता
दम्भात्कुन्तलसन्ततेः स तनुतां श्रीआदिदेवः श्रियम् ॥२१॥
सम्यग्ज्ञानसमुज्ज्वलस्थिरजलः सत्कज्जलश्यामलो-
न्मीलत्कुन्तलपारिजातकदलप्रोल्लासितांसस्थलः ।
कल्याणद्युतिमञ्जुलः पथि दृशोः प्राप्तः फलन्मङ्गल-
श्रेणीभिर्वृषभः स पूर्णकलशः सौख्यानि पुष्णातु वः ॥२२॥
यस्यास्येन्दुमरीचिवीचिनिचयैरत्युल्लसद्भिः पुरो
द्वैधीभावमवापितेव तमसां श्रेणी स्थिता पार्श्वयोः ।
नीलीश्यामलकान्तिमांसलकलस्फूर्जज्जटायामल
घाज्यात्सोऽस्यतु नाभिभूर्जिनपतिर्मन्मानसात्तानसम् ॥२३॥
गाङ्गेयच्छायकर्णद्वयरुचिररुचिप्रेङ्खदैरम्मदश्री-
दन्तज्योतिर्बलाकाविततिपरिगता मेघमाला विशाला ।

व्याख्या गम्भीरनादैरिव सपदि जिता कुन्तलालीछलेन
प्राप्ता यत्सेवनार्थं प्रथमजिनपतिः सोऽस्तु शस्तश्रिये वः॥२४

रूपातीतपदस्थितोऽपि भगवान् बाह्यैर्विकल्पैरसा-
वेवं ध्यानपथं कथंचन मया नीतो युगादिप्रभुः ।
ज्ञात्वा बालकचापलं तदपि मे कारुण्यपुण्यार्णवः
कुर्याच्छ्रीगुरुसोमसुन्दरपरब्रह्मैकलीनं मनः ॥ २५ ॥

॥ इति श्रीयुगादिजिनस्तवनम् ॥

---

श्री ।

## श्रीशत्रुञ्जयमण्डनऋषभजिनस्तोत्रम् ।

श्रीसिद्धाचलमाश्रितस्य विलसन्मार्तण्डबिम्बप्रभा-
हृद्यामोदसमन्वितैः सुरवरैर्योऽहर्निशं सेव्यते ।
स स्ताद् वोऽखिलसिद्धिसङ्गमकृतौ मन्दारवृक्षोपमः
श्रीनाभेयजिनस्य सुन्दरतरः शोभाभरः पादयोः ॥ १ ॥

नम्रानेकविवेकिवासवशिरःकोटीररत्नांशुक-
व्रातक्षालितपादपङ्कजरमाढ्यैतायुगादिप्रभुः ।
भूयादग्रिमभूमिदास्तिकनयात्त्वधामभाजां नृणा-
मेनःपङ्कनवाम्बुदः कलिमलप्रध्वंसनीरंध्रजः ॥ २ ॥

सौन्दर्यादिगुणाङ्कुताऽमितकलाकल्याणवाणी लसत्
प्रोत्तुङ्गस्तनहारमौक्तिकलता केन(?)प्रभोराश्रगा ।
दन्तश्रेणिरलं प्रमोदमतुलं नो कस्य दत्ते विभो-
र्दन्तालीमिषतोऽथवास्यकमले हंसालिरानन्दने ॥ ३ ॥

त्वल्लावण्यमयो वपुर्द्युतिभरः किं वर्ण्यते सार्व ! हे
ज्योतीरूप ! जगत्पतेस्तव कलां जीवोऽपि वक्तुं क्षमः ।
किं नोऽद्यापि मयाऽनया खलु धिया शक्रादिपूज्यक्रमः
स्वर्गङ्गाजलधौतकाञ्चनगिरेः शृङ्गामरोचिःप्रभः ॥ ४ ॥
योऽयं निश्चलतामगाहृत भवत्पादाब्जसङ्कृतः
कल्पान्तेऽपि घनाघनं हलवडी(?)विध्वंसदन्तावलः ।
आस्तां ते महिमा समग्रजनताऽभीष्टार्थसंपादकः
सोऽयं हृकाघ(?)माश्रितो वरतिशः(?)शत्रुञ्जये मुक्तिदः ॥ ५ ॥
सज्ज्योतिर्मय ! मञ्जुलाशयशय ! प्रक्षीणकर्मोच्चय !
प्रोद्दामातिशय ! प्रसिद्धविजय ! स्याद्वादविद्यालय ।
विस्फूर्जत्समय ! प्रसन्नहृदय ! त्रैलोक्यदत्ताभय !
प्रध्वस्तस्मय ! भव्यपङ्कजवनीसूर्योदय ! त्वं जय ॥ ६ ॥
ये कुर्वन्ति धृतोत्सवास्तव विभो ! पादद्वयीं मस्तके
भक्तेर्भूमितया विपक्षदलनीं मन्दारवल्लीनिभाम् ।
शुद्धाचारविचारसारकलितैर्भूतं विशुद्धात्मभि-
स्तैर्लोकान्तिमवर्तिनः शमधरैर्विश्वत्रयस्योपरि ॥ ७ ॥
किं त्रैलोक्यजनांग भिंदति कसद्भावे भवाभो रवि-
र्नित्योद्योतकरस्तमश्चयहरः श्रीसिद्धिरामावरः ।
मिथ्यावादिजनौघघूकनिकरैर्दृश्यो न भूमीतले
ब्रह्माध्वा भगवान् गतास्तसमयो गम्यो न राहोः किल ॥८॥
त्वद्वक्त्राद्भुतदुग्धसागरवरादुत्थैर्वचोभिर्घनैः
सिक्ता ये भविनस्त एव विरता मोहप्रमीलारयात् ।
त्यक्त्वाऽनन्तभवार्त्तिदामकलुषास्तेजोमयं चिन्मयं
भुञ्जन्ते शिवशर्म सुन्दरश्रियः शुद्धाशयाः शाश्वतम् ॥ ९ ॥

किं मन्त्रैर्जपजापकैर्वसुकरैः किं राजसेवादिभिः
किं विद्याविभवैः किमौषधवरैः किं देवताराधनैः ।
नित्यं चेद्धृदयालये तव विभो ! नामापि नो संभवे-
द्दुस्थानां भविनामलक्ष्यमहिमा प्राचीनकर्मोदयात् ॥ १० ॥
त्वं पीयूषनिधिस्त्वमेव करुणासिन्धुः सदा सङ्गत-
स्त्वं बीजी जननी त्वमेव शरणं त्वं बन्धुवर्गो गुरुः ।
त्वं त्राता त्वमचिन्त्यचिन्तितमणिस्त्वं सद्गतिस्त्वं मति-
स्तत्किं साधुजने कृपां न कुरुषे श्रीमद्युगादीश्वर ! ॥ ११ ॥

कलशः—

इत्थं सर्वसुरासुरेन्द्रमहितः श्रीनाभिवंशार्यमा
जागद्रूपसुरूपसंश्रय इति ख्यातः क्षितौ योगिभिः ।
श्रीमच्छ्रीललितादिकीर्तिसुगुरोः शिष्येण फुल्लद्रुचे-
र्विज्ञप्तोऽभिनताय मञ्जुलमहोराजाभिधानेन सः ॥ १२ ॥

॥ इति श्रीशत्रुञ्जयस्तोत्रं समाप्तम् ॥

## वन्दे वीरम् ।

## अथ श्रीऋषभजिनस्तवनम् ।

अस्तु श्रीनाभिभूर्देवो विपन्नाशनकर्मठः ।
पवित्रः पोषयन्नाकं सुधर्माधिपतिः श्रिये ॥ १ ॥
जाड्यखण्डनपाण्डित्यप्रौढो जगति विश्रुतः ।
हिंनस्तु वस्तमःस्तोमं पावको नाभिनन्दनः ॥ २ ॥

---

अवचूरिः ।

अथ द्व्यर्थिकृपाक्लेषः—अत्र इन्द्रः अभिशालः । ज्ञानम् ॥१॥ प्रगल्भः प्रतीतः ॥२॥

सूर्यानन्दी महाध्यांसी संयमन्यायधीश्वरः ।
समवर्त्ती जगन्नेता जीयादादिजिनेश्वरः ॥ ३ ॥

सनाकी नादृतो दद्याद् वृषभो निर्ऋतिर्मुदम् ।
योऽदोषाचरणप्रीतिरनिकारे शिवे स्थितः ॥ ४ ॥

असंस्तुतो जडैर्बिभ्रदपाशं सर्वदाशयम् ।
नाभेयः श्रेयसे भूयादपूर्वो भुवनेश्वरः ॥ ५ ॥

पायादनलसख्यातिबन्धुरो हरिणादृतः ।
अहिंसोल्लासमातन्वन् श्रीनाभेयो महाबलः ॥ ६ ॥

न सेवितः किंपुरुषैः सर्ववित्तापवर्जितः ।
भवद्वेषी च ऋषभः श्रीदो जयति नूतनः ॥ ७ ॥

चन्द्रावदातदेहश्रीर्वृषभासनतत्परः ।
शिवालयमितः पायादीशानः प्रथमो जिनः ॥ ८ ॥

---

बधानन्दी महिषीः संयमन्यायस्य बुद्धेश्च संयमन्या० । स्वपुर्याः जगच्चराचरं नयति स्वपार्श्वम् ॥ ३ ॥ स ऋषभः नाकीनैः । अनिर्ऋतिः अलक्ष्मीरहितो । निर्दोषाचारे प्रीतिमान् । सर्वपराभववर्जिते मोक्षे उरुऽथ निर्ऋती राक्षसः । सदाकीने मांसे । इकाररहिते चिवे शवे । स च निर्ऋतेर्वाहनम् ॥ ४ ॥ अपूर्वः प्रथमो जिनः जडैरभव्यादिभिः स्तुतोऽपि न सम्यक् स्तुतः । आशारहितं चित्तम् । अथ पूर्वोऽन्यादृशो भुवनेश्वरो वरुणः(?)सत्वरैरुदकैः संस्तुतः । परिचितः असौतः न इति । अपूर्वत्वं पाशरहितं पाणिं इति अपूर्वत्वं मुख्यतः । जडैरसंस्तुतः । पाशपाणिश्च वरुणः ॥ ५ ॥ नागरूपकीर्त्तिरम्यभल्लेन(?)सुखं मैत्री तेनाऽर्हं सर्पं जातं पुष्टम् ॥ ६ ॥ ऋषभः श्रियं त्रिवर्गसंपदं विददाति । कुनरैः । ऽ य पूर्वोद ।? धनदः । सर्ववित्तैः । अपवश० भवद्वेषी । मुख्यतः किंपु० सर्वंवत्रपित्तः शं सुखम् ॥ ७ ॥ इष्टे ईशानं स्वामी स्वर्णपीततनुः श्री, "अवदातः चितेपीते" धर्मप्रकटनतत्परः । मुक्तिपदं प्राप्तः । अथ शाननोदेहर। । चन्द्रेण चिरचन्द्रकल्या चन्द्रवद्वाऽवदाता वलक्षा वृषभः पद्मासना तत्र गौर्याश्लेषं प्राप्तः ॥ ८ ॥

क्षमाप्राग्भारधर्त्तारं यं श्रीमान् श्रयते हरिः ।
बिभ्राणः कमलं शुभ्रं सोऽनन्तः पातु नाभिभूः ॥ ९ ॥
स्वयंभूर्ब्रह्मलोकेशं शुक्लपक्षसमाश्रितः ।
सकलं कमलासीनः कुरुतामृषभः सुखम् ॥ १० ॥
एवमादिमुनेः स्तवनं यः पापठीति शठवामपहाय ।
विघ्नघातनविधौ पटिमानं तस्य बिभ्रति दशापि दिगीशाः ११

॥ इति श्रीऋषभजिनस्तवनं दशदिक्पालस्तुतिगर्भम् ॥

श्री ।

श्रीविजयसेनसूरिपरमगुरुभ्यो नमः ।

## अथ श्रीअजितजिनस्तवनम् ।

विश्वेश्वरं मथितमन्मथभूपमानं
देवं क्षमातिशयसंश्रितभूपमानम् ।
तीर्थाधिराजमजितं जितशत्रुजातं
प्रीत्या स्तवीमि यमकैर्जितशत्रुजातम् ॥ १ ॥

---

क्षमाप्रकर्षधरणशीलं राज्यलक्ष्मीवान् । शक्रकं ज्ञानं अन्वर्थ दीप्तं निधनरहितं । अथवाऽनन्तः कमलं लाञ्छनभूतम् सितम् । पृथ्वीभरभारकम् । श्रीलक्ष्मीसहचरो विष्णुः श्रयते स याम्यत्वेन सेवते ॥ ९ ॥ स पूर्वोक्तगुणविशिष्टः ऋषभः नोऽस्माकं आत्मनैवाऽवगतत्वांघिवलोकैश्वर्यभाक् । अपार्द्धपुद्गलपरावर्तशेषसंसारिजीवैः अदयं क्र्ये(?)ब्रह्मा(?) स्वयंभू ब्रह्मलोकस्य दशमदिश ईशः स्वामी । राजहंसं स्ववाहनमाश्रिततया शासनस्य सकलं सुखं करोतु ॥ १० ॥

प्रायोऽशुद्धेयमवचूरिः प्रत्यन्तराभावाद्
यथादृष्टमुत्तारिताऽतः संशोधनीया.

॥ इति श्रीऋषभदेवस्तवावचूरिः ॥

विज्ञानरागविकलङ्कदशान्तमोह-
विज्ञानरागविकलङ्कदशान्तमोह ।
त्वामुल्लसत्पुलकपक्ष्मलदेहदेशाः
सम्यक् प्रणम्य न लभन्ति कदाचनाऽपि ॥ २ ॥
आनन्दकन्दलितमानसदैवतेन
स्तोतव्य यः सुरपुरन्ध्रिकटाक्षपाशः ।
आनन्दकन्दलितमानसदैवतेन
त्वामेव वीरमपहाय न मन्मथोऽन्यः ॥ ३ ॥
राजन्मदेवरमणीरुचिराजितारं
नानाविधं वपुषि भूषणमुद्वहन्ती ।
नाऽचुक्षुभज्जिन भवन्तमुदारकान्ति
राजन्मदेवरमणीरुचिराजितारम् ॥ ४ ॥
मीमे भवेऽत्र जितशत्रुनरेन्द्रवंश-
कासारतामरसभाजितहेमदीप्ते ।
कासारतामरसभाजितहेमदीप्ते
स्वामिन् विमोच्य तव दर्शनमेकमन्या ॥ ५ ॥
त्वय्यात्मवृत्तिमकरोज्जनताजनानां
यावल्लभेत तरसामहितासदक्षे ।
किं कौतुकं दिवि शिवेऽपि सुखश्रियं सा
यावल्लभेततरसा महितासदक्षे ॥ ६ ॥
व्यापारिता स्तुतिविधौ तव कोविदैः स्वा
कां कां करोति कमलां विगलत्कलङ्काम् ।

नागेन धीरतरलाञ्छितविग्रहस्य
    नागेन धीरत्तर लाञ्छितविग्रहस्य ॥ ७ ॥
सत्पादराजितसमानवकामदारो
    सत्पादराजितसमानवकामदारो ।
सत्पादराजितसमानवकामदारो
    सत्पादराजितसमान व कामदारो ॥ ८ ॥
नत्वाभवन्निह तमोहरणं भवेरं
    कल्याणगौरवपुषं यतयो गतेते ।
कल्याणगौरवपुषं यतयोगतेते
    नत्वा भवन्निह तमोहरणं भवेरम् ॥ ९ ॥
शं वर्द्धिनं दितमलं प्रमदादराग
    शंवर्द्धिनंदितमलं प्रमदादराग ।
मन्देतरा ममलतोयमदं भवन्तं
    मन्देतराममलतोयमदं भवन्तम् ॥ १० ॥
ज्ञानं ददाननय सज्जनतां प्रकाश-
    मानन्दिता गजगते हृतमोहराज ।
ज्ञानं ददाननय सज्जनतां प्रकाश
    मानं दितां गजगते हृतमोहराज ॥ ११ ॥
संपन्नकामलसदागमनाभिभूत
    भावारितापविततिकारसभारतीते ।
भव्याय देहितरसा तरसा प्रसिद्ध
    भूमानमत्रभवतीः कमलायताक्ष ॥ १२ ॥
संपन्नकामलसदागमनाभिभूत
    भावा रितापविततिकारसभारतीते ।

भव्याय देहि तरसा तरसा प्रसिद्ध
भूमान मन्त्रभवतीः कमलायताक्ष ॥१३॥ महायमकम् ॥
अस्मारि येन नहि सर्परमानिवासः
प्रीत्या भवान् प्रथितकीर्त्तिरमानिवासः ।
संपद्यतां कथमिवाऽत्र नरो गतापत्
स्वामिन् विधूतविनमज्जनरोगताप ॥ १४ ॥
माराजितं भुवनरक्षणबद्धकक्ष-
माराजितं जिनपतिं प्रतिनम्रतां यः ।
माराजितं प्रविततं लभते स राज्य-
माराजितं त्रितजयश्रुपयामदीक्षः ॥ १५
या निर्मलेन जनतामनसारसेन
देवार्चिताङ्घ्रियुग सज्जनसारसेन ।
आज्ञाविधौ भवति तेनलसारसेन
बम्भ्राम्यते भवसरस्वतिसारसेन ॥ १६ ॥
आख्यातमीश भवता भवतापतप्त
भव्याङ्गिचन्दनरसं नरसङ्घमुख्याः ।
केचित् कृपारसमयं समयं शरण्यं
भव्या व्रजन्ति शरणं शरणं गुणानाम् ॥ १७ ॥
दृष्ट्वा तवास्यमकलङ्कमलानिशान्तं
शान्तं दृशोरमृतमात्मगतं महर्षे ।
हर्षेरिताश्रुसलिलप्रवहैः कदाहं
दाहं भवाग्निजनितं प्रशमं नयामि ॥ १८ ॥
पञ्चाशदन्वितचतुःशतचापमानं
हेम्नः सृजन्तमभिरामरुचापमानम् ।

विश्वाधिपंकपरिशोषणघर्मरश्मिं
विश्वाधिपं शरणमेष जनो गतस्त्वाम् ॥ १९ ॥
स्तोत्रे तवाऽत्र यमकैर्यमकैरवेन्दो
पुण्यं यदार्जि सुरसे सुरसेव्यदृब्धे ।
तेनैधि मे कृतभवान्त भवान्तरेऽपि
स्वामी त्वमेव शमिना शमिनान्तरारो ॥ २० ॥
यं त्रैलोक्यपितस्तव स्तवमिमं संस्तब्धवान् मुग्धधी-
रप्याचार्य जिनप्रभः श्रवणयोरानन्दिनिस्यन्दिनम् ।
भक्तिव्यक्तिवरङ्गरङ्गिसनसं पुंसाममुं सादरं
पापः पापठतां प्रयाति विलयं संसारनामा रिपुः ॥२१॥

इति श्रीअजितनाथस्तवनम् ॥

पं० देवविजयगणिलिखितम्, सभाशृङ्गारहार-
मुनिज्ञानविजयपठनार्थमिति भद्रम् ।

अथ ऋषभजिनस्तवनम् ।

त्रैलोक्यलोककुलकल्पितकल्पनैक-
कल्पद्रुमं क्रयनमत्त्रिदशाधिनाथम् ।
भक्त्या भजध्वमरिहंकुकुरङ्गनाथं
भोभो जना ऋषभनाथमनाथनाथम् ॥ १ ॥
चञ्चच्चरित्रशुचिदर्शनसुप्रधान-
ज्ञानश्रियं वितरणे रजताद्रिनाथम् ।
आराधयध्वमुरुधैर्यजिताद्रिनाथं
भोभो जना ऋषभनाथमनाथनाथम् ॥ २ ॥

सौभाग्यभाग्यकमलाकमलायमाना-

निद्राननाकृतिनिरस्तनिशाधिनाथम् ।

स्वानैः स्मरध्वमधिमारुतनामनाथं

भोभो जना ऋषभनाथमनाथनाथम् ॥ ३ ॥

विद्युत्प्रचण्डरुचिदण्डदवाग्निपिण्ड-

जैत्रप्रतापभरभग्नदिवाधिनाथम् ।

नित्यं नमध्वमुदयाब्धिजलाधिनाथं

भोभो जना ऋषभनाथमनाथनाथम् ॥ ४ ॥

श्रीऋषभनाथ नामप्रभुः प्रभूतप्रभुत्वगुणधाम ।

इति मेदपाटमुकुटः स्तुतो जयतु कामकामकुटः ॥ ५ ॥

॥ इति श्रीऋषभजिनस्तवनम् ॥

## अथ श्रीजाउरमण्डनशान्तिजिनस्तवनम् ।

कल्याणकारणमकारणशान्तिहेतुं

सेतुं विपत्तिजलधौ कलधौतकेतुम् ।

सन्तापपापपवनाशनवैनतेयं

श्रीयोगिनीपुरपुरन्दरमाचिरेयम् ॥ १ ॥

व्याकोशचम्पकमणीवकगौरगात्रं

पात्रं प्रभूतमहसां महसाममात्रम् ।

श्रीसिद्धिसिद्धिपुरपद्धतिसौरभेयं

श्रीयोगिनीपुरपुरन्दरमाचिरेयम् ॥ २ ॥

मिथ्यात्वमन्मथतमोहरणोष्णभासं

निस्सामसाम्यसलिलेशसुसीमधामम् ।

माहात्म्यमण्डितमखण्डितपौरुषेयं
  श्रीयोगिनीपुरपुरन्दरमाचिरेयम् ॥ ३ ॥
मायामयस्मयभयप्रमयप्रवीणं
  धीरध्वनेर्मधुरताधरितेन्द्रवीणम् ।
ध्यायामि विश्वजनवल्लभनामधेयं
  श्रीयोगिनीपुरपुरन्दरमाचिरेयम् ॥ ४ ॥

श्रीजाउरपुरस्थायी सुधापायीश्वरप्रियः ।
शान्तिर्दूरीकृताशान्तिः स्तुतोऽस्तु प्रगुणश्रिये ॥ ५ ॥

॥ इति श्रीजाउरमण्डनशान्तिनाथस्तवनम् ॥

---

नमः स्याद्वादिने ।

## अथ श्रीनेमिजिनस्तवनम् ।

मानेनानूनमानेन नोभ्रमुभ्नामिमाननम् ।
नेमिनामानममम मुनीनामिनमानुमः ॥ १ ॥

---

### अवचूरिः ।

मानेनेत्यादि, आनुमः स्तुमः, के कर्त्तारः ? वयम् । कं कर्मतापन्नम् ? मुनीनामिनम् मुनीन्द्रम् । किमभिधानम् ? नेमिनामानम् जिनम् । पुनः किंविशिष्टम् ? उम्भी छेदने इत्यस्य धातोः न उम्भं न छिन्नं नाक्रान्तमित्यर्थः । केन ? मानेन अहङ्कारेण, किंविशिष्टेन ? अनूनमानेन अतुच्छप्रमाणेन, पुनः किंविधम् ? उभामिमाननम् । उभामिनः उत्सर्पिणी मानना पूजा यस्य सः । पुनः किंविशिष्टम् ? अममम् निर्ममित्यर्थः ॥ १ ॥

नानामानामनिम्नाना मयानानामनामिनाम् ।
नामिनेनामिना सोसे नेमिनाके [illegible] ॥

स्निग्धानां सन्मानानां अव्यक्तमलपन्तीनां, मा । मानिनीनां मनस्विनीनां मान-नमनुभवनम् तत्र उन्मना उत्कंठितः इत्यर्थः ॥ ४ ॥ मानो इत्यादि, मणुदन्तः-प्रेरणे, इत्यस्य धातोः नन्नम् क्षिप्तम् । किं तत्? एनः पापम् । केन? अमुना नेमिना । आम्नानेन अम्नानां अभ्यसनम् पुनःपुनरुच्चारणं तेन । कं अनुलक्ष्मी-

नोनमुन्मानमानेन मुनीनामेनमाननम् ।
मीनानर्मि नमन्नेमिमनूनामामिमीममाम् ॥ ६ ॥
मुनीनमेनोमीनानां निमाने नेमिमानिनम् ।
नेमिनामानमानाना ममो मान ममुं नमः ॥ ७ ॥
नेमीनमननं नेमिनमनं नेमिमाननम् ।
नेमिनाम्नो न नाम्नानमानानूनममी मम ॥ ८ ॥

इति स्तुतिं ये पुरतः पठन्ति श्रीनेमिनो व्यञ्जनयुग्मसिद्धाम् ।
श्रीवर्द्धमानोदयशालिनस्ते स्युः सिद्धिवध्वाः-परिभोगयोग्याः ॥९॥

---

कस्य ? मां । एनः किंविधः ? मनोमुम्मिमसम मनो मनसा मदहस्तं निम्नयति अल्पीकरोति । पुनः किंविधम् ? उन्नमान्माननोननम्, उन्नमन्तीं उत्सर्पन्तीं माननां पूजनां ऊनयति लंघनात्यर्थम् ॥ ५ ॥ नोनेत्यादि, ना पुरुषः, अम इम इत्यस्य धातोः आमिमाम आजगाम प्राप । काम् ? मां लक्ष्मीम् । किंविशिष्टाम् ? अनूनां सम्पूर्णाम् । किंकुर्वन् ? कं नेमिं ? किंविधं ? न ऊनं सहितन् (?) कं नेमिं ? किंविधम् ? न ऊनं न रहितम् । केन ? उन्मानमानेन जलद्रोणं अर्द्धभारम् । "समइ समूसिओ अ जो नवओ माणुम्माणुवमाणं इय भणियं जिणवरिंदेहिं" इतिवचनात् प्रमाणविशेषेण । किंविधम् ? मुनीनामेननं, मुनीनां सप्तर्षीणां इनः स्वामी चन्द्रः तद्वदनेमाऽखण्डा मा लक्ष्मीर्यस्य तत् । एवंविधमाननं मुखं यस्य । तथा मानङ् हिंसायां धातोर्मानीनं हिंसनं कर्ममित्यर्थः ॥ ६ ॥ मुनीनेत्यादि, अमुं नेमिनामानं मुनीनं मन त्वं इति सम्बन्धः । तथा एनांसि कल्मषाण्येव मीना मत्स्यास्तेषां निमाने हनने नेमिं चक्रधारामात्मानं मन्यन्ते ते एनोमीनानाम् निमाने । नेमिमानिनम् पुनः किंविधम् ? मुर्वी मवबन्धने इत्यस्य धातोः, अमोमाननं अबन्धकम् । केषाम् ? आनानाम् दशविधप्राणानां क्षीणकर्मत्वादित्यर्थः ॥ ७ ॥ नेमीनेत्यादि, नूनं निश्चितं मम अमा आनाः प्राणा जीवितः मनिनाम्यर्थ यत् किं ? नेमीनस्य नेमिस्वामिनः, नमनं स्मरणं नेमीनमननम् । तथा नेमेर्नमनं नतिः तं नेमिनमनं नेमे मनिनं पूजनम् नेमिमाननं ने द्वौ नञौ प्रकृतमित्यर्थं नमनात् इति नेमिनाम्नः नाम्नाने । पुनः पुनः अभ्यसनं उत्कीर्तनमित्यर्थः ॥ ८ ॥

॥ इति श्रीनेमिनाथस्तवनावचूर्णिः समाप्ता ॥

---

## अथ श्रीशङ्खेश्वरपार्श्वजिनस्तवनम् ।

ऐंकारस्मृतिसावधानमनसा स्तोतुं प्रवर्त्ते महा-
मोहापोहपरायणं जनमनोऽभीष्टार्थसार्थप्रदम् ।
श्रीशङ्खेश्वरभूषणं भगवतामग्रेसरं वासव-
श्रेणीवेणिमिलत्प्रसूनपटलीमाध्वीकधौतक्रमम् ॥ १ ॥

मूर्त्तिस्ते जिनराज ! राजति जगद्दारिद्र्यविद्राविणी
स्वर्योषिन्नयनोन्मदालिपटलीपेपीयमानप्रभा ।
शारीरान्तरदुःखतापजनितं खेदं नयन्ती व्ययं
वल्लिः कल्पतरोरिव त्रिभुवनप्रख्यातसौरभ्यभूः ॥ २ ॥

कामं दर्शनतोऽपि मन्नयनयोरुल्लासमातन्वती
मच्चेतःकुमुदं विकाशयितुमप्यह्नाय बद्धादरा ।
मद्ध्यानार्णवपूरपूरणपटुः स्वामिंस्तवोल्लासिनी
मूर्त्तिः किञ्चन चन्द्रकान्तलहरीप्रागल्भ्यमभ्यस्यति ॥ ३ ॥

मूर्त्तिस्ते महनीयमोहमदिरोद्गारावघूर्णद्दृशां
व्याक्षेपं परमौषधीव नियतं निर्नाशयन्त्यञ्जसा ।
येषां लोचनगोचराश्चिरमभूद्रोमाञ्चपुष्पाञ्चिताः
ते किंनाम न नाम(?)वामनयनालावण्यलक्ष्मीजुषः ॥ ४ ॥

मूर्त्तिस्ते स्नपनैर्न विभ्रमभरैः सांवर्त्तिकैश्चुक्षुभे
पौलोमीचललोचनाञ्चलमिलद्भ्रूभङ्गसंसर्गिभिः ।
आबिभ्रत्कमठोपसर्गसहनीं धैर्यप्रधानक्षमां
स्वामिंस्तत्किममन्दमन्दरगिरिस्पर्द्धासमुत्कादरा ॥ ५ ॥

धाम ध्यायसि यत् पुरा त्रिजगतीधामातिशायि स्फुरत्
तत्सङ्क्रान्तिवशादिवेयमनिशं मूर्त्तिस्तवोद्योतिनी ।

अङ्गुष्ठात् पुरतस्तव क्रमभवाविङ्गाळलीलावहं
नो चेत् सर्वसुरासुरैः कथमहो शक्त्या जितं रूपकम् ॥६॥
अद्यावद्यकलापतापदलनक्रीडामिवातन्वती
मूर्तिः स्फूर्तिमती लता सुरतरोर्मूर्त्ता मयोद्वीक्षिता ।
अध्यज्ञानकलाविलासकुशलव्यापारपारङ्गतै-
र्योगीन्द्रैरनुभूतवैभव विभो ! तेनाऽनुमन्ये जनः ॥ ७ ॥
मूर्त्तिस्ते प्रविभाति मोहतिमिरप्रध्वंसभानुप्रभा
मूर्त्तिस्ते भवसिन्धुमध्यनिपतद्भव्योद्धृतौ नौर्दृढा ।
मूर्त्तिस्ते सकलैर्हितार्थपटलीसम्पूरणे कामगौ-
मूर्त्तिस्ते मम तीर्थनाथ ! सततं श्रेयः श्रिये कल्पताम् ॥८॥
प्रातर्योऽष्टकमेतत् प्रमुदितचेताः प्रभोः पुरः पठति ।
कष्टसहस्रं तीर्त्वा लभतेऽसौ परममानन्दम् ॥ ९ ॥
॥ इति श्रीशङ्खेश्वरपार्श्वजिनस्तवनम् ॥

## अथ श्रीस्तम्भनकेशपार्श्वजिनस्तवनम् ।

श्रीपार्श्व विश्वव्यसनापहारी व्यापारनिर्व्याजनवौजसस्ते ।
अयं जनः स्तम्भनकावतंस ! विज्ञापनावैनयिकं तनोति ॥१॥
विज्ञीप्सतोऽभीप्सितमन्यदेवाग्र मे निषेधात् त्वयि पक्षपातः ।
स्वेनैव रागादिरुजातुराणां जिह्रेमि तेषां तु पुरः प्रजल्पन् ॥२॥
जानामि जानासि यथा जिनेश ! स्वेनैव मे क्लेशमयीमवस्थाम् ।
तथापि नाख्यातमृते प्रभूणां प्रायः प्रतीकारपरः प्रयत्नः ॥ ३ ॥
तद्भूयसी भक्तिरहं पुरस्ते विज्ञापनामज्ञतमोऽपि कुर्याम् ।
त्वं वीतरागोऽपि मुहूर्तमस्यां निस्सीमकारुण्यनिधेऽवधेहि ॥४॥

मुक्त्यर्थमध्वर्यमुपैतु सेवां देवान्तराणां किमुत ब्रवीमि ।
संसारकारान्धगृहाज्जनोऽयं विमोक्ष्यते त्वद्वशैव देव ! ॥ ५ ॥
प्रागेव दुष्कर्म कियन्न मूढैरुपार्जितं देव ! पुनर्भवेषाम् ।
देवान्तरोपासनया प्ररूढं बभूव यन्नाम नृणामृणार्णम् ॥ ६ ॥
उद्दामपुण्यद्रुमपीठबन्ध ! निर्व्याजबन्धो ! भुवनत्रयस्य ।
अन्धे भवान्धौ मम निर्विलम्बं प्रयच्छ पित्सोः स्वकरावलम्बम्॥७॥
इदं मदन्तःकरणं व्यधास्त्वं स्वां राजधानीमिति मे प्रमोदः ।
तथाऽप्यरीणां भयमान्तराणां निवर्त्तते नेति मनाग् विषादः ॥८॥
अगाधता मे मनसः किमेषा सामर्थ्यमन्तर्द्विषतामथेदम् ।
तवाऽथवोदासिरियं यदत्र त्वमेकतः कौतुकमन्यतोऽमी ॥ ९ ॥
मिलन्न वाऽन्तर्द्विषतां च किञ्चिन्मनो बभूवोभयचेतनं मे ।
स्वेनैव संयम्य जिनाधिराज मयाऽर्पितं तेन तवेत्यवेहि ॥ १० ॥
पश्य प्रमुग्धस्य पुरन्ध्रिसारीक्रीडासु कामः कितवः कथं मे ।
श्रेयोधनं त्वच्चरणप्रसादप्राप्तं हरत्यक्षपराजितस्य ॥ ११ ॥
विकल्परूपाः समिधः समाधिवह्नावुरुज्योतिषि जुह्वतो मे ।
त्वत्पादसेवाक्रतुयज्वनोऽन्तरक्षोभवक्षोभहरोऽभवस्त्वम् ॥ १२ ॥
न मे त्वदुक्तागमसिन्धुमध्यमग्नं मनो मीन इवेदमास्ते ।
बकोटवत्ताऽयमटाट्यमानः कामस्तटीं नोज्झति किं करोमि ? १३
उपार्जितात्मेतरपुण्यपण्यः शरण्य ? वैराग्यपुरं प्रवेक्ष्यन् ।
अहं त्वदीयागमपत्रहस्तोऽप्यलं विलम्ब्ये स्मरशौल्किकेन १४
प्रभो प्रमादस्थलचारिणं मे मनोमृगं व्याध इवातिहिंस्रः ।
आः कामिनीविभ्रमपाशबद्धं स्मरः शरैर्भेत्स्यति किं विदध्याम् ? १५

न व्याप्नुवे चेत्त्वमृतं भवन्तो रागाहिदंशोपहता भ्रमन्ते ।
जनाः कामचिताग्निनिमग्नकाया भस्मीभवन्तीह भवश्मशाने॥१६॥
त्वमेकतः कर्मविषं करोषि कृशं भृशं चाऽन्यत एव कामः ।
पीडाकृता मय्यमुना सहैष क्रीडाक्रमः कारुणिकस्य कस्ते ? ॥१७॥
कलिः कुलाचार्य इवाऽयमार्यमर्यादया यच्छितमप्यवश्यम् ।
अमुं जनं नाथ ! नयत्यविद्याजनक्रमासङ्क्रमनिष्कपस्त्वम् ॥१८॥
निशामिमां मोहमयीं हिमर्त्तौ मूर्त्यन्तरे नाथ ! कलौ प्रवृत्ते ।
नेष्यन्ति मर्त्त्याः कथमर्चिभाजो भवत्पदध्यानकृशानुशून्याः १९
उग्रे कलौ ग्रीष्मतयाऽवतीर्णे श्यामा ममाशासरितस्तदीश ! ।
तत्पूरमेताः करुणाम्बुपूरं वर्षन्तु वर्षा इव दृष्टयस्ते ॥ २० ॥
निर्णीतभाग्यस्तव दर्शनेन भक्तौ भवान् स्वानुभवश्च साक्षी ।
नैसर्गिकी ते करुणा जगत्सु तथापि नाप्नोमि किमीप्सितानि ? २१
प्रियापि न प्रौढतया प्रहीणे प्रेमार्द्रमेषा मयि वर्त्तते श्रीः ।
यदस्मि योगैः सुभगम्भविष्णुर्भवन्मतोक्तैर्भवतादविघ्नम् ॥ २२ ॥
देव ! त्वदुक्ताञ्जनशुद्धदृष्टिः पश्याम्यहं तत्त्वनिधीनवाऽपि ।
क्षोभेण रागादिभुजङ्गमानां यथातथं किन्तु न मे प्रवृत्तिः ॥२३॥
अनास्पदं नाथ ! यदीहितानां यथान्तरैर्वैरिभिरत्र दूये ।
स्वामिन्नुपेक्षा मयि सेयमस्तु न चेत् प्रभुत्वप्रतिपन्थिनी ते ॥२४॥
अदो मम क्लेशसहस्रमीश भृशं भवत्यागधियं ! धुनोति ।
त्वद्वन्दनानन्दरसामृतानामतृप्तिरेका तु करोति मन्दाम् ॥२५॥
तवोपदेशेऽपि भवाम्बुराशौ दुरासदं देव ! चरित्ररत्नम् ।
दूरस्थकूलाः परितस्तदीश ! रागादिचापांसि वदन्त्यपायः ॥२६॥

विक्रान्तमन्तर्द्विषतामनन्तमहं तु यद्वक्रमनीश्वरोऽस्मि ।
न मे न विज्ञानसिन्धुःक्षमामिस्त्वदाळजाळामिरलं कथामिः ॥२७॥
ध्यानानलेन ज्वलता प्रकामं दग्धेषु दुष्कर्मसु मे मुनीश ! ।
इमास्त्वदालोकनहर्षजन्मा आपो निवापाञ्जलयो भवन्तु ॥२८॥
विजित्य रागादिरिपूनुपेत्य स्वधाम विद्यावनितासहायः ।
तत्ते प्रसादात् परमोपदेशपीयूषपानोत्सवमाचरेयम् ॥ २९ ॥
वदावदातैर्भवदागमानां वाग्भेषजै रागरुजं निवर्त्य ।
कदा मया प्रौढसमाधिलक्ष्मीर्निवेक्ष्यते निर्वृतिनिर्विशेषा ॥३०॥
रागादिहव्यानि मुहुर्लिहाने ध्यानानले साक्षिणि केवलश्रीः ।
कलत्रतामेष्यति मे कदैषा वपुर्व्यपायेऽप्यनुयायिनी या ॥३१॥
अभूवमीश ! व्यपदेशवर्णैः सूरप्रभः किन्तु तदा प्रसीद ।
यथाऽस्तरागादितमःसमूहः स्फुरन्महाः स्यामहमर्थतोऽपि ॥३२॥
इत्थं स्तोत्रमयीं निशम्य करुणाकूपार ! पार्श्वप्रभो !
विश्वव्यापिविपद्व्यपोहनविधिव्यग्रोऽपि विज्ञापनाम् ।
देव ! स्तम्भनकेश ! केवलकलासीमन्तिनीसङ्गतां
स्वामिन् ! मां नय सिद्धिसौधवलभीनिर्यूहपर्यन्तिकाम् ॥३३॥

॥ इति श्रीस्तम्भनकेशपार्श्वजिनस्तवनम् ॥

---

श्रीः ।

## अथ श्रीपार्श्वजिनस्तवनम् ।



चरणकमलं श्रीवाग्देव्याः प्रसादपरं सतां
कविरमविदं मत्वा नत्वा मुदा विहिताञ्जलिः ।

निजहृदि गतं कृत्वा श्रीमद्गुरोरभिधाजपं
  शिवसुखकरं श्रीवामेयं नये स्तुतिगोचरम् ॥ १ ॥
कुशलकुसुमक्रीडारामप्रवर्द्धनवारिदो
  भुवनजनताप्राणत्राणप्रधानकृपाम्बुधिः ।
वदनशतभृत्प्रादुर्भूतप्रभूतप्रभाभरो
  जिनपतिरसौ श्रीमत्पार्श्वो ददातु सुखं सताम् ॥ २ ॥
तुरगवदनैर्गीतस्फीतस्फुरच्छुचिसद्यशा
  विमलमतिभिर्ध्यातः प्रातर्महर्षिभिरादरात् ।
वचनरचनामाधुर्येणाऽधरीकृतसत्सुधा-
  मधुरिमगुणो योऽसौ पार्श्वः श्रिये भवतान्मम ॥ ३ ॥
पदसरसिजं देवाः सेवाविधानविचक्षणा
  विकचकमलैर्यस्याऽभीक्ष्णं यजन्ति जिनेशितुः ।
स्फुटगुणगणान् स्मारं स्मारं नमन्ति च भूस्पृशः
  सकलभविनां वामेयोऽसौ श्रियेऽस्तु दिनागमे ॥ ४ ॥
भवति च नृणां यन्माहात्म्यान्महोदयभूषितात्
  द्विरदतुरगक्षोणिर्योषायुता कमलाचला ।
स्फुरदसि नभोनीलाम्भोजप्रकारतनुच्छविं
  सुरमणिनिभं तं श्रीपार्श्वं प्रणौमि सुखाप्तये ॥ ५ ॥
श्रवणपुटकैः पायं पायं वचोऽमृतमुत्तमं
  सकलमनुजा नामं नामं यदीह पदाम्बुजम् ।
अभिनवयशो गायं गायं प्रमोदमुपागता
  भवभयमहादुःखं त्यक्त्वा भवन्त्यजरामराः ॥ ६ ॥

जगति सकले योऽर्हन् दत्वा मुदा वरवार्षिकं
पटुरज इवाऽत्याक्षीद्राज्यं क्षणेन च दुस्त्यजम् ।
उपशमरसाम्भोधिर्बोधिप्रदो व्रतमग्रहीत्
जिनदिनकरो वामेयोऽसौ प्रबोधकरोऽस्तु नः ॥ ७ ॥

कमठविहितज्वालाजिह्वप्रतप्ततनुः फणि-
धरणपतितां यस्यालोकादृतः परसंसृतौ ।
स्फुरति महिमा [वत्रा]ऽद्यापि प्रवृद्धकलौ युगे
भवभयभिदो वामेयोऽसौ स एव भवे भवे ॥ ८ ॥

इत्यष्टकं प्रेमकरं प्रभाते
पार्श्वप्रभोर्ये मनुजाः स्मरन्ति ।
देहे च गेहेऽपि भवन्ति तेषां
श्रियः समाना सततं नराणाम् ॥ ९ ॥

इत्थं स्तुतः सकलकामितकृत् सुपार्श्वः
सूरीशितुर्विजयराजगुरोश्च राज्ये ।
प्राज्ञप्रधानगुणतो विजयस्य शिष्य-
मानेन भक्तिभरतो मधुपूर्णिमायाम् ॥ १० ॥

॥ इति पार्श्वजिनस्तवनम् ॥

---

## अथ श्रीकरहेडापार्श्वजिनस्तवनम् ।

प्रोच्चैःप्रभावः प्रसरीसरीति प्रभोः प्रभाणामिव यस्य भर्तुः ।
कालिन्दिकाकज्जलकान्तकेशः सः श्रीकरः श्रीकरहेडकेशः ॥ १ ॥

यस्येशितुर्मुद्रयति नैव पार्श्वं विपक्षिवीरवातितीक्ष्णकर्म ।
पार्श्वः सदौदार्यजितालकेशः स श्रीकरः श्रीकरहेडकेशः ॥ २ ॥
यदीयमूर्त्तिः सुरसौरभेया चित्रं प्रसूतेह्ययदासिकादीन् ।
महोदयानन्ददयाब्धिकेशः स श्रीकरः श्रीकरहेडकेशः ॥ ३ ॥
मूर्त्तिं यदीयां दिविषद्गवावत् करोति नित्यं कृतिकामितार्थम् ।
गाम्भीर्यसन्तर्जितसर्वकेशः स श्रीकरः श्रीकरहेडकेशः ॥ ४ ॥
इत्थं स्तुतः श्रीकरहेडनामा प्रभुः प्रभूतप्रभुताभिरामः ।
श्रीपार्श्वविश्वत्रयराट्र प्रकामकामान् प्रकुर्यात् प्रगुणर्द्धिधाम ॥ ५ ॥

॥ इति करहेडापार्श्वनाथस्तोत्रम् ॥

---

## अथ करहेटकपार्श्वजिनस्तवनम् ।

स्वामिन्ननम्रसुरासुरमौलिमौलि-
रत्नप्रभापटलपाटलिताङ्घ्रिपद्म ! ।
पार्श्वप्रभो ! भुवनभासनभास्कर ! त्वा-
मानौम्यमानबहुमानमहं महेश ! ॥ १ ॥
श्रीअश्वसेननरनाथकुलावतंस !
वामावरोदरसरोवरराजहंस ! ।
भव्याङ्गिमानसमहार्णवपूर्णचन्द्र !
कस्त्वां न नौति जिननायक ! वीततन्द्र ! ॥ २ ॥
विश्वत्रयार्त्तिहरणप्रवण ! प्रवीण !
विश्वत्रयीमथनमन्मथभावहीन ! ।

विश्वत्रयीसकलमङ्गलदानदक्ष !
    विश्वत्रयोद्धरणधीर ! सरोरुहाक्ष ! ॥ ३ ॥
संसारवारिनिधितारणयानपात्र !
    त्रायस्व विश्वमखिलं गुणरत्नपात्र ! ।
कीर्त्तिप्रतापपरितर्जितपुष्पदन्त !
    पार्श्वप्रभो ! भुवनभूषण ! पुष्पदन्त ! ॥ ४ ॥
देव ! त्वदङ्गमहसा सहसा जितेव
    सूर्याङ्गजा जलभरं वहते हतेर्ष्या ।
त्रैलोक्यलोकमहितस्य हितस्य सर्व-
    सत्त्वेषु ते कथय को नहि किङ्करोऽस्ति ? ॥ ५ ॥
ध्यानानलेन भवता भुवनाधिनाथ !
    कर्मेन्धनं निधनमाप्यत पार्श्वनाथ ! ।
त्वन्मूर्ध्नि नागपतिसप्तफणामिषेण
    तेनैव धूमलहरी लसति प्रकामम् ॥ ६ ॥
स्वामिन्नशोकतरुरेष जनानशेषान्
    धर्मं दिशन्निव रवैरलिनां करोति ।
प्राज्यप्रभावभवनस्य भवादृशस्य
    सङ्गात्र के विमतयोऽपि भवन्ति तज्ज्ञाः ॥ ७ ॥
मन्ये पुरस्तव विकस्वरपञ्चवर्ण-
    जानुप्रमाणकुसुमप्रकरच्छलेन ।
विश्वाधिपस्य भवतो भयतः स्मरेणा-
    मुच्यन्त पञ्चविशिखाः सविधावनीषु ॥ ८ ॥

दोषाकलङ्कजडताश्रयिणः सुधांशोः
 साम्यं कथं भवतु ते वदनस्य देव ! ।
नित्यं श्रियः कुलगृहस्य हि यस्य गाव-
 स्तापं जनस्य समयन्ति सुधायमानाः ॥ ९ ॥

त्रैलोक्यलोचनसुधाञ्जन ! चारुरूप !
 चन्द्रांशुचारुचमरावलिरुत्तरन्ती ।
मौलेर्गिरेरिव नदी जलपूरपूर्णा
 पार्श्वद्वयेऽपि तव देव विभाति शुभ्रा ॥ १० ॥

मित्वा विभो ! नरसुरासुरसम्पदोऽसौ
 सिंहः सुवर्णमणिनिर्मितमासनं ते ।
संश्रित्य विज्ञपयतीव यथा भवाब्धे-
 र्मां नाथ ! तारय पशुं पशुजात्यपेतम् ॥ ११ ॥

सम्भावयामि भवतस्तनुसम्भवेन
 भामण्डलेन शितिना जिन ! भासुरेण ।
पूर्णं नभस्तलमिदं सकलं यदीति
 नो तत्कथं नरकतापमिदं बभूव ॥ १२ ॥

व्योमस्थितत्रिदशदुन्दुभिरेष हृद्यः
 पुंसां नदन्निति विभो ! वदतीव नित्यम् ।
भो भो जगत्त्रयपतिर्जगदर्थवेदी
 नाऽतः परोऽस्ति भुवने तदमुं भयध्वम् ॥ १३ ॥

लोकत्रयैकतिलकं प्रणमन्त्यमुं ये
 ते कीर्तिकेवलशिवत्रयभाजनत्वे ।

कुन्देन्दुसुन्दरतरं त्रिजगज्जनानां
छत्रत्रयं तव निवेदयतीव देव ! ॥ १४ ॥
कुन्दावदातयशसं भगवन् ! भवन्तं
भिन्नेन्द्रनीलमणिनिर्मलकायकान्तिम् ।
कारुण्यपुण्यहृदयं ( हृदि यो ) बिभर्ति
यान्ति क्षणेन विपदः क्षयमीश ! तस्य ॥ १५ ॥
इति श्रीमत्पार्श्व ! क्षितिवलयविख्यातकरहे-
टकक्ष्मालङ्कार ! त्रिभुवनपते नम्रशिरसाम् ।
सभावं स्तोतॄणां विदलय महामोहपटलं
घनं कर्मव्रातं हर वितर निर्वाणपदवीम् ॥ १६ ॥

॥ इति श्रीकरहेटकपार्श्वदेवस्तवः ॥

---

## अथ घोघामण्डनपार्श्वजिनस्तवः ।

अम्भोधिवीचिचयचुम्बितभूमिभागे
घोघापुरे प्रथितधार्मिकधर्मरागे ।
जीयाज्जिनेश ! नवखण्डकृतावतार
श्रीपार्श्व ! विश्वविदितप्रभुतैकसार ! ॥ १ ॥
सर्वज्ञ ! धर्मपरिपूतमतिस्त्वमीश !
जातोऽपि पोतनपुरे मरुभूतिविप्रः (१) ।
भ्रात्रा शठेन कमठेन हतस्त्वटव्यां
मर्त्यो बभूविथ(२)तदा द्विपभद्रजातिः ॥ २ ॥
तत्राऽरविन्दमुनिकुञ्जरगीः प्रबुद्ध-
स्त्वं कुर्कुटोरगविषव्यथितो विपद्य ।

स्वर्लोकमष्टममभीष्टसुखप्रपूर्णं
तूर्णं स्वपुण्यगणढौकितमाश्रितोऽसि (३) ॥ ३ ॥
च्युत्वा सुकच्छविजये भगवानमरेन्द्र-
विद्याधरः किरणवेगसुनामधेयः (४)।
प्रव्रज्य पुष्करगतः प्रतिमाप्रपन्नो
दष्टोऽहिनाऽच्युतमगात्(५)गुरुसाम्यशाली ॥ ४ ॥
जम्बूसुगन्धिविजये जितवैरिवर्गः
श्रीवज्रनाभनृपतिर्यतिताऽधिरूढः (६)।
दुःकर्मपूरितकुरङ्गकभिल्लविद्धो
ग्रैवेयकं(७)त्वमगमः समशत्रुमित्रः ॥ ५ ॥
प्राच्यां विदेहसुरपूर्वपुरे सुवर्ण-
बाहुर्भवानजनि(८)चक्रिरमाभिरामः।
सिंहोपसर्गमधिसह्य मुनीन्द्रभावे-
ऽभूत् प्राणते दिविसुरो(९)वरभोगयोगः ॥ ६ ॥
दिव्यानुभावमनुभूय ततोऽवतीर्णो
वाणारसीपुरि जगत्प्रभुतां दधानः।
कल्याणकैः कृतमहासुखसंविभाग
लोकोत्तरातिशयराजिविराजमानः ॥ ७ ॥
इक्ष्वाकुवंशनृपतिप्रभुचाश्वसेन–
वामासुतः कमठदर्पमलापहारी।
भोगीन्द्रलाञ्छन ! मनोरमनीलवर्ण !
पार्श्वप्रभो(१०)! जय चिरं जनताशरण्य ! ॥ ८ ॥

पद्मावतीधरणराजनिषेव्यमाण
    पार्श्वद्वयोऽस्तम जयाविजयाभिवन्द्य ! ।
अङ्गीकृतैकनवखण्डसुनामधेयोऽ-
    प्याखण्डलानत ! सुखं विदधास्यखण्डम् ॥ ९ ॥

मिथ्यादृशोऽपि भगवन् ! भवदाधिपत्यं
    दृष्ट्वा भवन्ति सुदृशो लघुकर्मकास्ते ।
म्लेच्छादिपामरजना बहुमानयन्ति
    देवं भवन्तमनिशं प्रकटप्रभावम् ॥ १० ॥

काले कलौ लसति सीदति साधुवर्गे
    कामं खले प्रभवतीह समानुभावात् ।
दौस्थ्यादिदोषकलुषे क्षितिमण्डलेऽपि
    त्वं जागरूकमहिमा जयसि प्रकामम् ॥ ११ ॥

कल्पद्रुमस्तव पुरः प्रथितोऽल्पदायी
    चिन्तामणिः स खलु काममणुप्रभावः ।
सा कामधेनुरपि कल्पितकीर्त्तिमात्रं
    स्वर्गापवर्गसुखदायक ! विश्वबन्धो ! ॥ १२ ॥

सत्पूजनस्तवनचिन्तनपुण्यकृत्यै-
    र्योगत्रयं जिन ! वपुर्वचनं च चित्तम् ।
त्वत्पर्युपास्तिनिरतं कृतिनो ध्रुवं स्यात्
    श्रद्धानुबोधचरणात्मकयोगशुद्ध्यै ॥ १३ ॥

देव ! त्वदीयचरणप्रणतोत्तमाङ्ग-
    सङ्क्रान्तरेणुकणरञ्जितसर्वगात्राः

पात्रं भवन्ति भविनो न मनागपीह
चोरारिमारिवधबन्धकदर्थनानाम् ॥ १४ ॥
मिथ्यात्वमोहपटलोपचयादनन्त-
दृग्ज्ञानविशुद्धिमुपगच्छत एव देव ।
प्राप्तोऽसि दर्शनपथं कथमप्यधीश !
माऽतः परं भवममान्तरितः कदाचित् ॥ १५ ॥
पुण्यामोघ सुघोष घोघनगरालङ्कारचूडामणे !
पार्श्व ! श्रीनवखण्डपिण्डित ! तमोनिर्नाशभानूदय ।
एवं बालकचापलं कलयता मौढ्यात् त्रिलोकीपित-
र्विज्ञप्तः किमपि प्रभो त्वमधुना मे बोधिलाभं कुरु ॥१६॥

॥ इति श्रीघोघामण्डनपार्श्वजिनस्तवः कृतः श्रीज्ञानसागरसूरिभिः ॥

॥ ऐं ॥

## सीमन्धरजिनस्तवनम् ।

श्रेयः श्रीणां निधानं सुमहिमकमलावल्लरीवारिवाहं
प्राप्तं स्फार्ति चतुर्स्त्रिंशदतिशयपरमोल्लोलकल्लोलपूरैः ।
.................ढ्याऽमरनररमणीफुल्लहल्लीसकार्च्यम्
श्रीमन्तं तीर्थपं तं त्रिजगदवनतं स्तौमि सीमन्धराहम् ॥१॥
वाणी वाचस्पतीया नहि गरिमवती नाऽपि गीर्देवताया
ब्रह्मा जिह्मायितो नो ऋभुविभुरपि यद्यत्र नाऽलम्भविष्णुः ।
स्तोत्रे तत्राऽपि वर्त्तेऽप्रमितगुणवतः स्वामिसीमन्धरस्य
प्रौढत्वं तत्र हेतुः प्रखरमुखरतास्फूर्त्तिकर्त्र्योस्तु भक्तेः(?) २

उच्चत्वं पञ्चशत्या स्ववपुषि धनुषां योऽर्च्यकीर्त्तिर्बिभर्त्ति
तैर्द्वात्रिंशत्प्रमाणैर्मितमथ कवलैः शुद्धमाहारमाह ।
द्वात्रिंशन्मूटमानं प्रतिकवलमहो पोस्फुरीतीह येषु
प्रातर्ध्यातः स मे श्रीजिनपतिरतुलं मङ्गलं पम्फुलीतु ॥ ३ ॥

पञ्चाशद्गन्निमाने तव मुखकमले केवलालोकहेलि-
रङ्गद्गीर्द्वादशाङ्गी विमलपरिमलालोलभव्यालिमाले ।
पायं पायं व्यपायं स्फुरदमृतरसं पुण्यपुण्योपदेशं
शान्तात्माहं कदा स्यामिति दिवसमुखे ध्यायतो मे श्रिये स्तात्४

एकैकत्रोरुचोक्षे भरतधरणिजास्ते भवन्त्यष्ट लक्षा
दैर्घ्योदायामतश्च द्विशतसमधिकैकोनविंशाः सहस्राः ।
यस्य त्यैर्मङ्गलानि प्रविदधति मुदा ते नरा धन्यपुण्याः
सोऽन्तर्ध्वान्तप्रहन्ता त्रिभुवनतरणिर्मे स्मृतः श्रेयसेस्याः ॥५॥

भावी सीमन्धराऽयं कृतसुकृतभरैर्भास्वरो वासरो मे
श्रेयस्पात्री च रात्री त्रिदशनुत ! कदा सा भवित्री धरित्र्याम् ।
यत्राऽऽप्तप्रोक्तसप्तप्रयुतदशधनुःपात्रपाणिः सुचर्यां
कुर्यां शुद्धान्नपानैस्तव पदकमलोपासनाप्तप्रतोऽहम् ॥ ६ ॥

उन्मन्नाक्षेभजैत्र स्वसमिति कलया क्रौञ्चबन्धं बबन्धे-
रागारातिस्त्वयोर्व्वीपतिरतिदरतस्त्वां नु तत्सेवतेऽयम् ।
वेल्लत्किङ्केल्लिवल्लिच्छलकलिरतुलः पल्लवैर्लोलहस्तै-
स्तन्ननर्त्ति प्रसत्यामपि च सुखयति च्छायया ते सदस्यान् ॥७॥

भक्तिप्रह्वप्रणम्रामरनरनिकरांस्तात ! चिन्ताव्यतीत-
श्रेयःश्रीणां प्रदानैः पृणसि करुणया त्यागलीलाकलां ताम् ।

देयाः स्वां नोपि··· त्रिदशतरुगणैर्याचमानैः किमेवं
पौष्पी वृष्टिर्यदग्रे व्यरचि स जिनपः पातु मां दुःखमार्त्तम्॥८॥

पञ्चत्रिंशद्गुणी स्यात् सततिरतुला यस्य ते दिव्यगव्याः
पौमर्थीप्रार्थ्यसंपत् प्रथितिरपि पयः पाप्ममीमोष्ममाधि।
आढ्यं माद्यत्प्रमादा कुमततृणततीश्चञ्चुरत्याखिलोके
व्यातन्तन्थादनन्तां वरतिमिरहरज्योतिरर्हन् प्रगेऽसौ ॥९॥

वर्द्धिष्णोर्ब्रह्मवार्धेरधित कुलतिकं किन्नु कल्लोलमाला
किम्वोत्ताला मरालावलिरियममला पर्युपास्ते प्रशस्ता।
यस्योद्या चामराली तरलयति न कांस्कान् विकल्पावलीभि-
र्विश्वं विन्दुर्जिनेन्दुः स कुशल जलधिं मेऽद्य कल्लोलयत्वम् १०

दीपत्विड् नैकरत्नाङ्कुरमणिखचितं पादपीठप्रतिष्ठ-
मध्यारूढं हरीन्द्रासनममरकृतं मुक्तिवर्त्मोद्गृणन्तम्।
अन्तः पर्षत्सतर्षत्रिदशनरवरैर्हर्षकौतूहलोत्कैः
प्रेक्ष्य त्वां सेव्यमानं जिनवृषभ! कदाऽमन्दनन्दिं लभेऽहम् ११

ॐकारोऽन्तस्त्रिलोकप्रसृमरमहसां तीव्रतापार्त्तिहर्त्ता
ह्रींकारस्त्वं च नेतर्धृतिमतिविलसत्कीर्त्तिसंपत्ततेस्तत्।
स्वं तेजो नः प्रदेयात् प्रभुरिति मतितो यन्नु किं द्वादशाऽर्काः
शुम्भद्भामण्डलाङ्का दहरहरभज(?)च्छ्रेयसे श्रेयसे सः॥१२॥

दुर्योधं क्रोधयोधं झटितिहतहतेत्येषहन्ताऽक्षयन्ता
मानादीन् दुर्मथान् यस्त्रिभुवनमथनान्नाथनाथेत्यनाथान्।
तज्जित्यै नाथमेतं श्रयत कृतधियो यस्य दिव्यानकानां
वृन्दं गर्जन् दिवीति प्रवदति जगतां पातु नस्तीर्थपोऽसौ॥१३॥

योऽधाक्षीद् ध्यानवह्नौ धगधगितिकृतिप्रोज्ज्वलत्कीलमाले
रागद्वेषोग्रमोहप्रबलपरिबृढायान् प्रतापप्रचण्डान् ।
तत्कान्तिच्छत्रिकां किं स्वशिरसि बिभृषे धारयन् स्वीयमायुः
सोऽशीर्ति पूर्वलक्षा जिन! चतुरधिकां मन्मनः पाहि पापात् १४

यत्रैकत्राऽपि नेतर्भरतयतिततेरास्यपोतान्यहो स्यु-
र्लक्षं षष्टिः सहस्रास्तदतुलकमलाकेलिकृद्धकवक्त्रम् ।
पाणावादाय मध्ये रविमितसदसं धर्मयन्तं वृषाङ्कं
चानूरूप्याश्रितं त्वां कलितशिवसुखं वीक्ष्य भव्या भजन्ते १५

न पुष्कलश्रीः किमु पुष्कलावती
पुरी गरीयस्यपि पुण्डरीकिणी ।
यो भूषयेस्त्वं कुलशेखराधिप-
प्रियासुनन्दोदरशुक्तिमौक्तिकम् ॥ १६ ॥

त्रातर्जातोऽसि कुन्थोस्त्वमरजिनपतेश्चान्तराले विदेहे
भंगाग्र्या भाग्यभंग्या तदनु शिवगमात् सुव्रतस्यात्तदीक्षः ।
मुक्तिः प्राप्यात्वयेष्यात्युदयजिनपतौ मोक्षमाप्तेऽथ तं त्वां
प्रातर्नित्यं स्मरन्तः कतिकति कृतिनो नाष्टपुष्टर्द्धयः स्युः ॥ १७ ॥

स्तुत्वा त्वां गुरुसोमसुन्दरतरज्योतिष्मतीं संपदं
सूरीन्द्रैर्मुनिसुन्दरैरहरहः स्तुत्या श्रयन्ते न के ।
भव्याः श्रीकुलशेखरोज्ज्वलकुलोदन्वत्सुधादीधिर्ति
मुक्तिश्रीवररत्नशेखरलसच्चारित्ररत्नार्च्यताम् ॥ १८ ॥

श्रीसीमन्धरसार्वसिन्धुरधरां श्रृङ्गारयन्तन्तरां
मध्ये पूर्वमहाविदेहविजयश्रीपुष्कलावत्यहम् ।

एवं त्वां स्तवयन्ननन्तमहिमन् याचे न किञ्चित् परं
देयास्त्वा भवमात्मवैभवभुवं सौवांह्रिसेवारसम् ॥ १९ ॥

॥ इति श्रीसीमन्धरस्वामिस्तोत्रं समाप्तं विबुधमण्डन पं० सहजमण्डनगणिकृतम् ॥

## अथ पार्श्वजिनस्तोत्रम् ।



नमद्देवनागेन्द्रमन्दारमालामरन्दच्छटाधौतपादारविन्दम् ।
परानन्दसन्दर्भलक्ष्मीसनाथं स्तुवे देवचिन्तामणिं पार्श्वनाथम् १

तमोराशिवित्रासने वासरेशं हतक्लेशलेशं श्रियां सन्निवेशम् ।
क्षमालीनपद्मावतीप्राणनाथं स्तुवे देवचिन्तामणिं पार्श्वनाथं ॥२॥

नवश्रीनिवासं नवाम्भोजनीलं नतानां स्वश्रीदानदाने सलीलम् ।
त्रिलोकस्य पूज्यं त्रिलोकस्य नाथं स्तुवे० ॥ ३ ॥

हतव्याधिवेतालभूतादिदोषं कृताशेषपुण्यावलीपुण्यपोषम् ।
मुखश्रीपराभूतदोषाधिनाथं स्तुवे० ॥ ४ ॥

नृपस्याश्वसेनस्य वंशेऽवतंसं जनानां मनोमानसे राजहंसम् ।
प्रभावप्रभावाहिनीसिन्धुनाथं स्तुवे देवचिन्तामणिं पार्श्वनाथम् ५

कलौ भाविनी कल्पवृक्षोपमानं जगत्पालने सन्ततं सावधानम् ।
चिरं मेदपाटस्थितं विश्वनाथं स्तुवे देवचिन्तामणिं पार्श्वनाथम् ६

इति नागेन्द्रनरामरवन्दितपदाम्भोजप्रवर्त्तितेजाः ।
देवकुलपाटकस्थः स जयति चिन्तामणिः पार्श्वः ॥ ७ ॥

॥ इति देवकुलपाटकमण्डनचिन्तामणिपार्श्वजिनस्तोत्रम् ॥

# अथ श्रीवरकाणकपार्श्वजिनस्तवनम् ।

नमतामितकामितकामघटं घटनापटुनोद्यनिधायि नटम् ।
निजरूपसुरूपतयाऽस्तजिनं वरकाणकराणकपार्श्वजिनम् ॥ १ ॥
भजताद्भुतभाग्यभवद्विभवं विभवं भविनां कृतभव्यभवम् ।
महिमर्द्धिमहोदधिमध्यजिनं वरकाणकराणकपार्श्वजिनम् ॥ २ ॥
महताहतमन्मथभूमिभुजं भुजगावनिवल्लभलम्बभुजम् ।
परमारकमारनिरासजिनं वरकाणकराणकपार्श्वजिनम् ॥ ३ ॥
श्रयत श्रितसेवकदौस्थ्यहरं हरभूधरबन्धुरकीर्त्तिधरम् ।
सततत्रिपरीतसमस्तजिनं वरकाणकराणकपार्श्वजिनम् ॥ ४ ॥
स्मरत स्मरणोत्सुकसूरिगणं गणनातिगतुङ्गगुणप्रगुणम् ।
नतिमात्रनिरस्तजगद्वृजिनं वरकाणकराणकपार्श्वजिनम् ॥ ५ ॥
कुरुतां नरमान्तरवैरिभरं भरतावनिजं च विभूतिमरम् ।
प्रणयंतमिमं जनमप्यजिनं वरकाणकराणकपार्श्वजिनम् ॥ ६ ॥
नुतनित्यनमन्नृपनागनरं नरकादिकपातकवर्णनरम् ।
यमुनाजलवीचिलसद्वृजिनं वरकाणकराणकपार्श्वजिनम् ॥ ७ ॥
नयवानतिमार्गमुदारतरं वरसाहृतदुर्गतिदुःखदरम् ।
मनसा वचसा वपुषा वृजिनं वरकाणकराणकपार्श्वजिनम् ॥८॥
श्रीमेदपाटमरुमण्डलसन्धिदेश श्रेयःप्रवेशवरकाणकसन्निवेशः ।
इत्थं स्तुतो विजयतां वरकाणनाम श्रीपार्श्वनाथभगवान्गुणरत्नधाम

॥ इति श्रीवरकाणकपार्श्वजिनस्तवनम् ॥

# अथ घाणामण्डनमहावीरजिनस्तवनम् ।

महानन्ददुग्धोदधौ वर्त्तमानं महामङ्गलालीविधौ वर्द्धमानम् ।
सुधांधोवधूधोरणीगीयमानं स्तुवे घाणके श्रीजिनं वर्द्धमानम्॥१॥
मरंब्रह्मपीयूषपीयूषमानं सुकर्पूरकस्तूरिकासन्निभानम् ।
समुद्भूतसंभूतभावर्द्धमानं स्तुवे घाणके श्रीजिनं वर्द्धमानम्॥२॥
मदोन्मादमाद्यन्मरुल्लेलिहानं वचोऽर्थश्रितादेसविश्लेषहानम् ।
मदाब्जापतद्यक्षराट्यातुधानं स्तुवे घाणके श्रीजिनं वर्द्धमानम् ३
महीमण्डपाखण्डलक्ष्मीवितानं समुन्मूलितक्लेशवल्लीवितानम् ।
नदोभिद्रजाम्बूनदाम्भोजयानं स्तुवे घाणके श्रीजिनं वर्द्धमानम्४
नरैः किन्नरैर्निर्ज(रजी)रीभूयमानं कुकर्मोर्मिघर्मच्छिदाकायमानम्।
सतां विघ्नविध्वंसने सावधानं स्तुवे घाणके श्रीजिनं वर्द्धमानम्५
सुहृज्जन्तुजीवातुतुल्यावदानं कृतोन्मादिदुर्वादिवृन्दावदानम् ।
वितीर्णद्विजाद्यर्थितार्थप्रदानं स्तुवे घाणके श्रीजिनं वर्द्धमानम् ६
वियद्वाहिनीवारिकीर्त्याभिधानं स्फुरद्भाग्यसौभाग्यसंपन्निधानम् ।
जगज्जागरूकप्रभावप्रधानं स्तुवे घाणके श्रीजिनं वर्द्धमानम्॥७॥
क्षमादक्षताक्षोदितक्ष्माभिमानं मनोनल्पसङ्कल्पकल्पोपमानम् ।
परिस्फूर्त्तिमत्कीर्त्तिभिर्निस्समानं स्तुवे घाणके श्रीजिनं वर्द्धमानम्८
इति घाणकक्षोणिभृद्वर्द्धमानः स्तुतः सद्गुणश्रेणिभिर्वर्द्धमानः ।
जिनो जीवितस्वामिनामादधानश्चिरं नन्दतान्नन्दयन्तं ददानः९

॥ इति श्रीघाणामण्डनमहावीरस्तवनम् ॥

पं० उदयविजयगणिनाऽलेखि संखेडानगरे इति मङ्गलम् ।

वन्दे मुदा श्रीगुरुपादपद्मम् ।

## अथ श्रीपार्श्वनाथजिनस्तवनम् ।



सिद्धं हृदयनिरुद्धं बुद्धं ध्यानैर्लताभिरिव वृक्षम् ।
अतिशयमहिमाकक्षं वन्दे वामेयसुरवृक्षम् ॥ १ ॥
जिनमिह नवसमवक्षं भवप्रतियक्षं च सर्वगुणलक्षम् ।
केवलरमाकटाक्षं कुरु पक्षे दक्ष ! भवसमरे ॥ २ ॥
संमतिसंयतिसन्ततिसम्मतिदुर्गतिहं
शोचनमोचन केवललोचन दर्शनदम् ।

वामेयसुरवृक्षं श्रीपार्श्वजिनकल्पद्रुमं अहं वन्दे प्रणमामि इति सम्बन्धः । किंरूपं वामेयम् ! सिद्धं सिद्धसर्वकार्यम् । पुनः किंविशिष्टम् ? हृदयनिरुद्धं चित्ते गुम्फितम् । कैः ? बुद्धध्यानैः बुद्धा आचार्यादि परमा योगीन्द्रास्तेषां ध्यानैः । कामिरिव कम् इव ? यथा लताभिरुद्धं वृक्षं श्रीवीरज्ञानशालवृक्षं, पुनरपि राजगृहे नगरे भविष्यन् शालिवृक्षतपोत्पादरूपं अशोकवृक्षं वा जनो वन्दते । तथा बुद्धः ध्यानैरुद्धं जिनमहं वन्द इत्यर्थः । पुनः किंविशिष्टम् ? अतिशयाश्चतुस्त्रिंशत्, महिमा ध्यातृजनसर्वकार्यसिद्धिकर्तृत्वं तेषामाकक्षोऽङ्गीकार आसमन्तात् कक्षं वनं वास्थानमित्यर्थः ॥ १ ॥ जिनमिह० हे दक्ष ? पण्डित ! जिनमधिकारात् पार्श्वनाथपक्षे साहाय्ये कुरु विदेहि । क ? भवसमरे संसारसंग्रामे किं ! नताः सर्वे यक्षा देवा यस्मै स तम् । पुनः भवप्रतिपक्षं संसारवैरिणं । पुनः किं० सर्वगुणानां लक्षाणि यत्र स तम् । पुनः किं० केवललक्ष्म्याः कटाक्षबाणा यस्मिन् स तम् ॥ २ ॥ संमति० हे केवललोचन ! हे शोचनमोचन ! शोचनस्य मोचनं त्यागो यस्य स तम् तस्य संबो० त्वां जिनम् हृदये प्रविधाय कृत्वा बुधाः पण्डिताः निजकर्ममलं तथा प्रदहन्ति, इव यथा शुद्धरसेन्द्रं पारदं मध्ये मुक्त्वा नाणमलं सीसादिमलं प्रदहन्ति कनकं कुर्वन्तीत्यर्थः । किं विशिष्टं त्वाम् । सम्यग् मतिर्येषां ते सम्मतयः सम्मत०

त्वां हृदि शुद्धरसेन्द्रमिव प्रविधाय जिनं
नागमलं प्रदहन्ति बुधा निजकर्ममलम् ॥ ३ ॥

(सोपानकम्)

कल्याणाम्बुधरो महोदयकरो रोगार्त्तिगर्त्ताहरो
मोहोच्छेदकरो जरामरहरो विश्वासकीर्त्तीश्वरः ।
भग्नानङ्गशरोऽहताहिपगरो विध्वस्तजन्मादरो
ब्रह्माण्डैकदिवाकरो भवतु मे मित्रं प्रभो! ते गुणः ॥४॥

(काव्यम्)

सकलमुनिजनप्रमोदकं कमठदग्धहरिप्रतिबोधकम् ।
निखिलभवतमोविरोचनं नम जिनं जगतीत्रयलोचनम् ॥ ५ ॥

(मागधिका)

करुणाकरणादरणार्णवलोलतरङ्गतरं
तरुणीरमणीशरणीकृतमन्मथमर्महरम् ।

---

यश्च ते संयतयश्च निर्ग्रन्थाः सम्मतिसंयतयश्चस्तेषां सन्ततिः श्रेणिस्तस्याः सन्ततिः प्रणाममात्रेण दुर्गतिं हन्तीति ते स तम् । पुनः किं० दर्शनदम् सम्यक्त्वदातारम् ॥ ३ ॥ कल्याणांबुज० हे प्रभो! तव गुणो जातावेकवचनम्, मे मित्रं भवतु भूयात् । किं० गुणः? कल्याणेषु मङ्गलेषु अम्बुधरो मेघ इव । पुनः किं! महोदयो मोक्षस्तं करोतीति । पुनः किं०! रोगार्त्तिः रोगपीडा सा एव गर्त्ता तां हरतीति । पुनः किं० मोहोच्छेदं मोहनीयकर्मविनाशं करोतीति । पुनः किं०? जरामरणहरः । विश्वे ब्रह्माण्डे या व्याप्ता कीर्त्तिस्तस्या ईश्वरः । पुनः किं० भग्नं अनङ्गस्य कामस्य शरो बाणो यस्मात् स तथा तं हतं विध्वस्तं अहिपस्य महासर्पस्य गरं विषं येन सः । तथा विध्वस्तो जन्मादरो येन । तथा ब्रह्माण्डैकदिवाकरः सूर्यः ॥ ४ ॥ हे जीव! जिनं पार्श्वनाथं नमः किं० समस्तयोगीन्द्रस्य प्रमोदकं आनन्दोत्पादकम् । तथा कमठतापसेन दग्धस्य हरेः सर्पस्य प्रतिबोधकम्! तथा समस्तभवतमोऽज्ञानस्य विनाशने विरोचनः सूर्यः किं० जगतीत्रयस्य विश्वत्रयस्य लोचनमिव लो० ॥ ५ ॥ करुणाकरणा० हे प्राणिन्! पारयतं पार्श्वजिनं नमः ।

अधरीकृतदेवनदीसुतरीशुचिगीर्विभवं
मदये हृदये क्षुदये तरणेर्नम पारगतम् ॥ ६ ॥

(आलिङ्गनकम्

विश्वेन्दीवरभास्वते जिनपते ! त्रैलोक्यवाचस्पते !
शुद्धाचारवते प्रबुद्धमरुते सर्वत्र शोभावते ।
दुःकर्माद्रिशते युगान्तमरुते निर्लेपतां कुर्वते
ब्रह्मज्ञानवते नमो भगवते वामेय ! तुभ्यं यते ! ॥ ७ ॥

( काव्यम् )

निचितदुरिततिमिरनिकररविविलसितं
सकलसुकृतसुकृतकुमुदविपिनविधुसमुदितम् ।

---

क हृदये, किं० सदये करुणायुते । कस्मिन् । सति ? उदये सति उद्गमे सति, कस्य ? तरणेः सूर्यस्य प्रभाते इत्यर्थः । किं० जिनं, करुणाया दयायाः करणं तस्या दरणम् । स एवाऽर्णवः समुद्रस्तस्य लोलाश्चपला अतिशयेन तरङ्गाः तरङ्गतरा यत्र स तम् तथा तरुणी या रमणी स्त्री तथा शरणीकृतो यो मन्मथः कामस्तस्य मर्म हरतीति । तथा देवनदी गङ्गा, सुतरी शोभना द्रोणी, पवित्रतया विश्वतारणतया च ते द्वे अधरीकृते यया एवंविधा शुचिः पवित्रा गीस्तस्या विभवो लक्ष्मीर्यत्र ॥६॥ हे श्रीवामेय ! विश्वेन्दीवर० हे यते ! हे जिनपते ! हे त्रैलोक्यवाचस्पते ! त्रिभुवनगुरो ! तुभ्यं नमः । किंविशिष्टाय तुभ्यम् ? विश्वसूर्याय । पुनः किं० ? पवित्राचारवते । पुनः किं० ? प्रबुद्धदेवाय । पुनः किं० ? सर्वज्ञशोभावते । पुनः किं० कल्पान्तवायवे, क ? दुःकर्मपर्वतशते । किं कुर्वते तुभ्यं ? कुर्वते, काम् ? निर्लेपतां निःकर्मताम् । ब्रह्मज्ञानवते, तथा भगवते परमैश्वर्ययुक्ताय ॥ ७ ॥ निचितदुरि०, हे जिन ! तव गुणरत्नसमूहगणनं अपारं शं सुखं तनुते विस्तारयति, किं० ? समिचितानि सञ्चितानि यानि दुःकृतानि तान्येव तिमिराण्यन्धकाराणि तेषां निकरः समूहस्तत्र रविविलसितं सूर्यकर्मेव । पुनः किं० ? सकलानि समस्तानि यानि सुष्ठु कृतानि सुकृतसुकृतानि पुण्यानि तान्येव कुमुदानि तेषां विपिनं वनं तत्र विधुसमुदितं चन्द्रोदय इव । पुनः किं० ? अरिः शत्रुः, हरिः सिंहः सर्पो वा, करी

अरिहरिहरिकरिसमरसमदरगहनदहनगतं
जिन ! तव गुणसुमणिगण नम परेशमिह तनुते ॥८॥
(संगतकं)

भन्दकन्द कन्द ! नन्दपुण्यकुन्दवृन्दचन्द्र ! वन्दबलह !
दुःकृतान्त ! निःकृतान्त ! सुकृतान्त ! विप्रशांतजनन ! ।
वांतसर्वधातुजातविश्वजन्तुघातपात ! जिनयशान्तदान्त !
सिद्धिकान्त ! पूतनीलदेहकान्त ! भूवितांतसुकृतशांतिदस्त्वं ९
(नाराचकं)

जिनमखिलगुणाकरावतारं
दलितसमस्तमदेन्द्रियार्थवारम् ।

---

हस्ती, समरः संग्रामः एषां द्वन्द्वः तेषां समस्तो दरो भयं स एव गहनं वनं तत्र दहनगतिरिव वह्निगतिरिव तम् ॥८॥ भंदकंद०, हे भंदकन्दकन्द ! भन्दानि भद्राणि तान्येव कन्दा मूलानि तत्र कन्द इव, कं ददातीति कन्दो मेघः। पुण्यान्येव कुन्दानि पुण्यकुन्दानि, तेषां वृन्दः समूहस्तत्र चन्द्र इव तस्य स० । तथा हे मन्दबलह ! मन्दः शनैश्चरो ग्रहविशेषस्तस्य बलं पीडां हंतीति मन्दबलहः तस्य संबोधनम् । तथा हे दुःकृतान्त ! दुःकृतं पापं तस्याऽन्तोऽवसानं यस्माद् येन वा तस्य संबोधनं ! हे निःकृतान्त ! निर्गतः कृतान्तो यमो यस्मात् तस्य सं० । हे सुकृतान्त ! सु शोभनः कृतान्तः सिद्धान्तो यस्य तस्य सं० । तथा हे विप्रशान्त जनन ! प्रशान्तानि जननानि उत्पत्तयो यस्य तस्य सम्बो०। हे वान्तसर्वधातुजातविश्वजन्तुघातपात ! सर्वधातूनां कनकादीनां जातः समूहः तथा विश्वे च ते जन्तुघातपातः, वान्तः सर्वधातुजातो विश्वजन्तुघातपातो येन तस्य सं० । तथा हे शान्तदान्त ! तथा सिद्धिकान्त ! मुक्तिवर ! तथा हे पूतनीलदेहकान्त ! पवित्रनीलवर्णतनुकमनीय ! त्वं नंद चिरं जय । किंविशिष्टस्त्वम् ? भूनितान्तसुकृतशान्तिद भुवि मेदिन्यां नितान्तं निरन्तरं सुकृतं शांतिं च ददातीति सः ॥ ९ ॥ जिनमखिल०, हे लोकाः समस्तगुणाकरावतारं जिनं भजत परिचरत, किंविशिष्टं जिनम् ? दलिताः समस्ता इन्द्रियार्थवारा येन स तम् ! प्रशमरसस्य तरङ्गसंयुते नेत्रे ताभ्यां तारो

प्रशमरसतरङ्गनेत्रतारं भजत भजत
भवाब्धिमग्नलोक ! तारम् ॥ १० ॥

( कुसुमलता )

वज्री स्वर्गिषु मानवेषु च यथा चक्री च तेजस्विनां
मार्तण्डः कनकाचलो गिरिषु वा वृक्षेषु कल्पद्रुमः ।
गङ्गा सर्वनदीषु वा हिमरुचिस्तारासु मुख्यस्तव
सद्ध्यानेषु तव स्वरूपसुलयो नेतो मया ध्यायते॥११॥

( काव्यं )

सदरी बदरी चमरी भ्रमरी शबरीखचरीविनरी
सुसुरीतिपुरी मधुरीकृतगीतगुणम् ।
अमरीकबरीचमरीकृतवीरसमीरगतं शफरी-
लहरीनगरीमिव शीलय जीव ! जिनम् ॥ १२ ॥

( आलिङ्गनकम् )

---

मनोज्ञस्तम् । पुनः किं० ? भवसमुद्रमग्नलोकतारम् ॥ १० ॥ हे नेतः ! श्रीवामेय ! तव स्वरूपसुलयस्तथा मया सद्ध्यानेषु प्रकृष्टो ध्यायते, तथा कथम् ? यथा स्वर्गिषु देवेषु वज्री इन्द्रः प्रकृष्टो मुख्यः, यथा मानवेषु चक्री सार्वभौमस्तथा तेजस्विनां तेजोवतां सूर्यः, यथा गिरिषु पर्वतेषु कनकाचलो मेरुः, तथा, यथा वृक्षेषु कल्पद्रुमः, तथा, यथा सर्वनदीषु गङ्गा, यथा तारासु हिमरुचिश्चंद्रः प्रकृतः तथा तव स्वरूपसुलयो ध्यायते ॥ ११ ॥ सदरी बदरी०, हे जीव ! जिन श्रीपार्श्वनाथं शीलय सेवस्व । किं वि० ? दरी गुहा, बदरी वृक्षविशेषः, चमरी धेनुः, भ्रमरी मधुकरी, शबरी भिल्लपत्नी, खचरी, एषां द्वन्द्वः एताभिः सह यद्वर्तं तत् सदरी बदरी चमरीत्यादि ! यावत् वनं रीत्या नीत्या युता या पुरी नगरी इति पुरी सदरीत्यादि, वरनं चरीति पुरीति च द्वन्द्वः, तत्र मधुरीकृता गीतगुणा यस्य स तम् । पुनः किं० ? अमर्यो देव्यः तासां कबर्यः केशरचनाविशेषाः त एव चमर्यः कृष्णचामराणि तैः सह कृतानि मिलितानि चीराणि पट्टकूलानि तेषां समीरो वायुस्तत्र गतः प्राप्तः स तम् । एवंविधं जिनं शीलय सेवस्व, कं कामिव ?

सुरनरसुखसम्पदामगारं
विपुलमतियतिरमोरुकण्ठहारम् ।
कमठहठकुकाष्ठताकुठारं स्मर
पुरुषोत्तममङ्गनाविकारम् ॥ १३ ॥

(कुसुमलता)

हेमकुचकुम्भिनी विविधसुरमानिनी कुसुमवरदामिनी वदति गीतं
भुवनपतिकामिनी मरुजवरवादिनी नागसीमन्तिनी वहति तालम् ।
चन्द्रमण्डलमुखी हंसगतिगामिनी कापि लीलावती धरति तन्ति
कलितकटिमेखला श्रवणवरकुण्डला नक्रमुक्ताफला सृजति नृत्यं १४
रचितकटिकिङ्किणी खचिततनुकञ्चुका तिलकमुखशोभिनी वाति तूरं
हारकेयूरका क्वनितपदनूपुरा ललितसुललन्तिका काऽपि वीणां

---

इव यथा शफरी मत्स्यी लहरीरूपां नगरीं सेवते इत्यर्थः ॥ १२ ॥ सुरनरसु०, हे प्राणिन् पुरुषोत्तमं जिनं स्मर, किं० ? अगारं गृहं, कासाम् ? सुरनरसुखसंपदाम् देवमनुष्यसुखश्रियाम् । विपुलमतिनिर्ग्रन्थानां रमा लक्ष्मीस्तस्याः कण्ठे उरु विशालं हारमिव । कमठतापसस्य हठ एव कुकाष्ठत्वं तत्र कुठार इव ! पुनः किं० ! अङ्गनायामविकारो विकाररहितस्तम् ॥ १३ ॥ कथम् ? ताण्डवं कुर्वती तद्दर्शयति, हेमकुचकुम्भिनी हेमवर्णौ यौ कुचौ पयोधरौ हेमवर्णौ हेमवर्णौ कुचकुम्भौ यस्याः सा हेमकुचकुम्भिनी एवंविधा विविधा सुरमानिनी । तथा कुसुमवरदाम विद्यते यस्याः सा कुसुमवरदामिनी गीतं वदति गीतं गायति । तथा भुवनपतिकामिनी किंविशिष्टा ? मरुजानि मर्दलानि वरं यथा स्यात् तथा वादयतीति मरुजवरवादिनी । तथा नागसीमन्तिनी तालं वहति प्रापयति । तथा कापि सुरी धृतकटिमेखलासती, तथा काऽपि श्रवणवरकुण्डला कर्णप्रधानकुण्डला, नक्रमुक्ताफला सती तन्ति धरति । तथा काऽपि चन्द्रमुखी चन्द्रवदना हंसगतिगामिनी लीलायुता नृत्यं नर्तकं सृजति करोति ॥१४॥ हे इन ! स्वामिन् ! मे मम तर्को विचारणाऽस्मिन् विद्यते इति, कथम् ? अहिपपद्मावती० नागेन्द्र-

अहिपपद्मावती ताण्डवं तन्वतीतीन ते किं मनो हरति नैव
रोचते तत्र किं मोदसे तेन नो वेत्ति तर्कोऽस्ति नीरागोऽसि........१५

(गेयराग)

निर्विद्यागुरुविद्वते गुणवते निर्ग्रन्थता राजते
ध्येयानां महते सुखं विदधते सौभाग्यतः स्फूर्जते ।
शुक्लध्यानवते शमं च वहते योगस्य निद्रावते निद्रायां
स्फुरते च योगिमनसो मे ते नमोर्हन् सते ॥ १६ ॥

(काव्यं)

---

पद्मावती ते तव मनो हृदयं न प्रापयति, किं कुर्वंती पद्मावती ? इति यत्ताण्डवं नाटकं करोति तत्ताण्डवं वा किं न रोचते तेन हेतुना किं न मोदसे इति मे मम विचारणा विद्यते इति सम्बन्धः । इति तथा काऽपि रचितकटिकिङ्किणी, खचित-तनुकञ्चुका, तिलकमुखशोभिनी तूरं वाति । तथा काऽपि हारकेयूरभूषणा, स्वनितचरणनूपुरा सशब्दपदनूपुरा सती वीणां वातीति गम्यम् । इति अमुना प्रकारेण ताण्डवं कुर्वंती पद्मावती ते तव मनः किं न हरति ? किं वा तत्र रोचते ? तेन त्वं न मोदसे इति तर्को विचारणाऽस्ति, आ ! ज्ञातम् ! स्मृतं, आ ईषत् स्मरणे, त्वं नीरागोऽसि तेन मोदादिकं न ॥ इति घटितयुग्मम् ॥ १५ ॥ निर्विद्यागुरुविद्वते० । हे अर्हन् ? मम मते तुभ्यं नमोऽस्तु । किंवि-शिष्टाय तुभ्यम् ? निर्विद्यागुरुविद्वते गुरुं विना विद्वते पण्डिताय । पुनः किं० ? गुणवते सर्वगुणयुताय । पुनः किं० ? निर्ग्रन्थतया राजते विराजमानाय । पुनः किं० ? ध्येयानां मध्ये ध्येयार्हाणां पदार्थानां मध्ये महते श्रेष्ठाय । किं कुर्वंते तुभ्यम् ? विदधते कुर्वंते । किम् ? सुखम् । पुनः किं० ? योगस्य निद्रावते योगमध्ये निद्रा-वते । लयं प्राप्ताय । पुनः किं० ? स्फूर्जंते शोभमानाय । कुतः ? केन ? सौभा-ग्यतः सर्वजनवल्लभत्वेन । किं० ? शुक्लध्यानवते निर्मलध्यानवते । च पुनः किं वहते ? वहमानाय ? किं ? शमम् परमं वैराग्यं । पुनः किं० ? स्फुरते स्पन्द-मानाय । क्व ? निद्रायाम् । कस्य कोऽपि मनसः योगीन्द्रस्य । पुनः किं० ? सते-

वासवमौलिवृन्दविनते कृतसमस्तविरते
वीतसमस्तदोषकुगते जिन विशदयते ।
धौतशरीर कुन्दसुरभे वरकलभगते चेतसि मे
हि मम रमते तव सुगुणततेः ॥ १७ ॥

( खिजितम् )

सिद्धबुद्ध रुद्धरागरोष पापपोषमानदोषजनन
भावयुद्धसुप्रसिद्धदुर्निवारवीरमार विजय ।
सर्वऋद्धिसिद्धिबुद्धिवृद्धिशुद्धलब्धिदानवचन
सन्निरुद्धमोहमल्लवीतराग देहि मे हिते स्वरूपकलनमीशहे

( नाराचकम् )

बहुलमधुमासके वरचतुर्थीदिने प्राणतस्वर्गतश्च्यवनभद्रो
योऽश्व तेनाधिपश्रीसुवामाङ्गजः शिवपुरीतिलकसमभुजगचिह्नः ।

---

सज्जनाय ! ॥१६॥ वासवमौलिवृन्द०, हे जिन ! हे वासवमौलिवृन्दविनत ! इन्द्रो- समाजमुकुटसमूहविनत ! हे कृतसमस्तविरते, तथा हे वीतसमस्तदोषकुगते तथा हे शदयते ! पवित्रमुने । तथा हे धौतमिव शरीरं यस्य तस्य सं० । अज्ञातोऽपि ज्ञात इवाङ्ग । हे कुन्दकुसुममिव सुरभे सुगन्ध ! तथा हे कलभगते हे गजगते ! ते तव सुगुणततेः श्रेणेर्मम हि निश्चितं मे मम चेतसि रमते विलसति ॥ १७ ॥ हे ईश ! स्वामिन् ! हे रुद्धरागरोषपापपोषमानदोषजनन ! रागादीनां द्वन्द्वसमासः । रुद्धा रागादयो येन तस्य सम्बोधनम् ! युद्धं द्विधा द्रव्यभावभेदतस्तत्र भावयुद्धे- ऽन्तरङ्गयुद्धे सुप्रसिद्धदुर्निवारवीरमारस्य विजयो यस्मात् तस्य सम्बोधनम् । तथा हे सर्व०, ऋद्धिसिद्धिबुद्धिवृद्धिशुद्धलब्धिदानवचन ! सर्वऋद्ध्यादितः सर्वशुद्धलब्धि- यावत् द्वन्द्वसमासः । तासां दानं यस्मिन् एवंविधं वचनं यस्य तस्य सम्बोधनम् । तथा हे सन्निरुद्धमोहमल्ल ! हे वीतराग ! मे मम हि निश्चितं ते तव स्वरू- पकलनं तव स्वरूपज्ञातृत्वं देहि प्रयच्छ ॥ १८ ॥ बहुलमधुमासके०, स श्रीपार्श्व- जिनो वो युष्माकं मुदे आनन्दाय अस्तु भवतु । स कः ? यो बहुलमधुमासके चैत्रकृष्णपक्षे वरचतुर्थीदिने प्राणतस्वर्गतश्च्युत्वा च्यवनभद्रो जातः च्यवनकल्या-

पौषमासे जिनो बहुलदशमीदिने जननकल्याणको मरकताभो
वरविशाखाभतुलराशिनवकरतनुस्त्रिशदब्दो गृहेऽभुक्तराज्यः १९
पौषमासे व्रती बहुलतैकादशी त्रिशतनरवरयुतोऽष्टमतपस्वी
कोपकटधनगृहे परमान्नकृतपारणः छद्मताशीतित्रिदिने विहारी।
सुपिकमधुमासके सितचतुर्थीदिने धातकीद्रुमतले षष्ठतपसा
सर्ववेदीजिनो विश्वमङ्गलकरो वेदबीजं ददौ दशगणिभ्यः ॥२०॥
पार्श्वपद्मावतीसेविताशासनः सहस्रषोडशमुनिव्रातबोधी
साष्टत्रिंशत्सहस्रार्यिकानायकः सप्तदशकाब्दपर्यायधारी ।
श्रावणाष्टमदिने वर्षशतजीवितो पोषितो मासि सम्मेतशैले
वरत्रयस्त्रिंशदनगारसमसिद्धिगो भुवनहरिचन्दनो वो मुदेऽस्तु २१

(घटितगद्यविशेषकम्)

---

णकः । तथा यः अश्वसेनराजपत्नीवामाङ्गजो नन्दनो जातः । तथा यः भुजगचिह्नो भुजगलाञ्छनो जातः । तथा यः शिवपुरी वाणारसी तस्याः तिलकसमो जातः । तथा यो जिनः पौषमासे बहुलदशमीदिने कृष्णदशम्यां जन्मकल्याणको जातः । तथा मरकतरत्नकान्तिः । विशाखानक्षत्रजननस्तुलाराशिर्नवहस्ततनुस्त्रिंशदब्दो गृही त्रिंशद्वर्षगृही अभुक्तराज्यः । तथा पोषमासे बहुलतया एकादशी कृष्णैकादश्यामित्यर्थः । तत्र त्रिशतराजवरयुतः शतत्रयनृपयुतोऽष्टमस्तपस्वी सन् व्रती चारित्री जातः । तथा कोपकटसन्निवेशे धनगृहिगृहे परमान्नकृतपारणको जातः । त्र्यशीतित्रिदिनछद्मस्थविहारी, सुपिकमधुमासके सुकोकिले चैत्रमासे कृष्णचतुर्थीदिने धातकीद्रुमतले षष्ठतपसा केवली जातः । विश्वमङ्गलकरस्त्रिभुवनकल्याणकरो जिनोऽर्हन् यो वेदबीजं त्रिपदीरूपं दशगणिभ्यो ददौ दत्तवान् । च पुनः पार्श्वः पार्श्वयक्षः पद्मावती देवी ताभ्यां सेवितं आसमन्तात् शासनं यस्य। षोडशसहस्रसाधुव्रातबोधक! एतत्परिवार इत्यर्थः । च पुनः अष्टत्रिंशत्सहस्रार्यिकाधिपः एतत्साध्वीपरिवार इत्यर्थः । सप्त च ते दशकाश्च सप्तदशका सप्ततिवर्षचरणपर्यायधारी । तथा श्रावणाऽष्टमीदिने शतवर्षसर्वजीवितः मासि उपोषितः सम्मेतशैलपर्वते सिद्धियुवतिवरो यो जातः, त्रयस्त्रिंशत्साधुभिः सह मुक्तिं प्राप्त इत्यर्थः ।

नमत नमत जिनपण्डितम् क्लेशनाशभुविमण्डितम् ।
जन्मसागरतरण्डितं त्रिगुणरत्नसुकरण्डितम् ॥ २२ ॥

( सुमहम् )

अरतिरतिविमुक्तप्रबोधाब्धिनिर्मायनिर्लोभनिःकामनिर्माननिःक्रोधनिःशोकनिर्निद्रता सकलजगति निःपापो निःसङ्गतिः कर्मनिर्दम्भनीरागनिर्ग्रन्थता ते सदा । त्रिभुवनागतवस्तुप्रकाशाभ्रलक्ष्मीलसद्दर्पणस्त्वं विनिर्दोष निर्मोह निःप्रेमता शमजलधिनिमग्नं मनो निर्गमायावकाशं न लातीति सञ्चिन्त्य मे ते गुणाब्धि प्रभो ! ॥२३॥

( दण्डक )

सर्वसुरेन्द्रा विश्वनरेन्द्रास्तापनचन्द्राश्चोज्झिततन्द्रा
मङ्गलबुधगुरुशुक्रशनीश्वरराहुककेतुकखेटकवृन्दा ।

---

उपवासी कृतमाससंलेखन इत्यर्थः । स भुवनहरिचन्दनो विश्वकल्पद्रुमो वो युष्माकं मुदेऽस्तु आनन्दाय भूयात् ॥ २१ ॥ नमत नमत जिनपण्डितं, हे भविकाः सततं निरन्तरं जिनपण्डितं जिनविचक्षणं पार्श्वं नमत । किं० ? क्लेशनाशभुवि क्लेशनाशाय भुवि पृथिव्यां मण्डितं स्थापितं जन्मसागरतरण्डितं, उपलक्ष्यते जन्ममरणमेव सागरस्तस्मिन् तरण्डमिव प्रवहणमिव जातस्तम् । त्रिगुणा ज्ञानादयस्त एव रत्नानि तेषां करण्डक इव जातस्तम् ॥ २२ ॥ अरतिरतिविमुक्त०, हे प्रभो, इति अमुना प्रकारेण ते तव गुणराशिं संचिन्त्य सञ्चिन्त्य स्मृत्वा स्मृत्वा शमजलनिधिमग्नं सत् मे मनो हृदयं निर्गमायाऽवकाशं छिद्रं न लाति न प्राप्नोति इति, कथम् ? अरतिरतिभ्यां मुक्तस्त्वमेव प्रबोधाब्धिनिर्मायनिर्लोभनिःकामनिर्माननिःक्रोधनिःशोकनिर्निद्रता च ते तवैव नाऽन्यस्य । सकलजगति सकलब्रह्माण्डे निःपापनिःसङ्गनिःकर्मनिर्दम्भनीरागनिर्वेदनीरोगनिर्ग्रन्थता च ते तवैव सदा निरन्तरं । तथा त्रिभुवनगतवस्तुप्रकाशावबोधाभ्रलक्ष्मीलसद्दर्पणस्त्वमेव । तथा निर्दोषनिर्मोहनिःप्रेमता च ते तवैव इति तव गुणाब्धिं सञ्चिन्त्यसञ्चिन्त्य मे मनः शमजलधिनिमग्नं सत् निर्गमायाऽवकाशं न लाति ॥ २३ ॥ सर्वसुरेन्द्रा० हे पार्श्वजिनाधिप ! तव कीर्तनतस्तव स्तवनतः सर्वे सुरेन्द्रा वासवास्तथा विश्वनरेन्द्राः समस्तचक्रवर्त्यादिभूमीश्वराः तथा तापनचन्द्राः सूर्यपुष्पदन्ताः एते सर्वेऽपि ।

सोमयमासुरवैश्रमणामरवारुणलोकपकिन्नरभूताः

पार्श्वजिनाधिप ! कीर्तनतस्तव शान्तिकरा जगतां तु भवन्तु

(रत्नमाला)

अमतितिमिरपरिवर्जितं ज्ञानमास्तनसुमर्दितम् ।

भारतीवदनचुम्बितं स्मर जिनं त्रिजगदर्चितम् ॥ २५ ॥

(सुमहम्)

निर्दोषध्वनिगर्जते विलसते मुक्त्या तमोभास्वते

सम्मोहं हरतेऽर्हते विकसते ते प्रातिहार्यश्रिया ।

सच्चित्ते भ्रमते पयोजसरते ध्यानाम्बुदोद्विद्युते

श्रीवामेय ! नमो नमो मम विभो ! ज्ञानाम्बुधौ मज्जते २६

(काव्यं)

हरिहरिचलचित्तगुप्तिगुप्तं हरिहरिदङ्कमयूषराजमानम् ।

कमठहरिहरिहरिप्रियाद हरिहरिणातपवारणत्रयाप्तम् ॥२७॥

---

किं० ? उज्झिततन्द्राः सावधानाः त्यक्तनिद्राः । च पुनः मङ्गलादिसर्वे खेटकवृन्दा ग्रहसमूहाः, तथा सोमादिलोकपालाः, तथा किन्नरभूताः एते सर्वेऽपि देवविशेषाः जगतां तु पुनः शान्तिकरा भवन्तु क्षेमविधायिनः स्युः ॥ २४ ॥ अमतितिमिर-परिवर्जितं, हे जन्तो प्राणिन् ! अज्ञानतिमिरमुक्तं, तथा ज्ञानलक्ष्मीस्तनसुमर्दि-तम्, लोलितं आलिङ्गितमिति यावत् । तथा भारत्याः सरस्वत्या वदने चुम्बितो भारतीवदनचुम्बितः, मुखाग्रसरस्वतीरूप इत्यर्थः । तत्र तथा त्रिजगदर्चितं जिनं त्रिभुवनपूजितं जिनं स्मर स्मृतिगोचरं कुरु ॥ २५ ॥ निर्दोषध्वनिगर्जिते० । हे वामेय ! हे विभो ! ते तुभ्यं मम नमोनमः, वीप्सायां द्वित्वं, किं० ! तुभ्यं निर्दो-षध्वनिना गर्जिते धर्मसद्मनीति गम्यं । पुनः किं कुर्वते ? विलसते रममाणाय । कया ? मुक्त्या सह । पुनः किं० ? तमोभास्वते । पुनः किं० ? अर्हते त्रिभुवन-पूजार्हाय । पुनः विकसते, प्रफुल्लाय शोभमानाय । कया ? अष्टमहाप्रातिहार्यश्रिया । पुनः भ्रमते भ्रममाणाय धुसच्चित्ते सज्जनचित्ते । पुनः पयोजसरते कनककमलेषु व्रजमानाय, पुनः ध्यानाम्बुदोद्विद्युते ध्यानपयोवाहान्तरे विद्युदिव द्योतमानाय । पुनः मज्जते स्नानं कुर्वाणाय, क ? ज्ञानाम्बुधौ ज्ञानसमुद्रे ॥ २६ ॥ हरिहरिचल०,

हरिहरिपरिचर्ययोपयुक्तं नखहरिहारि मुदाप्रलोकलेखम् ।
हरिहरिभयभीतिदं च पार्श्वं हरिहरिचन्दनसोदरं नमामि॥२८॥

(काव्ययुग्मम्)

नीतिनदीनसुमीनमहीनमहीनकिरीट-
मानविलीनसुगन्ध कुसुमार्चितपादकजम् ।
दीनदयालुमुनीनमहीनमनोहरचरितमणिं
लीनमुने जिनमुपचर सुरइव सुरतरुमङ्कल ॥ २९ ॥

(चित्राक्षरा)

---

अहं एवंविधं पार्श्वं नमामि । किं० ? हरिर्वायुः पुनर्हरिर्वानरः । ताविव चलं यच्चित्तं तस्य गुप्तिस्तया गुप्तम् । तथा पुनः हरिः शुकः पक्षिविशेषस्तद्वद्धरिदङ्गः नीलवर्णाङ्गस्तस्य मयूखाः किरणास्तै राजमानं शोभमानं, पुनः कमठस्तापस एव हरिर्भेकस्तस्मिन् हरिरिव भुजङ्ग इव तम् । हरिप्रिया लक्ष्मीस्तां ददातीति, तं हरिश्चन्द्रस्तद्वद्धरिणं धवलं आतपवारणं छत्रं तस्य त्रयं तेनाप्तं व्याप्तम् । २७ ॥ हरिः रविः पुनः हरिर्वासुदेवस्तयोः परिचर्या सेवा तया उपयुक्तः तम् इतं अथवा हरिः सर्वः तस्य हरिरीशः नागेन्द्रस्तस्य परिचर्यया उपयुक्तस्तम् । तथा नखाः कामाङ्कुशास्तेषां हरयः अंशवस्तैर्हारि मनोज्ञं यथा स्यात्तथा, मुदा प्रालोकलेखा विश्वश्रेणिर्यस्मात् स तम् । तथा हरिः सिंहो हरिर्यमस्तयोर्भयं तस्य भीतिं ददातीति स तम् । तथा हरिरिन्द्रस्तस्य हरिचन्दनो मन्दारवृक्षस्तस्य सोदरः सदृशस्तं पार्श्वं नमामि ॥ २८ ॥ नीतिनदीन०, हे लीनमुने ! हे भक्तमुने ! जिनं पार्श्वजिनं उपचर सेवस्व । किं० ? नीतयो न्यायास्तेषां नदीनः समुद्रस्तत्र सुमीन इव तन्मध्यस्थायी इत्यर्थः तम् । तथा अहीनो धरणेन्द्रः महीना राजानस्तेषां किरीटानि मुकुटास्तेषु मानानि पृष्टानि विलीनानि विलग्नानि सुगन्धीनि च तानि विबुधकुसुमानि तैरर्चितं पादकजं पादपद्मं यस्य स तम् । तथा दानेषु दयालवः कृपापरा ये मुनयस्तेषामिनः स्वामी स तम् । तथा अहीनं सम्पूर्णं मनोहरं चित्तचमत्कारि यच्चरितं चारित्रं तदेव मणी रत्नं यस्य स तम् । जिनं, कमिव उपचर ?

अतिमुदितसकलचन्द्रं स्तुतिमिति पार्श्वं च जयजजिनचन्द्रम् ।
गुरुविजयदानभद्रं शान्तिकरं सर्वदा लोके ॥ ३० ॥

॥ इति श्रीपार्श्वजिनस्तवनम् ॥ शा. कीकाई पठनार्थम् ॥

---

॥ अर्हम् ॥

## ॥ अथ नवखण्डपार्श्वजिनस्तवनम् ॥

जय प्रभो ! त्वं नवखण्डपृथ्वीप्रख्यातकीर्ते ! नवखण्डमूर्ते ।
भव्याब्जभानो ! ऽनवखण्डसंविद् ! विश्वेश्वर ! श्रीनवखण्डपार्श्व! ॥१॥

ते तत्क्षणेनाऽनवखण्डमुच्चैर्विघ्नानशेषानवखण्डयन्ति ।
ये त्वां स्तुयुर्दानवखण्डनार्च्य ! विश्वेश्वर ! श्रीनवखण्डपार्श्व ! ॥२॥

---

सुरतरुं सुर इव गिर्वाण इव कल्पवृक्षम् ॥ २९ ॥ अतिमुदितसकलचन्द्रं०, हे लोकाः इति पूर्वोक्तप्रकारेण बालबुद्ध्या स्तुतं पार्श्वजिनं जपत ध्यानमध्ये पार्श्व इति पठत । किं० ? अतिमुदिताः सकलाः समस्ताः चन्द्रा यस्मात् तम् । जिनाः सामान्यकेवलिनस्तेषां मध्ये चन्द्र इव लोकादानीय, तम् ! मे गुरुर्महान् यो विजयः विमोहमल्लशत्रुविजयस्तस्य दानं वितरणं च पुनः भद्रं कल्याणं यस्मात् स तम् । तथा शान्तिकरम् । क्षेमकरं सर्वलोके ॥ ३० ॥

इति श्रीपार्श्वनाथस्तवावचूरिः समाप्ता ॥
डा. १४ । प्र० १० साध्वी हीरां पठनार्थम् ॥

---

### अवचूरिः ।

लोकप्रसिद्धा पृथ्वी नवखण्डा । अवखण्ड्यते इत्यवखण्डः । न विद्यतेऽयखण्डो यस्यां साऽनवखण्डा सम्पूर्णा । संवित्=केवलज्ञानं यस्य ॥ १ ॥ अनवं जीर्णं ततो जीर्णखण्डमवखण्डयन्तीति योगः, यथा जीर्णमनायासेनैव खण्ड्यते तथा ते विघ्नान् सर्वान् खण्डयन्ति, अत्राऽनवखण्डं खण्डयन्तीति कृत्वा पश्चादवोपसर्गेण योगः, प्रथममेवाऽवोपसर्गयोगे त्वनवखण्डमित्यत्र णमूप्रत्ययस्याऽसम्भवः । व्याप्याच्चेवादिति सूत्रे तस्यैवेति नियमात्, यद्वाऽवशब्दश्चादिपठितो भर्त्सनार्थे क्रियाविशेषणत्वेन योज्यः, भर्त्सनपूर्वं विघ्नान् खण्डयन्तीति भावः । अथवाऽवतीत्यवि अवः ततो जिनसम्बोधनं हे अव ! रक्षक ! । दानवखण्डना इन्द्राः ॥ २ ॥

माधुर्यधुर्या नवखण्डजैत्री गीस्तेऽघकाशनिवखण्डवारि ।
भात्युद्यदादीनवखण्डमाना विश्वेश्वर ! श्रीनवखण्डपार्श्व ! ॥ ३ ॥
नवप्रमुक्ताऽऽनवखण्डलौघैर्भक्त्या कृतोच्चैर्नवखण्डगद्भिः ।
श्रितान् भवार्तानव खण्डमुर्व्या विश्वेश्वर ! श्रीनवखण्डपार्श्व ! ॥४॥
आम्नाति नो मानवखण्डनादौ दर्पेण येऽन्यानवखण्डयन्ते ।
गिराऽपि तैस्तेऽनवखण्डनीया विश्वेश्वर ! श्रीनखण्डपार्श्व ! ॥ ५ ॥
वितन्वते ते नवखण्डतिं ये स्वभक्तितोऽर्हन्नवखण्डमाशु ।
ते नित्यनिम्नानवखण्डभन्ते विश्वेश्वर ! श्रीनवखण्डपार्श्व ! ॥ ६ ॥
व्याधीस्तथाधीनवखण्डसे तत् त्वमेव विश्वे नवखण्डहीनः ।
मनीषिणां मानवखण्डनार्हो विश्वेश्वर ! श्रीनवखण्डपार्श्व ! ॥ ७ ॥
इति स्तुतः श्रीनवखण्डनामभृत् प्रसिद्धघोघापुरभूविभूषणः ।
पार्श्वप्रभुः श्रीगुरुसोमसुन्दरस्फुरद्यशाः शाश्वतसंपदेऽस्तु ॥ ८ ॥

॥ इति श्रीनवखण्डश्रीपार्श्वनाथस्तवनम् ॥

तं ह।

---

यतएव माधुर्यधुर्याऽत एवाऽभिनवमधुधूलिजैत्री । अघान्येव ह। २७।।५ कृशानुसम्बन्धीनि यानि खण्डानि ज्वाला इत्यर्थस्तत्र नीरसदृशा । आदीनवान् दोषान खण्डमानाघ्नन्ती शीलार्थे शानस्तेन मलयपवमान इतिवत्समाससिद्धिः श्रितादिभिरिति सूत्रेण ॥ ३ ॥ आनवखण्डलस्य नवप्रमुक्तत्वे आखण्डलेति स्यात् कृत उच्चैः स्तवो यस्य खं स्वर्ग डलयोरैक्याल्लगद्भिः स्थितैरित्यर्थः । उर्व्याः खण्डपीठं श्रितान् भवार्तान् । अवेति योगः ॥ ४ ॥ मनोरिदं मानवं शास्त्रं स्मृत्यादिखण्डनग्रन्थः, नौतीति नवः स्तोता, न नवोऽनवस्तं, अन्येषामनवोऽन्यानवत्रिजगतोऽपि स्तुत्यत्वात् ॥ ये दर्पेण खं व्योम डयन्ते उत्प्लवन्ते, यद्वाऽवखण्डयन्तीति पाठस्ततो येऽन्यानवखण्डयन्ति तिरस्कुर्वन्तीत्यर्थः, अवखण्डयितुमशक्याः ॥ ५ ॥ स्वार्थे तिकप्रत्यये नवशब्दयोगे च नवखण्डतिस्तमवखण्डं नखण्डेति वर्णत्रयहीनमेतावता नतिमित्यर्थः । निम्नानवमतुच्छं खं सुखं डलयोरैक्याल्लभन्ते ॥ ६ ॥ यदित्यध्याहार्यं, मानवखण्डनार्हपदस्य नवखण्डेति वर्णचतुष्कहीनत्वे मानार्ह इति शिष्यते ततो मनीषिणां माननीय इत्यर्थसिद्धिः ॥ ७।

इति श्रीनवखण्डपार्श्वस्तवाऽवचूरिः ॥

नमोऽर्हद्भ्यः ।

# श्रीवामेयस्तवनं नवग्रहस्तवगर्भम् ।

पार्श्वः श्रियेऽस्तु भास्वानजस्थितेरुच्चतां परां बिभ्रत् ।
विश्वप्रकाशकुशलः कुतुकं त्वतुलाश्रयः सततम् ॥ १ ॥
पार्श्वः स जयति सोमः परमोन्नतिभृद् वृषप्रयोगेण ।
शैवे शिरसिनिवासी चित्रं तु तमोग्रहग्रासी ॥ २ ॥
श्रीपार्श्वं सद्वृत्तं नवार्चिषं नमत मङ्गलात्मानम् ।
पृथ्वानन्दनमद्भुतमवक्रमर्पितबुधमुदं च ॥ ३ ॥
वामाभूः श्यामाङ्गः सौम्यः स्तादमृतसिद्धियोगकृते ।
मैत्रीप्रयोगतो वः कुतुकं तु कलावदुल्लासी ॥ ४ ॥
जगति गुरुः श्रीपार्श्वः शुभदृष्ट्या दोषलक्षमपि मुष्णन् ।
पुष्णन् श्रियं च जीयान्न कुत्रचिच्चित्रमतिचारी ॥ ५ ॥

---

## अवचूरिः ।

भास्वान् दीप्रः सूर्यश्च, न जायत इत्यजः सिद्धः पक्षेऽजो मेषराशिस्तत्रस्थो हि रविरुच्चिः स्यात्, निस्तुल आश्रयः सिद्धिलक्षणो यस्य, सूर्यस्तुलराश्याश्रयोऽपि स्यादिति चित्रम् ॥ १ ॥ सोमश्चन्द्रश्च, वृषः पुण्यं तत्प्रयोग उपदेशादिना, पक्षे वृषराशेः प्रकृष्टयोगेन, मोक्षसम्बन्धिनि ईशसम्बन्धिनि च । तमोऽज्ञानं तदेव ग्रहो भूतादिस्तद्विनाशी, पक्षे तमोग्रहो राहुः ॥ २ ॥ सच्छोभनं वृत्तं शीलं यस्य, पक्षे शोभनश्चाऽसौ वृत्तो वृत्ताकारश्च, नवमर्चिस्तेजो ज्ञानरूपं यस्य, पक्षे नवसंख्य-किरणम् । कल्याणमयात्मानं, पक्षे मङ्गलो भौमः । पृथ्व्या आनन्दनं, पक्षे पृथ्व्याः सुतम्, पृथ्व्याः सुतत्वं मङ्गलस्य हि बुधैर्गीयते ॥ ३ ॥ श्यामाङ्ग इति बुधनाम । पक्षे सौम्यो बुधः, मैत्रीप्रयोगेण वो मोक्षनिष्पत्तियोगाय स्तादिति सम्बन्धः, पक्षे मैत्र्य नुराधा तस्याः प्रयोगतो बुधोऽमृतसिद्धियोगकृत् स्यात् । पक्षे बुधस्य हि चन्द्रो रिपुः ॥ ४ ॥ गुरुर्गरिमास्पदं पक्षे बृहस्पतिः । अतिचार-

गुरुपदलाभादुच्चः श्रीपार्श्वः श्रेयसेऽस्तु सत्काव्यः ।
दोषाकरविद्वेषी न जातु यात्यस्तमिति तु नवम् ॥ ६ ॥
परसिद्धियोगमसितस्तनुतां पार्श्वः प्रयोगतो ब्राह्मयाः ।
धर्मं पुष्णन् धर्माश्रयेण न पुनः क्वचिन्नीचः ॥ ७ ॥
दुरितमिदे दोषाकरतमोरिपुग्रासलालसः पार्श्वः ।
कीर्त्या विधुंतुदस्ताम्न क्रूरः कौतुकं क्वापि ॥ ८ ॥
श्रीवामेयोऽनवमस्त्रिजगति केतुः श्रियां परमहेतुः ।
जयतु स्फुरत्फणर्द्धिर्नवरं नित्योदयी शुभदः ॥ ९ ॥
श्रीपार्श्वस्तवमेवं नवग्रहस्तवनगर्भमध्येतुः ।
श्रीसोमसुन्दरमतेरप्यशुभाः स्युर्ग्रहाः शुभदाः ॥ १० ॥

॥ इति श्रीवामेयस्तवनं नवग्रहस्तुतिगर्भम् ॥

श्चारित्रमालिन्यं शीघ्रगतिश्च ॥ ५ ॥ गुरुपदं सिद्धिर्मीनराशिश्च । मीनराशौ हि शुक्र उच्चः । सद्भिः स्तुत्यः पक्षे सच्चासौ शुक्रश्च । दोषाणामाकरं विद्वेष्टीति तच्छीलः पक्षे दोषाकरश्चन्द्रो विद्वेषी यस्य । सिद्धौ शाश्वतोदयस्थितिकत्वात्, शुक्रस्त्वस्तं यात्येव ॥ ६ ॥ असितो नीलवर्णः शनिश्च । ब्राह्मी वाणी रोहिणी च तस्याः प्रयोगत उपदेशादेः प्रकृष्टयोगात् त्वपरसिद्धियोगं प्रकृष्टमुक्तिसंबन्धममृतसिद्धियोगं च तनुतामित्यर्थः । चारित्रधर्माश्रयेण चतुर्विधं धर्ममुपदेशादिना पुष्णन्, पक्षे धर्मभावनाश्रयणेन धर्मपोषी, शनिस्तु मेषे नीचः स्यात् ॥ ७ ॥ दोषाणामाकरभूतं यत्तमोऽज्ञानं तदेव रिपुः शत्रुस्तस्य ग्रासे विनाशे लालसा श्रद्धा यस्य । पक्षे दोषाकरश्चन्द्रस्तमोरिपुः सूर्यस्तयोर्ग्रसनपरः । कीर्त्या विधुंतुदश्चन्द्रस्य जेता पक्षे विधुन्तुदो राहुः ॥ ८ ॥ अनवमः श्लाघ्यः, पक्षे नवमो नवसंख्यापूरणः त्रिभुवने विभूषकत्वात् केतुर्ध्वज इव । पक्षे केतुनामा ग्रहः । पक्षे परं केवलं श्रियामहेतुः । उभयोरपि सफणत्वात् । केतुस्तु कदाचिदुदयी उदितोऽप्यरिष्टकृच्च ॥ ९ ॥ पाठकस्य, पक्षे पूर्णेन्दुवत् सुन्दरा निर्मला मतिर्यस्य ॥ १० ॥

इति श्रीपार्श्वस्तवावचूरिः ॥

वन्दे वीरम् ।

## श्रीपार्श्वजिनस्तवः ।

श्रीअर्बुदाद्रिमुकुटश्रीजीरापल्लितीर्थसुप्रथितम् ।
स्तौमि श्रीमत्पार्श्वं जिनर्षभं श्रीशिवाङ्गभुवम् ॥ १ ॥
तव सद्वर्ण्यसवर्णं श्रीघनरोचिष्णुरोचिरङ्गलता ।
कल्पलतातोऽप्यधिकं दत्ते दृष्टाऽप्यमीष्टानि ॥ २ ॥
जय नाभिभूत निःसम सुसंविदां श्रीसमुद्रविजय भव ।
वामाङ्गज जयहेतो भवाब्धिसेतो ! दुरितकेतो ! ॥ ३ ॥
बिभ्रद् वृषभासनतां निर्मलजलजाङ्कितांह्रिकमलश्च ।
भोगीन्द्रसेव्यमानः प्रभो ! जय त्वं निरुपमान ॥ ४ ॥
श्रीअर्बुदाद्रिविदित श्रीजीरापल्लिपार्श्वजिनवृषभ ।
श्रेयःसमुद्र नेमे ! देयाः श्रीसोमसुन्दर ! स्वपदम् ॥५॥ इति ॥

---

### अवचूरिः ।

ऋषभपक्षेऽर्बुदाद्रिमुकुटश्चाऽसौ श्रीजीरापल्लितीर्थेनासन्नत्वात् सुप्रसिद्धिश्च । श्रीमत् पार्श्वं समीपं यस्य । श्रीशिवानामङ्गमभ्युपायो धर्मस्तदुत्पत्तिपदम् । नेमिपदेऽप्येवं परं जिनर्षभं जिनप्रवरं । पार्श्वपक्षे–ऽर्बुदाद्रिर्मुकुटो यस्येदृशा जीरापल्लितीर्थेन सुप्रसिद्धम् । सुवर्णश्रीवद् घनं सान्द्रं रोचिष्णु रोचिर्यस्याः । नेमिपार्श्वपक्षे शोभनवर्णश्रीर्घनो मेघस्तद्वद्रोचिष्णु० ॥ २ ॥ निःसमसुसंविदां श्रीयुक्तसमुद्रविजयस्य भवो जन्म यस्मात् । वामः प्रतिकूलोऽङ्गजःस्मरस्तज्जयहेतो । नेमिपक्षे निःसमसुसंविदां नाभिभूताऽऽधारभूत ! । पार्श्वपक्षे हे वामाङ्गज ! हे जयहेतो ! ॥ ३ ॥ भोगिनो ये इन्द्राः । नेमिपक्षे जलजःशङ्खः ॥ ४ ॥ श्रीजीरापल्लिः पार्श्वे यस्य । श्रेयसां समुद्रनेमिभूः । पार्श्वपक्षेऽहेऽर्बुदाद्रिणाऽऽसन्नत्वात् सुप्रसिद्ध ? शेषं सुगमम् ॥ ५ ॥

इति तीर्थद्वये जिनत्रयस्य प्रत्येकं स्तवस्याऽर्थः ॥

॥ ( एतानि महोपाध्यायश्रीरत्नशेखरगणिविरचितानि ) ॥

---

१ गीतिच्छन्दः.

श्रीः ।

# श्रीपार्श्वजिनाष्टकम् ।



सुरदानवमर्त्यमुनीन्द्रनतं नतभव्यजनावलिदोषहरम् ।
हरभूधरहारियशःप्रकरं करणेभनिषूदनसिंहनिभम् ॥ १ ॥
निभपादपपङ्क्तिविभङ्गगजं गजसिंहदवानलभीतिहरम् ।
हरहारविधूज्ज्वलकीर्तिकरं करुणोदधिमद्भुतरूपधरम् ॥ २ ॥
धरणेन्द्रनिषेवितपादयुगं युगबाहुयुगं कमलाक्षयुगम् ।
युगपज्जनसौख्यविधानपरं परमाप्तपतिं जितकर्मरिपुम् ॥ ३ ॥
रिपुमित्रसमाशयमर्हतमं तमउत्करवारकचारुगिरम् ।
गिरिराजमहीधरधीरगुणं गुणराशिविशुद्धितसद्भुवनम् ॥ ४ ॥
वनथम्भनदुःखसुखैकमतं मतिकौशिकमण्डलसद्द्युमणिः ।
मणिकाञ्चनरूप्यलसद्वरणं रणसज्जपदं गतजन्मदरम् ॥ ५ ॥
दरभाववियोजितकर्मगणं गणनायकचित्तकजभ्रमरम् ।
मरकाम्बुधिपानपयोधिमुनिं मुनिनायकमीप्सितकल्पतरुम् ॥६॥
तरुणार्कसमोन्नतसत्करजं रजताद्रिमनोज्ञविशुद्धकुलम् ।
कुलवारिधिचन्द्रमनन्तकलं कलधौतनिभं जिनपार्श्वविभुम् ॥७॥
विभुसौख्यकरं भवभीतिहरं हरहारकृतोधरणेन्द्रवरम् ।
वरपोतनिभं भववारिनिधौ निधिवत् सुखदं जिनपस्तवनम् ॥८॥
श्रीवामेयो जिनाधीशः शिवपद्यादिति स्तुतः ।
पाठकार्योत्तमाम्भोधिगुरूणां सुप्रसादतः ॥ १० ॥ इति ॥

# श्रीवीरजिनस्तवनम् ।



महानन्दशुद्धाश्रितं देवदेवं महीनाथसिद्धार्थपुत्रं पवित्रम् ।
यथाकामितं दत्तवार्षिक्यदानं त्रिकालं स्तुवे श्रीजिनं वर्धमानम् ॥१॥
चतुष्षष्टिदेवेन्द्रयोगीन्द्रवन्द्यं सुधाशालिसंशुद्धवाक्यं वरेण्यम् ।
दयासागरं शुद्धसन्मार्गयानं त्रिकालं स्तुवे श्रीजिनं वर्धमानम् ॥२॥
अनन्तोत्तरज्ञानचारित्रलीनं जरारोगसम्मोहसन्तापहीनम् ।
क्षणाद्धूतनिर्मूलमायावितानं त्रिकालं स्तुवे श्रीजिनं वर्धमानम् ॥३॥
शमस्वादपाथोधिसंसर्गसक्तं सदा कर्ममर्मप्रपञ्चप्रमुक्तम् ।
प्रचण्डप्रतापेन भास्वत्समानं त्रिकालं स्तुवे श्रीजिनं वर्धमानम् ॥४॥
मनोहारिकल्याणवर्णं विशालं विदीर्णान्तरारिप्रनालिं कृपालुम् ।
गभीरं विशालैर्गुणैर्वर्धमानं त्रिकालं स्तुवे श्रीजिनं वर्धमानम् ॥ ५ ॥
जगज्जीवसन्दोहजीवादिभूतं भवभ्रान्तिरिक्तं नमन्नाकिभूतम् ।
लसत्स्वर्गिनिर्वाणलक्ष्मीनिदानं त्रिकालं स्तुवे श्रीजिनं वर्धमानम्॥६॥

इत्थं भक्तिवशेन मुग्धमतिना श्रीवर्धमानः स्तुतः
प्रोद्यद्देहपवित्रकान्तिकलितः सश्रीकशोभायुतः ।
याचे नैव कलत्रपुत्रविभवं नो कामभोगश्रियं
किन्त्वेकं परमोत्तमं शिवपदं श्रीबालचन्द्रार्चितम् ॥ ७ ॥

श्रीसर्वज्ञाय नमः ।

# वीरस्तोत्रम् ।

श्रीसिद्धार्थनरेन्द्रवंशकमलाशृङ्गारहार ! प्रभो !
श्रीमद्वीर ! भवन्तमन्तरुदितप्रीत्या विमुक्त्यै स्तुवे ।
निःशेषानपि नाभिनन्दनमुखांस्तीर्थङ्करान् श्रीगुरून्
प्रत्येकं युगपत् क्रमाच्च दशभिः श्लोकैरिहान्तर्गतैः ॥ १ ॥
जिष्णोभिग्रहनम्यनर्तितभुवं धूतद्युसज्ञाचलं
नत्वा जागरितादरागमपदेऽघासङ्गभङ्गान्तके ।

---

## अवचूरिः ।

॥ श्रीसिद्धार्थाभिधानधराधिपकुललक्ष्मीशृङ्गारणमुक्ताकलाप ! अन्तर्मनसि उदिता या प्रीतिस्तया मनःस्फुरितप्रमोदेनेत्यर्थः । विशिष्टाष्टकर्मनिर्मथनसमुद्भूता या मुक्तिः परमपदप्राप्तिस्तस्यै । न केवलं त्वामेव किन्तु निःशेषानपि नाभि० श्रीनाभेयप्रभृतीन् तीर्थाधिपान् । कथंभूतान् श्रीगुरून्? आर्हन्त्यलक्ष्म्यालङ्कृतान् । निजधर्मगुरून् वा । कथं? प्रत्येकमेकमेकं प्रति यथा श्रीनाभेयमजितं चादि । तत्राद्यो जिनः तदशेषजिना विशेषणत्वेन एवमजितादिषु युगपत् सर्वानपि निजनिजाऽभिधानकीर्तनपुरःसरं, क्रमाच्च न व्यतिक्रमेण । कैः ? दशभिः श्लोकैः, इहाऽस्मिन् वीरस्तवेऽन्तर्गतैः कविनाऽन्तर्भावितैः ॥ १ ॥ हे नाथ ! त्वां नत्वा स्तुतमहः सन् सारश्रमः सफलस्तुतिप्रयासः स्यां भवेयमिति समासार्थः । ससुरासुरजगत्त्रयप्राप्तपताक ! सुरेन्द्रविनिर्मितप्रशंसासहिष्णुसुरस्पर्धकुलिशकठिनमुष्टिप्रहारेण वामनीकरणादपरिमितपराक्रमत्वाच्चेति ॥ अभि० भक्तिभरेण नम्य, मेरुचालनात् । धूतः कम्पितो द्युसज्ञचलः स्वर्गलोकसज्ञाचलः प्रक्रमान्मेरुर्येन । नत्वा प्रणम्य त्वां । हे जागर ? प्रकटितोद्यम ! कुत्र ? आगमपदे, प्राग्भवाधीतश्रुताक्षर ! घ्यातैः पापासङ्गविध्वंसक । मदनमहाभटजैत्र ! संसारवासे गृहभावेऽपि । अहमिति कर्तृपदं । यद्वा श्रीजा० ज्वलरं महस्तेजः प्रतापो यस्य तम् । अहमसदर्थक्रियायोगादनुक्तमपि लभ्यते । हे नाथ ! गुरु० प्रमोदमेदुरया पूर्वं नत्वा पश्चात् स्तुतमहः

श्रीजातप्रतिमल्ल ! जित्वरमहं संसारवासे ध्रुवं
नाथ ! त्वां गुरुरङ्गतः स्तुतमहः सारश्रमः स्यामलम् ॥ २ ॥
देवारब्धमसुप्रमन्मथमसुस्फारप्रपन्नापदं
वर्ष्मासंविधिमस्ततापमनसीशा संस्मरन्नुत्तपाः ।
सन्धाभूमिगते न पर्वतसमात्मा भूरिमायामहिं
वप्रेऽन्ते कृतकुग्रहस्थितिवधः सतन्नतनन्यक्षमाम् ॥ ३ ॥
मन्माथिस्मरसुप्तिवर्धनतमः प्राभञ्जि सुष्ठूद्वलं
याता वीतभयं कतीश ! न बृहद्भावाः सुविद्य ! त्वया ।

---

श्लाघिततावकीनगुणप्रभावः सन्नहं सारश्रमः स्यामलमित्यर्थः ॥ २ ॥ हे ईश ! त्वं न क्षमां कृतवान्, इति सम्बन्धः । सङ्गमामरकृतं जाग्रत्कामरसं अनुकूलोपसर्गकारितया श्रृङ्गारसारसुराङ्गनाजनिताऽभिनवरसेन । असुभिः प्राणैः स्फाराप्रपन्नापद् यत्र तं तथा । शरीरक्षेपकविधिमुपसर्गकरणव्यापारविशेष एकान्तोपशान्ते मनसि स्वकीये चेतसि । अस्मरन्नहो परमकष्टमिदमिति सुरकृतदुर्गोपसर्गविधिं कर्मक्षयकारित्वेन सर्वथाऽप्यवगणयन्नित्यर्थः । विशेषणमाह उत्तपाः उत्कृष्टं तपो यस्य । मनसि कथंभूते ? सन्धाभूमिगतन प्रबलकर्मभिदितं (?) मया विधेयमिति प्रतिज्ञास्थानप्राप्ते नेतिनिषेधे । त्वं कीदृशः ? पर्वतसमात्मा आत्मशब्दस्य देहवाचकत्त्वात् पर्वतप्रतिमशरीरः । कालचक्राहतोऽपि न प्राणान्तं गतोऽपि इतिहेतोः । प्रभूतसमवसरणादिविभूतेर्भूमे । माशब्दो लक्ष्म्यर्थेऽप्यस्ति । इह च पदविरामत्वादनुनासिकश्च । सामसामेति । अन्ते कृतकुग्रहस्थितिवधः उपसर्गपर्यन्ते कृतो विहितः कुग्रहस्य कदाग्रहवतः सङ्गमदेवस्य स्थितिवधः प्रतिज्ञाभङ्गो येन । सन्तप्तान् जन्मादिदुःखार्तान् नन्दयन्तीति । अक्षमां कोपकषायं न वप्रे संबन्धः ॥ ३ ॥ मामुपलक्षणत्वादन्यमपि मथ्नातीत्येवंशीलो मन्मथः सचाऽसौ इति स्मरश्च तस्य निद्रां वर्धयति छेदयतीति ॥ अज्ञानं दुरितं वा । प्रकर्षेण भग्नं अतिप्रबलं निर्भयं, अथवा पत्तनं ग्रामानुग्रामं विहारक्रमं कुर्वता । किं संख्याऽऽमं त्वया भवता न पिष्टा न निषिद्धाः किन्तु निषिद्धा एव । जागरेण सम्यक्तत्त्वविचारसारसंवेगरङ्गपरीषहाधिसहनसामर्थ्यरूपेण शोभनाः शिष्या यस्य तस्याऽऽमन्त्रणम् । यत एवं तत एव शकटतिलजलप्रभृतिकमचित्तमपि ज्ञानेन जानताऽपि अनुस्ति-

पिष्टा जागरशोभिशिष्यसहस्रे हारं विधेया अरं
 पृथ्व्यां तत्त्वविभक्तितः किमिव न श्रीगर्जिसज्जा मतिः ॥४॥
श्रेयोबह्यवनिः समस्तसुखकृदुःशिष्यजल्पद्रुमं
 यः कामक्षुरिकाश्च शीतललता भावंप्रयान्तीरदाः ।
सेक्ता ह्यन्तरमत्ततत्त्वविपिनं निश्रेतगर्ज्जेद्रसं
 भद्रं त्वं कुरु शर्मलब्धिविदित क्ष्मां यन्नजन्नं स नः ॥५॥
विज्ञानर्द्धिरसप्रसुस्थमसुमद्वृन्दं सनास्तानयं
 मह्यां सङ्गतदानखानिरमदज्वालं स्वशंसालसम् ।
लब्ध्वा पङ्कमनङ्गवर्जि वचनं तेऽधः प्रयासं जग-
 ज्ज्ञायिन् यत्स्मरतप्तिहर्म्यमगमद्धर्मज्ञशर्माश्चितम् ॥ ६ ॥

---

दोषाभ्राऽनुज्ञातम् । किंविशिष्टा भावाः ? सहसाऽविचार्य, इह प्रमादसादरजन्तु-बहुलकालेऽकरणीयाः अरं शीघ्रं पिष्टा एव, तथो भूमौ सम्यक्तत्त्वविवरणेना-ऽनित्यतादिभावनातः । किं कथमिव ? श्रीगर्जिसज्जा लक्ष्मीपदे सज्जा निबिडा मतिर्बुद्धिर्न पिष्टा ? अपि तु पिष्टैव ॥ ४ ॥ तासां प्रादुर्भावाय भूमिः, दुःशि० गोशालो जमालिर्वा वितण्डावादो यस्त्वमदाः च्छिन्नवान् । यस्त्वां कामक्षुरिका विपक्षहृदयविदारकत्वात् कामस्य क्षुरिका, अर्थात् सविकार वाचः सच्छाय सपल्ल-वल्लीभावं गच्छन्तीश्चादाः क्रिया सेचनशीलः । मनसि भव्यानां गम्यं । अपुष्टं यत्तत्त्ववनं, किं विशिष्टं ? निश्रं स्वपक्षमिताः प्राप्तास्तेषां गर्जन् प्रवृद्धिं गच्छन् रसः प्रमोदो यत्र तत् अद्वैतसुखप्राप्त्या ख्याता या भूमिः क्ष्मा तां यन् गच्छन् । स त्वं नोऽस्माकं भद्रं कल्याणं कुरु ॥ ५ ॥ हे नाथ ! तव वचनं लब्ध्वा असुम-द्वृन्दं परमपदं मोक्षमगमत् इति संक्षेपार्थः । विज्ञानं विशिष्टतत्त्वज्ञानसंपद् तस्या यो रसः प्रमोदो भगवद्वचनश्रवणात्तेन प्रकर्षेण सुस्थं सुखितमिति कर्तृविशेषणम् । स्वच्छदुर्नयं । तथा मह्यां भूमौ अवतीर्णवितरणकर इव दानखानिः । तथा मद एव दानादिसुकृतस्य ज्वालकत्वात् ज्वाला तद्रहितम् । तथा स्वकीयजात्यादिप्रशं-सायामलसं । किंकृत्वा ? लब्ध्वेति पूर्वोक्तम् । आराधकानामधःकृतप्रयासम् । जगज्ज्ञायिन्निति सम्बोधनम् । कन्दर्पदर्पतापरहितम् । शर्मभिरात्यन्तिकैः

वप्रेऽहिः श्रितशान्तिरस्तदुरितः सामस्वनं स्ववरं
सुप्ता तात्त्विकतेश सादरदमोद्दामास्यदध्रे क्षमा ।
धात्र्यानन्द निशान्तलक्षणमहः कः शुद्धनादा धनं
विद्यादर्पण ! तर्कयंस्तव गिरः सश्रीर्न सानन्दहृत् ॥ ७ ॥

सुष्ठ्वालम्बिविभाचयक्षतमः स ब्रह्मभर्तुर्घनं
गन्तुं मर्त्यनिवासभीतिविजयीहातन्नवाऽञ्छ्योऽस्ति मे ।
धिन्वंल्लेखहरिद्रलुम्बिनिवहः सुस्वादमध्योऽप्यहं
शीघ्रं त्वं भव भव्यकेवलवसुस्वामी तदऽस्ताशुभः ॥ ८ ॥

---

कान्तिकसुखैरर्चितं पूजितम्, आचितं व्याप्तम् वा ॥६॥ वप्रे ययाचे सर्पः स्वः स्वर्ग एव वरः प्रसादस्तम्। किंविशिष्टम्? अहिःभगवद्वचनश्रवणात् श्रि० प्रपन्नप्रशमः। अत एवाऽस्तदुरितः। मधुरतरगन्धर्वगीतादिध्वनिबन्धुरम्। अतत्त्वबुद्धिः सुप्ता सुष्वाप मतेति। वैराग्यातिशययोगात् ससम्भ्रमो यो दम इन्द्रियनोइन्द्रियनिग्रहस्तेनोद्दामा गुर्वी अस्य चण्डकौशिकस्य दध्रे स्वयमेव स्थिरीजाता। का? क्षमा। हे धात्र्या० जगज्जनाल्हादक! निशान्त० उद्भटरूपाणि महांसि तेजांसि प्रभावा यस्य तत्सम्बोधनम्। सश्रीः स्वर्गापवर्गसुखसम्पत्पात्रम्। न स्यादपितु स्यादेव। अत्राऽयं भावः हे नाथ! चण्ड० अहिः स्थाप्यस्थेपि यथा तव गिरस्तर्कयन् शृण्वन् त्यक्तकोपः क्षिप्तपापश्च स्वयोग्यं पुण्यमुपार्जितवान्। तस्य च मिथ्यादृष्टिबुद्धिर्नष्टा, तथा को नामाऽन्योपि सानन्दहृत् शुद्धनादास्तव गिरो धनं तर्कयन् सश्रीः न स्यादिति भावः ॥ ७ ॥ सुष्ठु अतिशयेनालम्बिनः समन्ततः प्रसरणशीला ये विभाचयाः शरीरप्रभाप्राग्भारास्तैः क्षतं ध्वान्तं येन तदामन्त्रणम्। शोभमप्रपाति सुखमयमुक्तिपदम्। स्वामि० घनमत्यर्थं गन्तुमीहा स्पृहा संसारवासः तस्यभीतिर्विविधजन्मादि तस्या विजयि जैत्र! तत्तस्मात् कारणात्, न नैव वाञ्छ्योऽस्ति अभिलषणीयोऽस्ति मम लेखसुरतरुफलनिकरः। किं कुर्वन्? धिन्वन् श्रितान् प्रीणयन्। मधुरतररसोऽपि यत एतत् तस्मात् कारणान्मे मुक्तिसुखाभिलाषिणो मे त्वं भवान् अस्ताशुभो भव संपद्यस्व भव्यकेवलेन निर्मलकेवलावलोकेन वसु-

शिल्पानल्पमनःश्रमः परिवहत्श्रीमत्ततर्व्यान्तरिं
वाचं मारदवातिदाहविहितव्यूहांबुवीचीं नदीम् ।
भग्नामित्रतमेश सर्वगतमोलावीं घनध्यम्बुधिं
वन्दित्वाप्तलयः प्रनष्टकलहः स्यां रम्यहर्म्ये हिते ॥ ९ ॥
श्रीलोभद्रुमगुल्ममुद्रणभवन्तं मग्नमन्युस्मरं
सोमासत्त्वगुरुं सदा हृदि ददे सारस्पृहासक्तिमान् ।
मर्त्यो द्वल्गदगुप्तलब्धिमहसं साम्यप्रशस्यस्तवं
प्रस्तीर्णक्लमरुक्चयं भवभयं मित्वाऽगमद्योऽक्षरम् ॥ १० ॥

---

स्वामी सूर्यः ॥ ८ ॥ हे ईश ! अहं तव वाचं स्तुत्वा परमपदे आप्तलयः स्यां भवेयमिति सम्बन्धः। शिल्पेषु विज्ञानेषु अनल्पो मनःश्रमः चित्तव्यापारो यस्य सः अत्राऽप्रयुक्तोऽप्यहंशब्दः क्रियायोगाज्ज्ञेयः । परिवहन्ती समन्ततः प्रसरन्ती श्रीर्लक्ष्मीः सैव मत्ता पुष्टा तस्या तरिं तत्पारवर्तीं नावम् । स्मरः स एव दवो दवानलस्तस्य योऽतिदाहस्तदुपशमनाय विहि प्राप्तपूराय अम्बुवीच्यो जलल-हर्यस्तत्प्रधाना नदीव नदी । प्रकृष्टा अमित्रा अमित्रतमाः शत्रवः ततो भग्नाः पराभूताः । अप्रतिहतज्ञानदर्शनेन सर्वविश्वव्यापक ! अथवा सर्वगानि यानि तमांसि पापानि तानि लुनातीति डप्रत्यये ताम् । तथा घना धियो बुद्धयस्तासाम-म्बुधिमिवाऽम्बुधिम् । एवंविधां तव वाचं वन्दित्वा वदुङ् स्तुति० धातोः स्तुत्वा । प्रमेदुरानन्दसान्द्रतया एकान्तलयलीनः स्यां भवेयम् । गतमत्सरः एकान्तसुखनिबन्धनतया सर्वथा हितकारिणि सिद्धिसौधे ॥ ९ ॥ श्रीः सम्पत् असन्तोषः स एव द्रुमस्तस्य गुल्मा व्यापकत्वाद्विविधाऽभिलाषलक्षणा विटपास्तेषां मुद्रणा प्रवृद्धिनिवारणो भवभ्रमभवाऽवतारो यस्य तम् । तथा यच्छन्दविशेष्यं त्वामिति गम्यम् । अथवा हे श्रीलोभ० भवन्तं त्रुडितौ लक्षणया क्षीणौ क्रोध-कामौ यस्य तम् । सोमा० सा श्रीः, उमा कीर्तिः, सत्त्वं बलं, तैर्गरीयांसम् । अहं चेतसि ददे निवेशयामि ध्यायामि । मर्त्ये मनुष्यलोके पर्युल्लसन् । अगुप्तं प्रकटं लब्धिमहः केवलज्ञानतेजो यस्य तम् । साम्य० समत्वेन श्लाघनीयःस्तवो गुणवर्णनं यस्य तं त्वां ध्यायामि । यो भवान् अक्षरं मुक्तिपदं संसारभीतिं मित्वा प्रस्तीर्णा प्रसृताः क्लमक्लेशायाऽऽधिसमूहा रुक्चयाः यत्र तम् ॥ १० ॥

एवं नव्यनयं विनम्रजगतं त्वामुन्नतप्रातिभं
वन्द्यं यः शतशोऽभिनौति न कृपावादान्तिमः सत्यवाक् ।
श्रीवासोऽस्तुतमस्तुतिः स विपुलश्रीकं सुसूत्रं हरिं
जित्वाऽमर्त्यकुलस्य नम्यमभयस्तादक्षरश्रीयुतः ॥ ११ ॥
यस्त्वां श्रीजिन सूदितोन्मदमनश्चौरः प्रणौति श्रमं
जित्वा सोढगरिष्ठकष्टदहनं रोचिष्णुभालद्युतम् ।
दत्तामर्त्यपवित्रसम्मद ! पठन् कान्तं विशङ्कः स्तवं
वन्द्याऽह्नाय भवान् जिनाः प्रददतामन्येऽपि तस्मै शिवम् १२

॥ इति श्रीवर्धमानस्तोत्रं कर्तृनामगर्भितम् ॥

---

अन्यान्यमलम्नत्वेन परैरन्यथाकर्तुमशक्या नया नैगमाद्या यस्य तम् । उन्न० विनम्रं-केवलालोककलितत्वात् सर्वोत्कृष्टज्ञानगुणं शतशो भक्तिभरादभिनौति स्तौति । नपुनरेकवारम् । नकृ० कृपावादाऽवगतजीवादि दयावन्तस्तेषां मध्ये न नैवाऽन्तिमः । सः स्तोता भवान्तरेऽक्षरपरमपदसुखसमृद्धिसहितः स्तात् भवतु । विशेषणमाह—स श्रीवासः । विपुल० विस्तारिवैभवम् । शोभमानं सुसूत्रं, स्वसामानिकत्रयस्त्रिंशदादिदेवानां व्यवस्थास्थापनं यस्य तम् । देवेन्द्रम् । निजवैभवभूम्ना पराजित्य ॥ ११ ॥ निगृहीतदुर्मदचित्ततस्करः । सिलोपे श्रीजिनविशेषणम् । खेदं पराजित्य, सोढो० कष्टान्येव दाहकत्वाद् दहनो येन तम् । दीप्यमाना भालस्य सकलदेहस्योपलक्षणत्वाद् द्युतिः यस्य तम् । अवतीर्णो देवानां पवित्रः प्रमोदो येन तस्याऽऽमन्त्रणम् । चित्रश्लेषैरलङ्कृतम् । भवान् त्वं हे वीर ! अन्येपि परेपि जिना ददतां प्रकर्षेण वितरन्तु । इह च "ददि दाने, डुदौंगक् दाने" इति धातुयोगे पञ्चम्यास्ताम् आतां च दत्ते सति "अनतोऽन्तोदात्मने" इत्यनेन लोपे एकत्वबहुलयोर्ददतामिति सम्बन्धः ॥ इदं च काव्यं षट्चक्रबन्धेन ज्ञेयम्, अष्टदलकमलेन वा । एतदन्ताश्च कविनामसम्बद्धा द्वादशवर्णा अक्षराः अक्षरषट्कश्च ३।६। अक्षरेष्वन्तर्भाविताः सन्ति, ते च स्थापनाविशेषादवगन्तव्याः ॥ १२ ॥

॥ इति श्रीवीरस्तोत्रावचूरिः समाप्ता ॥

---

श्रीसद्गुरुभ्यो नमः ।

# वीरस्तोत्रम् ।

स्वस्ति श्रीपरिषेव्यमाणचरणक्ष्मापालचूडामणिं
श्रीसिद्धार्थनरेन्द्रवन्दनमर्हं तं नोनवीमि स्फुटम् ।
यः कामं प्रमभर्व निर्दयहृदा विश्वं जिघांसुं जगद्
रागाख्यं रिपुमङ्घ्रिहस्तयुगलीसंलग्नमप्यादरात् ॥ १ ॥
स्वस्ति श्रियं रातु जिनेन्द्रचन्द्रः
सन्त्यक्तमायामदमोहतन्द्रः ।
सिद्धार्थभूपालकुलाग्रकीरः
सदाऽस्तु वीरः समतासुधीरः ॥ २ ॥
स्वस्ति श्रियां काममकाममूर्ते-
र्नानाऽभिरामं बत यस्य धाम ।
बिभर्ति कामानि(?) कलाविलासी
स त्रैशलः पेशलभागधेयः ॥ ३ ॥
स्वस्ति श्रीसुभगंभविष्णुचरणद्वन्द्वं नमामस्तमां
सिद्धार्थक्षितिपालवासवसुतस्यानन्दसन्दोहदम् ।
यद्रागद्विरदो विमुच्य हृदयं भूयस्तपोज्योतिषा
सन्तप्तं सुखमीप्सुरीप्सितहितश्रेणी सदाऽशिश्रियत् ॥४॥
स्वस्तिश्रीभरभासुरासुरनराधीशोत्तमाङ्गस्फुर-
न्मन्दारद्रुमसूनुचुम्बितपदद्वन्द्वस्य यस्येशितुः ।
पादाम्भोरुहसेवना सुमनसां वृत्तो मनोवाञ्छितं
कामं कामगवीव कामितरसः शश्वत् कलाशालिनाम् ॥५॥

सिद्धार्थक्षितिभृत्कुलाम्बरमणिं त्रैलोक्यचूडामणिं
श्रीवीरं नम हे मनः ! प्रसृमरश्रीकीर्तिकेलीगृहम् ।
मुक्तिस्मेरमुखोपगूहनसुखं चेदात्मसादीहसे
कर्तुं ह्यौपयिकं न तत्र किमपि प्राज्ञैः परं गीयसे ॥ ६ ॥

श्रेयः श्रियां धाम यदीयनाम
प्रकाममाविःकुरुते प्रकामम् ।
श्रीत्रैशलं पेशलमूर्तिमन्तं
सर्वं चतुर्विंशममुं भजेऽहम् ॥ ७ ॥

विबुधावनितानेकच्छेकप्रकामपराङ्मुखं
प्रशमिजनतासम्यग्गेयं गुणोत्करराजितम् ।
नय मम मनः ! श्रीसिद्धार्थं सदा स्मृतिगोचरं
तरणिकिरणं ध्वान्तध्वंसे यदीच्छसि संपदम् ॥ ८ ॥

कुन्देन्दुस्फटिकावदातसुषमांश्चेतोहरान् बन्धुरान्
ये कामं कलकण्ठकण्ठमधुरध्वानैकताना नराः ।
गायन्ति त्रिदशाधिनाथनिकरानन्दप्रद ! त्वद्गुणां-
स्तेषां जन्म च जीवितं च सफलं पुंस्कोकिलानां जने ९

चेतस्सङ्कल्पविकल्पकल्पनमतिस्त्वं कल्पभूमीरुह-
स्त्वत्सेवाकरणप्रवीणमनसस्त्वच्चञ्चरीका वयम् ।
सर्वाशापरिपूरको जलधरस्त्वं चेद्वयं चातका-
स्त्वं दाता शिवशर्मणो यदि वयं तदा को ह्यतोऽधिकम्॥

प्रणिनमति य एनं नाम पूर्वापराह्णे
त्रिभुवनतिलकाभं वर्धमानं समक्षम् ।

विविधवृजिनमूलं चूर्णपेषं पिनष्टि
प्रबलबलमसौ द्राङ् मोहनीयं समग्रम् ॥ ११ ॥

दुष्टव्याधिमहोदरक्षयमहामेहाङ्गभङ्गादिभी
रोगैर्नैव कदापि सोऽङ्गिनिवहः प्रायः पराहन्यते ।
यस्त्वन्नामममहौषधव्रतविधिव्यापारबद्धादर-
श्चिन्त्या नैव यतो महौषधमणीमन्त्रादिसंपत्तयः ॥१२॥

प्राघानि तैर्मोहमहाबलानि
त्वच्छासनं यैरुररीकृतं प्रभो ! ।
स्वर्मोक्षकामानि मनांसि चैषां
यके जनास्त्वद्गुरवक्रपायिनः ॥ १३ ॥

एष स्वर्गिगणः प्रकामनिपुणः संसेवते वासवं
प्रायश्चक्रधरं नरं नतिपथं नृणां नयत्युत्करः ।
पातलप्रभुताश्रितं प्रणमति ह्येकोऽसुराणां गणः
कस्कस्त्वां त्रिजगत्प्रभुं न भजते देवो नरो वाऽसुरः१४

स्तुत्यं जन्म तदीयमेव निवहैर्नृणां कलाशालिनां
वृत्तिश्चापि च वर्णनीयमहिमा प्रज्ञालयं चाननैः ।
सम्पत्सत्स्पृहणीयभावरुचिरा चित्रा तदीयैव सा
यस्त्वां त्रिः प्रतिवासरं प्रणमति प्राणी त्रिधा शुद्धितः१५

मत्तेभेन्द्रस्य कुम्भस्थलमिव निवहाः षट्पदानां भजन्ते
सम्पूर्णं नीरपूरैः सर इव महसा सारसानाश्रयन्ते ।
सारङ्गाः शाद्वलान्तं वनमिव गहनं संजुषन्ते समन्तात्
तद्वद्देवाधिदेवक्रमकमलमलङ्कुर्वते राजहंसाः ॥ १६ ॥

तं वन्दे जिनसार्वभौमतिलकं तीर्थङ्कराग्रेसरं
श्रीवीरं प्रणताङ्घ्रिपद्मयुगलीवीराधिवीरेश्वरैः ।
यः कामं प्रणिहत्य मुक्तिवनितानिष्कामचूडामणि-
र्भुङ्क्ते तां च ददाति भक्तजनता प्रत्यद्भुतं तन्महत् ॥१७॥

विविधविषयाशङ्कापङ्कप्रकाशविशोषकं
विमलकमलापारोल्लासप्रवृद्धपटीयसम् ।
नमत जिनपं ज्योतिःस्तोमप्रकाशितविष्टपं
तरणिकरणिं श्रीसिद्धार्थक्ष्मापतनूरुहम् ॥ १८ ॥

अद्यप्रातीनमेतन्मरणमिति सदा संविदानोऽपि जन्तु-
र्नो धर्मं कर्ममर्मव्यतिकरवशगः कर्तुमीष्टे कदाचित् ।
इत्येतन्मोहजालं दलयतु सकलं सर्वकालीनमात्म-
संवेद्यं सर्वथाऽसौ जिनवरवृषभो मामकं मूलतोऽपि १९

तेषां नैव दवीयसी सुरगवी नेदीयसी स्वारमा
स्वःकुम्भादिविभूतयश्च वशगा दूरे नवा चक्रिता ।
मुक्तिस्त्री च मनोनुकूलचरिता कामं किमु ब्रूमहे
ये नित्यं जिनराजपूजनविधौ बद्धादराः स्युर्नराः ॥२०॥

नाऽसौ चागमिकप्रमाणपुरुषव्यावर्णितं स्वःपदं
नो वा भूचरगोचराश्रयसुखं सत्सार्वभौमादिजम् ।
नैवाऽऽख्यात् पदसंपदादिकमपि प्राथ्यामहे हे प्रभो !
भूयाच्छाश्वतिकप्रमोदविधये सेवा तवाऽऽकस्मिकी २१

सिद्धार्थान्वयवार्धिवर्धनविधौ तं पार्वणेन्दूदयं
श्रीमन्तं परमेष्ठिनं प्रणयतः सत्स्तोत्रमार्गे नये ।

यस्मादाविरभूज्जगत्रयहिता संदर्शयन्ती स्वयं
भूगोलं च खगोलमेतदुभयं ब्राह्मी जगच्चक्षुषाम् ॥२२॥
सिद्धार्थक्षितिपालवंशविमलस्थूलैकमुक्तामणिं
श्रीमच्छ्रीत्रिशलामनःपरिणतानन्दप्रदानप्रभुम् ।
स्वामिंस्त्वत्पदसेवनव्यतिकरव्यालोलचेतस्कृतः
पूतात्मा जन एष निर्मलमनास्तुश्रूषति त्वां सदा ॥२३॥
स्वामिंस्त्वत्पदसेवकोऽस्म्यहमपि त्वेषा मतिः स्थेयसी
: स्वल्पा वा महती भवस्थितिमिमां जाने निजामात्मनः ।
नो मां चेत् पदसेवकं परमहो क्षुत्तृड्व्यथा बाधते
त्वद्ध्यानार्णवलीनपीनमनसो निद्रापि कौतस्कुतिः॥२४॥
ये हिंसानृतचौर्यकार्यनिरता ये चान्ययोषाजुषः
पापव्यापभृतोऽपि वीर ! भवता निस्तारितास्तेऽप्यहो ।
एतेषु स्थिरकधीः परत्र परधीर्यन्नेक्षसेऽस्मादृशा-
स्तत्ते नौचितिमञ्चति स्वपरयोर्भेदोऽकदर्यस्य यत् ॥२५॥
सर्वे गुणाः श्रीजिनवीरमाश्रिताः
सद्राजहंसा इव मानसं सरः ।
शरत्सुधादीधितिकान्तकान्तयः
पवित्रलावण्यपयःप्रपूरितम् ॥ २६ ॥
जातं ते फलवत्तवाननरमासंवीक्षणादीक्षणं
हस्ते शस्ततमौ त्वदीयचरणाम्भोजन्मसंपूजनात् ।
सा सारा रसना त्वदीयविमला मिक्षासु संपद्ग्रहात्
मन्ये मे सफलं जनुश्च सकलं स्वामिंस्तव ध्यानतः॥२७॥

एवं श्रीजिनवर्धमान इति सन्नाम्ना जिनाधीश्वरः
सम्यक्संस्तुतिमार्गमेव मयका संप्रापितः सत्तमः ।
श्रीमच्छ्रीकुशलादिसागरमहोपाध्यायपादाम्बुज-
प्राप्तप्रौढमहाप्रसादनिरतः स्तात् सर्वदा श्रेयसे ॥ २८ ॥

॥ इति महावीरस्तोत्रम् ॥

महोपाध्याय श्री श्री १००८ श्रीकुशलसागरगणिशिष्यपण्डित-
श्रीविजयसागरगणिना कृतं वीरस्तोत्रं भणसाली
श्रीवीरापठनार्थं पूरग्रामे ।

## वीरजिनस्तवनम् ।

विश्वश्रीद्ध ! रजश्छिदे गरिमदत्यादर्पनाशे क्षमं
सद्वाचं स्तुवेयाश्रवं परिहरन् क्ष्मासूर्य दुःखक्षमम् ।
निस्तन्द्रं तपनद्वसुं दुरितसूदारिक्थ ! वीर ! स्थिरं
रम्यश्रीविरसोऽसकामनिर्कृतिं मद्रालयं शङ्करम् ॥ १ ॥

( चतुर्गुणामङ्गलं चक्रम् )

---

### टिप्पनकम् ।

१ विश्वश्रीद्ध०, चतुस्त्रिंशदतिशयाऽष्टप्रातिहार्यादिरूपया विश्वश्रिया समग्रलक्ष्म्या शोभया वा इद्ध दीप्त !, हे वीर ! त्वां रजश्छिदे स्तुवे । २ गरिमाणं ददातीति । ३ स्वरे वेति विकल्पयलोपत्वेनाऽत्र यलोपाऽभावात् स्तुवयाश्रवमिति सिद्धम् । आतावेकवचनमित्याश्रवान् परिहरन्निति मद्विशेषणम्(?)स्तुत्यसम्बोधनं वा । हे क्ष्मासूर्य ! प्रकाशकत्वात् । ४ दुःखानां क्षयो यस्मात् । ५ तपनो रविस्तद्वदाचरन्ति आचारार्थे क्विप्, तपनन्तीति तपनन्तो वसवः किरणा यस्य । ६ दुरितानां सूदो विनाशो यस्मात्=रिक्थं द्रव्यं स्थिरमप्रकम्प्यत्वात् । ७ रम्यश्रीषु यवितरसोऽहम् । ८ निकृतिर्माया ॥ १ ॥

तनुते यन्नुतिं[1] जम्भजिद्राजी[2] मुदिता द्रुतम् ।
तं स्तुवे वीततन्द्रोऽजिभयं भावेन भास्वता ॥ २ ॥

(मुशलम्)

ततयास्तनृणां मुक्त्यै[3] या नीरुक्[4]तनवे नता ।
तारभाभार[5] तापास[6] स[7] पाताक्षर[8][9] रक्ष ताः[10] ॥ ३ ॥

(शूलम्)

ततकष्टावलीलावलीलाढ्य[11] श्रीवरा[12] रताः[13] ।
ताररावश्रुतौ वीर रवीद्धाभ[14] सुरास्तव ॥ ४ ॥

(शङ्खः)

तज्ज्ञा[15]सदमलेक्ष्वाकुविंशजेयुः शर्मिस्तव ।
वरेण्यानन विश्वेश शरणं सुसुखेच्छवः ॥ ५ ॥

(श्रीकरी)

तन्नशमीश विशः[16]स्त्वालमवन्दत घनारव[17] ।
वधवल्लयां वह्विवधो वरिवर्त्सि[18] वशी वरः[19] ॥ ६ ॥

(चामरम्)

तरणे चिररूढामतमस्सु[20] चरणादरः ।
रसिकस्तव भूयासं सेवनेऽनल्पमानसः ॥ ७ ॥

(हलम्)

---

१ नुतिः=स्तुतिः । २ आजिः सङ्ग्रामः । ३ मुक्त्यै मोक्षार्थम् । ४ नीरुक् आरोग्यवती तनुर्यस्य तस्मै । ५ तारो भासां भानां वा भारो यस्य । ६ तापमस्यतीति । ७ स त्वं जगत्प्रसिद्धः । ८ पातेति रक्षकः । ९ हे अक्षर अचल । १० ताः नृणां ततीः । ११ ततकष्टावलीनां लावः छेदः स एव तस्य लीला तयाऽऽढ्यः । १२ श्रिया वरः । १३ रताः रतिमकुर्वन् । १४ रवेरिव इद्धा भा यस्य । १५ तज्ज्ञा विद्वांसः । १६ विशः पुरुषाः । १७ घनस्येवारवो यस्य । १८ वरिवर्त्सि भृशं वर्तसे । १९ वरः प्रधानो वशी कृतात्मा । २० चिरोत्पन्नरोगतमस्सु तरणे ।

तत्यजेऽत्र तकाश्चण्डपार्श्वमिन्द्रस्तुताहस ।
सर्वदोषैस्तत्क्षयाशां शान्ताघ ददतो विशाम् ॥ ८ ॥

( भल्लम् )

तरीवाचरसि ज्ञानोदारनिःशेषभूस्पृशाम् ।
शान्तितुष्टिकरापारभवाब्धौ विश्ववन्दित ॥ ९ ॥

( धनुः )

तम्यतिक्रम्यतेऽत्यन्तमोहदुःखमयीशितः ।
तवेनं सेवयाऽवश्यं भव्यैः स्थिरंशिवस्थितः ॥ १० ॥

( द्वाभ्यां खड्गः )

तमहं विनमामीततन्द्रं वीर सतां मत ।
तपो यस्त्वं व्यधा विश्वंवित्तं वीतरिपोऽतमः ॥ ११ ॥

( शक्तिः )

तपःशमरमारामतर शं गुणसत्तम ।
मम गुप्ताश्रिताधीश मरणक्लेशहृद्दिश ॥ १२ ॥

( छत्रम् )

---

१ तेषां दोषाणां क्षयस्तस्याऽऽशां वाञ्छां तां ददतस्तव । विशां नृणाम् । २ तमी रात्रिः । ३ इन स्वामिन् ! पक्षे रात्रिपक्षे सूर्य ! ४ स्थिरमचलं यत् शिवं तत्र स्थितः ॥ २ ॥ ५ तम् त्वाम् । ६ तन्द्राऽऽलस्यम् । ७ विश्वे वित्तं प्रसिद्धम् ॥ ११ ॥ ८ तपःशमयो रमया रामतर ! हेऽधीश ! शं मम दिश । ९ गुप्ता रक्षिता आश्रिता येन । १० मरणक्लेशं हरतीति मरणक्लेशहृत् ॥ १२ ॥

[1]तविषे [2]लसत्यमोहा[3]शय [4]चारुरुचायशः ।
शङ्काली [5]त्वन्नतेर्ज्ञानभासुराऽप[6]परा [7]सुभीः ॥ १३ ॥

( रथपदम् )

[8]तवीत्यवी[9]तसाराज्ञा प्राणिनां प्रास्तमीः शुभा ।
[10]भाराशेऽशेषभावारीन् शि[11]वंदा तव रंहसा ॥ १४ ॥

( पूर्णकलशः )

[12]तत्त्वसार [13]तरसा ना त्वयि राज्य दधीर[14]सा ।
[15]साराद्भुतेऽमोह[16] धीरा [17]रज्यते वीर मो[18]दतः ॥ १५ ॥

( अर्धभ्रमः )

[18]तरसाऽ[19]स्तमोहत्वेत त[20]त्त्वेह प्रशमान्वित ।
[21]त[22]न्विमान्य[23]वनीतात ततानी[24]ष्टांभ्यसार[25]ते ॥ १६ ॥

( कमलम् )

---

१ तविषे स्वर्गे । २ लसति क्रीडति । ३ अमोह आशयो यस्य । ४ चारुणी रुचायशसी यस्य ! रुचाशब्दोऽत्राबन्तः 'टापो विधिं हलन्तानां यथा वाचा निशा गिरे' त्यादि भागुरिवचनात् । ५ तव नतिस्त्वन्नतिस्तस्या हेतुभूतायाः । ६ अपपरोऽपगतशत्रुः । ७ सुष्ठु मीः यस्याः ॥ १३ ॥ ८ तवीति हिनस्ति । ९ अवीतं अगतं सारं यस्याः । १० भासां भानां वा राशिरिव राशिस्तदामन्त्रणम् । ११ शिवं ददातीति शिवदा ॥ १४ ॥ १२ तत्त्वेन सारः । १३ तरसा वेगेन । ना पुमान् । १४ धियो रसा पृथ्वी आधार इत्यर्थः । १५ सारं बलं तेनाद्भुते । १६ हे अमोह ! मोदतः प्रमोदात् । १७ हे वीर ! त्वयि रज्यते ॥ १५ ॥ १८ तरसा जवेन । १९ अस्तो मोहो येन सोऽस्तमोहस्तस्य भावोऽस्तमोहत्वं तद् इत । हे क्षीणमोह ! मोहादिगुणस्थानकप्राप्तेत्यर्थः । २० तत्त्वे ईहा यस्य । २१ तनु विस्तारय । २२ इमानि मनोरथशतप्रार्थ्यमानत्वेन प्रत्यक्षाणि । २३ हे मान्यायाः पितः । २४ इष्टानि वाञ्छितानि ज्ञानादीनीत्यर्थः । २५ हे व्यवार्याः लक्ष्म्यां रत ! ॥ १६ ॥

दयांह्री वन्दते सा[1]ऽनुकम्प यः साऽय भावतः ।
तस्य नाना[2]गुणस्याऽन्यो नम्यो नो [3]नोदितैनसः ॥ १७ ॥

(घरः)

तत्परः सततं शि[4]श्रीषामि त्वां दा[5]रितांहसम् ।
[6]सम्पदादाऽपसंसार रसाऽसन्[7]तमसं मत ॥ १८ ॥

(त्रिशूलम्)

नमाऽनाश्रितशर्मा[8]शु नेह[9]मेन्द दयान्वित ।
तथा त्वत्तः सुरेश त्वं केतुबोधिधियं हितः ॥ १९ ॥

(वज्रम्)

यस्तेऽष्टादशचित्रचक्रविमलं वीर ! स्तवं सश्रियं
भक्त्यैवं कुलमण्डनोऽ[10]ततं महाज्ञानातनुश्रीशुभ ! ।
मुक्तश्रीयुतचन्द्रशेखरगुरुप्राज्यप्रसादाद[11]मुं
तं तातात व[12]रैः स शान्ततम शं भासा ततः सन्ततम् ॥ २० ॥

(परिधिकाव्यम्)

चक्राऽयोमुखशूलैशङ्खसहिते सुश्रीकरीचामरे
सीरं भल्लशरासने असिलता शक्त्यातपत्रे रथैः ।
कुम्भोऽर्द्धभ्रमपङ्कजानि च शरैस्तस्मात् त्रिशूलाशनी
चित्रैरेभिरभिष्टुतः शुभधियां वीर ! त्वमेधि श्रिये ॥ २१ ॥

॥ इति श्रीवीरस्तवः ॥

---

१ साऽय० । अयेन भाग्येन विद्यते इति सायस्तस्याऽऽमन्त्रणम् । २ नाना अनेकप्रकाराः । ३ नोदितमेनः पापं येन ॥ १७ ॥ ४ शिश्रीयषामि श्रयितुमिच्छामि । ५ दारितं अंहोऽघं येन । ६ संपदो ददातीति । अपगतः संसारः यस्य । ७ न विद्यते संतमसं यस्य ॥ १८ ॥ ८ आशु शीघ्रम् । ९ नेहे न प्रार्थये इति भावः । १० अतत अकृत । ११ अमुं स्तोतारम् अव । १२ वरोऽनन्यसामान्यगुणमयत्वात् ।

## अथ वीरस्तवनम् ।

चित्रैः स्तोष्ये जिनं वीरं चित्रकृच्चरितं मुदा ।
प्रतिलोमानुलोमाद्यैः खड्गाद्यैश्चातिचारुभिः ॥ १ ॥

वन्देऽमन्ददमं देवं यः शमाय[1] यमाशयः ।
नायेन[2]घ घना येनापाकृता ममताकृपा ॥ २ ॥

( प्रतिलोमानुलोमपादः )

दासतां तव भागारा[3] न चेयाय[4]मतामस ।
समतामययाचेन रागाभावततां सदा ॥ ३ ॥

( अनुलोमप्रतिलोमः )

वरदानवरादिन्व[5] न्वदिरावन[6]दारव ।
याज्यदेव[7] भयान्यास[8] सन्याया भवद[9]ेज्यया[10] ॥ ४ ॥

( अर्धप्रतिलोमानुलोमः )

श्रीद वीर विरेभ[11] त्वं दमिताक्ष गताऽशुभ ।
वीभाक्षमारम्भितारे[12] रक्ष मां सदरं गवि[13] ॥ ५ ॥

( अर्धभ्रमः )

---

### टिप्पनकम् ।

१ शान्त्यै वर्तते । २ नयतीति नायः तेन नायकेन चोज्ज्वला ( ? ) प्रणप्र० ॥ १ ॥ हे कान्तिगृह । ४ चेय उपार्जनापात्रं अयः शुभदैवं । न चेयायाऽचेयाय यथा भवति एवं दासत्तायाचनरागरहित ॥ ३ ॥ ५ तदादिन्वाः कल्पवृक्षाद्यास्तेषां......देव मुख्यत्वं यस्य तस्य संबोधनं । ६ इरावन जलदध्वने । ७ याज्याः पूज्या इन्द्रादयस्तेषां देव । ८ आस चिक्षेप । ९ भवं शरीरं द्यति खण्डयतीति भवद ! । १० इज्यया पूज्यया हेतुभूतया ॥ ४ ॥ ११ विशिष्टो रेभः स्वरो यस्य । १२ आरम्भोऽस्यास्तीति आरम्भी तस्य भाव आरम्भिता सैवाऽरिस्तस्मान्मां रक्ष । १३ पृथिव्याम् ।

गीरता जनता रहे ! धीर[1]तास्थिर[2]तारसा ।
सारतारश्रुता[3]ऽवन्ध्या सुर[4]ताजन तावकी ॥ ६ ॥

( मुरजबन्धः )

ये पश्यन्ति तवेहास्यारविन्दं भक्तिबन्धुराः ।
न पतन्ति भवे शस्यास्ते विदो भगवन्नराः ॥ ७ ॥

( गोमूत्रिका )

नमो[5]साररसामान मारि[6]ताक्षक्षतारिमा ।
सा[7]तामर्यायाम[8]तासारक्ष्यीं[9] म महाऽक्षं[10]र ॥ ८ ॥

( सर्वतोभद्रः )

तिर्यग्नरसुराकीर्णा भासतेननते सभा ।
त्वन्माहात्म्यात् कृताश्चर्यं या श्रिता [11]तता श्रिया ॥ ९ ॥

( पद्मम् )

[12]रेगौरांगो[13]रुंगीर्गङ्गागौरीगुरुररोग[14]रुक् ।
गोरं[15]गौंगाररागारिरैरिरोरै गुरुं [16]गिरिं ॥ १० ॥

( द्व्यक्षरः )

---

१ अधीरतापरवादि अक्षोभ्यम् । २ स्थिरता दृढप्रतिज्ञा तयो रसा भूः स्थानमित्यर्थः । ३ यथाऽवन्ध्या पुत्रं प्रसवति तथा वाणी श्रुतं प्रसवति । ४ निधुवनक्षेपक । ५ न मानां लक्ष्मीणां असारेण तात्पर्येण च रसोऽनुरागो यत्र विषये स तथा संबो० । ६ विध्वस्तारिपु यथाभवति । ७ षण्यी दाने । सातो दत्तो रोगदैर्घ्यस्य तासः क्षयो येन स तथा । ८ तस् दस् च क्षये इति...इति संबोधने । ९ पञ्चव्रतप्रधानः । १० अक्षरो निश्चलः । यद्वा महाव्रतरूपं अक्षरं श्रुतवचनं यस्य ॥ ८ ॥ ११ ततस्य भावस्ततता विस्तीर्णत्वं तया ॥ ९ ॥ १२ रैः स्वर्णं तद्वद्गौरं पीतं अङ्गं यस्य तस्य संबोधनम् । १३ उरुर्गुर्वी या गीर्वाणी आगमरूपा सैव गङ्गा तस्या उत्पत्तौ गौरीगुरुर्हिमाचलः । १४ न विद्यते रोगरुग् रोगपीडा यस्य । १५ गो पृथ्वी रङ्गस्थानं यस्याऽसौ । १६........

ऌालऌालोऌलीऌालं ततता तातिता तते ।
ममाममामममुमाऽननानेनोननानन ॥ ११ ॥

( एकाक्षरपादः )

केकंकिकाककंकौकःकेकाकोककेकिकम् ।
कककाकुककोकैककक्कुः कौककाकंका ॥ १२ ॥

( एकाक्षरः )

मरुभूमौ तपक्रताविव चारुसरोवरम् ।
कुतः सुकृतहीनानां सुलभं तव शासनम् ॥ १३ ॥ युग्मम् ॥

( असंयोगाक्षरः )

सारणिः पुण्यवन्याया ज्यायमौक्तिकमुक्तिक (!) ॥
कामधेनुर्नयविदां बोधोल्लासनसालसा ॥ १४ ॥

---

१ लड विलासे लडति विलसति लालल्यते इति विग्रहेऽचि यङ्लु० ताप्रत्यये लालला क्रियासमभिहारेण विलसन्ती आले (?) लीला सरसचेष्टा यस्याः सा त्रैलोक्यव्यापित्वात् । विनाशे रोगतुल्यं मानं प्रमाणं तस्मिन् अममं निःस्पृहं यथा भवति अप्रमाणमित्यर्थः । उमा कीर्तिः न एननं प्राणनं जीवितं यस्यानेनोननं पापव्यापारादननं यस्य तस्य सं० ॥ ११ ॥ २ ककं कक्कइ ष्वकुङ् गतौ । काय जलार्थम् । काय जलाय ककन्ते आगच्छन्तीत्येवंशीलाः काकाः कंकाश्च तेषां ओकः भवनं । कुकि वृकि आदाने...स्ववाणीं कोकन्ते वदन्ति ते केकाकोककाः अके भूताः, केकिनो मयूरास्तत् शब्दायमानमयूरं । कक लौल्ये, ककते इति ककाः, काकुर्ध्वनिविशेषः । कै शब्दे कायन्ति शब्दयन्ति क (!) स्वप्रेयसीं चाटुपराश्च ते काकुकाश्चेति कर्मधारये ककाका..........कुर्भूमिः आधारः, कककाकुककोकैककक्कुः । को ब्रह्मा तस्य ओकः आश्रयः कौकः 'ओकः पद्माश्रयश्चोका' इति अमरकोशे, कौकाः कमलं तदेवाङ्कचिह्नं पद्माकरलक्षणं, यस्य स कौकोऽङ्क एवंविधस्य कस्य पानीयस्य अङ्कः उत्सङ्गो यत्र तत् कौकोङ्काङ्ककं । कप् प्रत्ययः ॥ १२ ॥

सारं स्याद्वादसुद्वायात्रिपदी भवतोऽञ्जसा ।
सा मे सुहृदि कान्त्यैकाखिलेनै रहितैनेसा ॥ १५ ॥

(द्वाभ्यां खड्गः ।)

श्रीसिद्धार्थकुलव्योमदिवाकर ! निरञ्जन ! ।
न के क्षतैकान्तवादिमतं तीर्थं तव श्रिताः ॥ १६ ॥

(मुशलम्)

का या त्वयि भव्याली धन्या धत्ते स्म चेतसा ।
मता तामरसा काममकौसा गर्त्तसागरम् ॥ १७ ॥

(त्रिशूलम्)

त्रिशलाकुक्षिपाथोजराजहंस ! जगद्विभो ।
भोगास्तृणमिव त्यक्तास्त्वया मोक्षेदिदृक्षया ॥ १८ ॥

(हलम्)

सुरासुरनरास्तुभ्यं नमस्यन्ति जिनोत्तम ! ।
मनःप्रसादसन्दर्भ(?) दलिताशुभवासनाः ॥ १९ ॥

(धनुः)

कथं कर्तुं जनो मोहव्यपोहमहह क्षमः ।
मनसा सादरं यस्त्वां न स्तौति तिमिरापहम् ॥ २० ॥

(शरः)

बाल्ये मेरुशिरःकम्पसम्पत्प्रथितविक्रमः ।
मनोजाऽनोकहव्यांल ! मम स्वामी भवाऽऽभवम् ॥ २१ ॥

(शक्तिः)

---

१ सामस्त्येन शीघ्रं वा करणभूतेन । २ अपापा । ३ कासृ शब्दकुत्सायाम् । न कुत्सनीया । ४ त्वय्येव रतं आन्तरप्रीतिविशेषसमुदम् ॥ १९ ॥ ५ साधकतमेन करणेन ॥ २० ॥ ६ व्याली दुष्टगजः ॥ २१ ॥

मा[1]नितायक्रमामार रमामा[2]र्केन्द्रमाधव ! ।
वधमार्गे ममाकास सकामा धीः प्र[3]तानि मा ॥ २२ ॥

( अष्टदलकमलम् )

वन्ययान ! घनस्वान ! ध्[4]यानमौनकनद्धन !
ज्ञानस्थान ! जिन ! श्रीने[5] ! घनमेनः खनस्व नः ॥ २३ ॥

( षोडशदलकमलम् )

जय हेमवपुःश्रीक ! जगन्मोहापहारक ! ।
जराहिवीनसिंहाङ्क ! जन्मनीरधिनाविक ! ॥ २४ ॥

( स्तुत्यनामगर्भं बीजपूरम् )

तुभ्यं नमोऽतुलनयस्थितिकाय मीति-
वन्यासु पावक ! सुरस्तुत ! वीर ! नेतः ! ।
विद्यालताविपुलमण्डप ! हे[6]मरूप !
कल्याणधीकरणदक्ष नतेदमीन ! ॥ २५ ॥

( हारबन्धः )

भग्नाकृत्यपथो जिनेश्वरवरो भव्याब्जमित्रः क्रिया-
दिष्टं तत्त्वै[7]विगानदोषरहितैः सूक्तैः [8]श्रवस्तर्पणः ।
जन्माचिन्त्यसुखप्रदः सुरचितारिष्टक्षयो वः सदा
[9]दाता शोभनवा[10]दिधीः कजदलायामेक्षणः संविदा[11] ॥२६॥

( कविनामगुप्तचक्रम् )

---

१ मानितः प्रमाणीकृतोलोकेभ्यो ज्ञापितो वा आर्यक्रमः साध्वाचारो येन स तस्य सं० । २ अकं दुःखं अस्यतीति । ३ त्वया इति समर्थात् गम्यते ॥ २२ ॥ ४ ध्यानं धर्मशुक्लं च मौनं वाक्संयमः ते एव कनद्दीप्यमानम् धनं द्रविणं यस्य सं० । ५ हे अर्हल्लक्ष्मीनाथ ! ६ नाऽनुस्वारविसर्गौ चित्रभङ्गाय संमतौ ॥ २३ ॥ ७ तत्त्वस्य याथात्म्यस्य वचनीयता मिथ्याप्ररूपणादिना तदेव दोषः । ८ कर्णप्रीतिकरः । ९ दाबक् लवने । १० छिन्नकुवादिधीः । ११ ज्ञानेन ॥ २६ ॥

श्रीमद्धामसमग्रविग्रह मया चित्रस्तवेनाऽमुना
नूतस्त्वं पुरुहूतपूजित ! विभो ! सद्यः प्रसद्येधि माम् ।
ख्यातज्ञातकुलावतंस ! सकलत्रैलोक्यकृत्स्नान्तर-
स्फारक्रूरतरज्वरस्मरतरत्संरब्धरक्षारतः ॥ २७ ॥
( चामरबन्धः )

इति श्रीवीरजिनस्तवनं चित्रमयम् ॥

---

## अथ श्रीपञ्चतीर्थिजिनस्तवनम् ।

शुक्लध्यानसुधारसेन निभृतः सर्वार्थसिद्धिं सृजन्
दृष्टोऽष्टापदपीठसंस्थिततनुः क्लेशप्रणाशप्रभुः ।
लोलत्कुन्तलमालिकाच्छलदलश्रेणीभिरभ्यर्चितः
श्रेयः कामघटः सतां घटयतु श्रीमान् युगादीश्वरः ॥१॥
विश्वाभीप्सितशस्तवस्तुविपणिर्यस्याः पदोपासना
क्षीरं मोक्षसुखं मनोभवमुखा घासश्च दोषावली ।
वन्द्या सर्वसुपर्ववर्णगुरुभिः सा कामधेनुः सतां
मूर्तिः शान्तिजिनेशितुर्वितनुतां पुण्यप्रसूतिः श्रियम् ॥२॥

---

### टिप्पनकम् ।

१ जनितोऽन्तरङ्गस्फारक्रूरतरो ज्वरः सन्तापो येन स चासौ स्मरश्च, तस्य तरौ बलं तस्य संरब्धः संरम्भः तस्माद्रक्षा त्राणं तत्र रतः ॥ २७ ॥

॥ इति श्रीवीरस्तवावचूरिः ॥

---

कल्याणस्थितिभाग् विमुक्तिकमलाभालस्थलीमण्डनं
वीतत्रासतया जितापरमहात्रैलोक्यचिन्तामणिः ।
अर्तिव्रातहरः सुरासुरनरश्रेणेः परं दैवतं
श्रीमान् नेमिजिनः श्रियेऽस्तु भवतां सर्वात्मना निर्मलः ३

सच्छायस्त्रिजगन्मनोरथकथाविस्तारवैहासिकं
तन्वन् नन्दनसम्पदो दिविषदां विश्रामभूमिः परा ।
प्रीणन्नर्थिजनान् फलेन महता पत्रश्रिया मण्डितो
भूयाद् भूरिविभूतये भवभृतां श्रीपार्श्वकल्पद्रुमः ॥ ४ ॥

श्रीमत्युग्रकुलार्णवे समभवद् यः शुद्धवर्णैकभूः
सर्वः कोऽपि निषेवते प्रतिदिनं यं चाऽखिलश्रीप्रदम् ।
स श्रीवीरजिनेश्वरस्त्रिजगतीनेत्रोत्सवो दक्षिणा-
वर्तः शङ्ख इवाद्भुतातुलसुखं पुष्णातु पुण्यात्मनाम् ॥५॥

विश्वोल्लासिमहागतान्तरतमा माहात्म्यलक्ष्मीवृतः
प्रोत्सर्पद्गुणसाधवः शिवपदैश्वर्येन्दिरासंयुतः ।
क्षिप्ताशेषरुजः सदोदयभृतः श्रीतीर्थराजश्रियं
गातां नम्रसुरासुरेश्वरनरश्रैकोऽखिलावासताम् ॥ ६ ॥

इत्थं श्रीपञ्चतीर्थी सदतिशययुता प्रातिहार्यैः परीता
श्रेयःश्रीराजधानी सकलजनमनःकानने कामधेनुः ।
पुष्णातु स्फीतभक्त्या स्तुतिविषयपदं प्रापिता प्राणभाजां
सौभाग्यारोग्यभाग्याभ्युदयजयचिदानन्दसम्पद्विलासान्

इति श्रीपञ्चतीर्थीस्तवनम् ।

---

# षड्भाषामयानि जिनपञ्चकस्तोत्राणि ।

श्रीणां प्रीणातु दानैः प्रथमजिनयतिर्नाभिभूर्भूर्भुवःस्वः–
सेवाहेवाकिनाकिप्रभुमुकुटतटस्पृष्टपादारविन्दः ।
भूतो भावी भवन्वाऽनणुरणुरपि वा भावराशिः समस्तो
यज्ज्ञाने तुल्यकालं प्रतिफलति यथा स्वस्वरूपव्यवस्थम् ॥१॥
(संस्कृतम्)

जेणं भारहखित्ति झत्ति ववियं सद्धम्मबीयं तया
एगेणावि तहा पसंतहियओ सो पुंडरीओ कओ ।
जो अट्ठावयपिट्ठिसंठियतणू पत्तो परं णिव्वुइं
देवाणं पढमं अपुव्ववसहं भत्तीइ वंदामि तम् ॥ २ ॥
(प्राकृतम्)

जो जो इंदणरिंदवंदियपदो तेलुक्कचिंदामणी
जं आलिंगदि रागसंगदिमदी सा मुत्तिलीलावदी ।
जो दा णिव्वुदिदीविआ गदमला विज्जापसूदी जदो
सो सामी रिसहो जिणिंदवसहो दिज्जासुविज्जामुहं ॥ ३ ॥
(शौरसेनी)

तावत्तत्तसुवण्णवण्णलुइले यश्शंझदेशे जडा-
पंदी लायदि इंदनीलफलिणी तापिश्श्यगुश्श्यय्युदी ।
लम्मा कप्पलदा यथाशुलगिलिस्कंधंमि तुंगे स्तिदा
शेपश्वालदु णाभिरायतणए मे वय्ययंबा……॥ ४ ॥
(मागधी)

धारिंतो पकटं अनुक्कटजटाजूटच्छटाडंबरं
दं निंतो मतनं कतंतसतनं तिंतो भवानीहितम् ।

स वन्भू गननाथचंसितपतो तेवाहितेवो सतां
भव्वानं वसदद्धजो जिनपती तिज्जा पतं सासतम् ॥ ५ ॥
( पैशाची )

सप्फूतप्फालफालप्पकटितलफसुप्फूतलोमंचलाची
सोफालाचं ततेहा मुलमुललचितो तालपूचोप्पालो ।
खोलाखोखप्पचालप्पपलहुतवहुच्छंपनोमंखसंखो
भोतु त्तेलुक्कपंथू कसटफलहलो मारुतेवो चिर्निंतो ॥ ६ ॥
( चूलिकापैशाचिकम् )

वाणिज्जव्ववहारपाणिगहणग्गामागराइट्ठिई
धम्माधम्मविचारु सारु कहिओ जेणं जए साहुवि ।
अम्हे आण वहंतडा तसु तणी सीसल्लडे अप्पणे
पाए आदिजिणेसरस्सु नमहुं आणंदनव्वत्तया ॥ ७ ॥
( अपभ्रंशः )

इति श्रीऋषभदेवस्तवनम् ॥ १ ॥

---

## श्रीशान्तिजिनस्तवनम् ।

श्रीमान् शान्तिजिनः पुनात्ववृजिनः सर्वान् स भव्याञ्जिनः
सन्त्यक्तोपरमा वितीर्य परमानंद····संविद्रमाः ।
गौर्यस्य त्रिपदी जगत्रयवने स्वैरं चरन्तीतरां
चित्रं त्रासयति स्फुरत्तरमदान् दुर्वादिसिंहानपि ॥ १ ॥
( संस्कृतम् )

रज्जं रज्जंगणाओ वियडगयघडावाणसित्तंगणाओ ।
अक्खोहाणेगजोहा वहय हयमहा सतुरंगा तुरंगा ।

उज्झित्ता सव्वमेयं तणमिव भयवं जोऽपवज्जं पवज्जं
निव्विण्णो संपवण्णो दिसउ सिवसुहं हेमकंती स संती २

( प्राकृतम् )

कुज्जा कुज्जावलेवुम्मदमदनरिऊ मत्तमातंगगामी
सामी चामीकराभज्जुदिरुइरतणू निव्वुदिं संतिनाधो ।
पंदे राजंदि जस्स क्रमकमलवहा धम्मलच्छीण तासिं
झिल्लंतीणं दसण्हं दसपवरसरा कुंकुमम्मीसिदव्वा ॥ ३ ॥

( शौरसेनी )

संयादा धलणीयलंमि शयले शंदीपणाहं तदा
ओइण्णे निववीशशेणशद्दणे यस्सिप्पभावब्भुदे ।
शंशाल्लाडविभंदि तंदिहलणे शेशंति तिस्सूकले
कुज्जा मे दुलिदो वशंदिपसमं देवासुलेहिं स्तुदे ॥ ४ ॥

( मागधी )

नेहे जस्ससरंमि कंतिसलले वंतारुतेवंगना-
तिट्ठीओपतिबिंबिता अचवला रंगंतताराजुता ।
रेहंविब्भमरप्पसंगसुभगं भोजावलीओ विव
तं संतिं नमह प्पसंतहितयं कं तप्पतप्पापहं ॥ ५ ॥

( पैशाची )

अनंतआनंतनमंतइंतमहंतचोकिंतनरिंदपुखं ।
तं संतिनाधं कतमोहमाधं नाधामि मुक्खस्स पधंधुपाधं ॥ ६ ॥

( चूलिकापैशाची )

जसु पयनमणेणं मोहरायस्सु केरा-
दुडवडयदुचक्का ते विनासंति दूरा ।

हवइ दुरियसंती पत्तहे नत्थिभंती
स दिशतु शिवकेरी वट्टडी संतिनाहो ॥ ७ ॥
(अपभ्रंशः)

॥ इति श्रीशान्तिनाथस्तवः ॥

---

## श्रीनेमिनिजिनस्तवः ।

---

पारावारसमानसंसृतिसमुत्ताराय नारायणः
सेवासूर्यचरीकरी दृढतरी तुल्यांस यस्यादरी ।
देवानामपि देवता स परमब्रह्मस्वरूपः प्रभुः
शब्दब्रह्मविदाऽप्यगम्यमहिमा नेमीश्वरः पातु वः ॥ १ ॥
(संस्कृतम्)

मेरुव्वत्तममाणवुव्वणिवईप्पासायचित्तं व वा-
सुग्गासुव्वणरायणुव्ववणिणं गेहुव्ववा········ ।
उज्जाणुव्व सुवण्णभासुरतरो वाणीविलासो जए
जस्से सो सहए सुहं दिसउ मे सो णेमितित्थंकरो ॥ २ ॥
(प्राकृतम्)

जेणं बंभसदक्कदुप्पभिदिणो सव्वे सुरा णिज्जिदा
ईसो जेण हराविदो पदिदिणं अट्टं उमाअग्गदो ।
जेणे ज्झाणहुदासणंमि मदणो सोवि क्खयं पाविदो
सो नेमी सिवदायगो भवदु मे देवाहिदेवो सदा ॥ ३ ॥
(शौरसेनी)

शुक्कज्झाणदवानलेण शयले कम्मिंधणे जालिदे
तक्कमेण युदेव्वकय्यलयुदी राजीमदीवल्लहे ।

विज्जानं पलमस्तशस्तविशयं नेमीशले भाविणं
दिय्या शय्यअवय्यवध्यिद्महाविय्यामहं दाळए ॥ ४ ॥

( मागधी )

लीलाए तितसाचलस्स करती गोवद्धणो तोलितो
तेलुक्कं धरितं च जेण सततं तेहेक्कतेसे मुहम् ।
जेनं सो विरही हरिव्व सनुजा साहाइं हिंडोलिओ
तिज्ञानंतबलो स मोक्खपतविं तेवो सिवानंतनो ॥ ५ ॥

( पैशाची )

कालंती चलकचलाचलशिला पालितनीलप्पफो
नेमी यातवला व वंसतिलको सो फोतु फत्तंकलो ।
धारितुव्व पफामि शेनकसिनं लोहस्स सन्नाहयं
सव्वंकेसु अनंकवीलविचए बीलावलीग्गामनी ॥ ६ ॥

( चूलिका )

जगजमडणुजेवं कामउद्दामु धामुं
हयगयरहसज्जं रज्जलच्छि चएप्पि ।
तिहुयणि विणु जेणं कोवि अन्तो न सक्को
सिवसुहु मुहु नेमी देवहं देवु देउ ॥ ७ ॥

( अपभ्रंशः )

॥ इति श्रीनेमिजिनस्तवः ॥

---

## श्रीपार्श्वजिनस्तवः ।

---

भक्तिव्यक्तिप्रणमदमरस्वर्णकोटीरकोटी-
प्रेङ्खज्ज्योतिः प्रचलदचिरः कज्जलश्यामलद्युत् ।

श्रेयोवल्लीरुपचयमयः प्राप्तसंतापहर्ता
भूयात् पार्श्वः शमितदुरितोऽम्भोदवन्मोदकर्ता ॥ १ ॥
(संस्कृतम्)

फणिफणमणिमाला रेहए जस्स सीसे
तमतिमिरपणासे दीवपंतिव्व दिव्वा।
परममहिमवासो पावराई व राई
जगतमहिमवासो देउ सुक्खं स पासो ॥ २ ॥
(प्राकृतम्)

वोलिज्जंत कुलाचलाहि पयलं भोदप्पभाहिं तदा
वुट्ठीहिं कमठासुरस्स भरिदब्बंभंडभांडाहिवि।
जस्स ज्झाणहुदासणो पजलिदो सित्तोविही माणहे
सामी पासजिणो स भोदु भगवं तेलुक्कसुक्खप्पदो ॥३॥
(शौरसेनी)

चोला अस्तातिलोला तिहुयणगशिणी शाइणी डाइणी वा
यश्कालश्कातुलश्का पलपललसिका खित्तवाला अबाला।
दुस्टे अन्नेवि नस्टा यणयणिदभया यश्श नामप्पभावा
शे मे वामेयदेवे भवदु हृदलणे श्शोणिविद्धंसकाली ॥ ४ ॥
(मागधी)

मंता तंताविं जंता गतमहिमकहा मो तहा विप्फुरंती
सेवाहेवाकिनावि प्पचुरबलभरंतित्ति तेवा न तेवा।
भावाहीनप्पभावा मनिगनमपुहा जम्मि सव्वेवि जाता
काले एतम्मि पासो जयति जगगुरू जागलकप्पभावो ॥५॥
(पैशाची)

दुरियभरपल्लाइं दूरओ चंचलाइ
सक्कभक्खइ खलाइं विग्घसंघादलाइम् ।
नहि जिणहियडक्खइ सोगसंतावु सक्कइ
जसु पयनमणेणं सो सुहं पासुदेउ ॥ ६ ॥
(अपभ्रंशः)

॥ इति पार्श्वजिनस्तवः ॥

---

## श्रीवीरजिनस्तवः ।

विद्यानां जन्मकन्दस्त्रिभुवनभवनालोकनप्रत्यलोऽपि
प्राप्तो दाक्षिण्यसिन्धुः पितृवचनवशात्सोत्सवं लेखशालम् ।
जैनेन्द्रीं शब्दविद्यां पुरत उपदिशन् स्वामिनो देवतानां
शब्दब्रह्मण्यमोघं स दिशतु भगवान् कौशलं त्रैशलेयः॥१॥
(संस्कृतम्)

जो जोईसरपुंगवेहि हियए निच्चंपि ज्झाइज्जए
जो सव्वेसु पुराणवेयपभिइग्गंथेसु गीइज्जए ।
जो हत्थट्ठियआमलं व सयलं लोकत्तयं जाणए
तं वंदे तिजयग्गुरुं जिणवरं सिद्धत्थरायंगयं ॥ २ ॥
(प्राकृतम्)

देविंदाणवि वंदणिज्जचलणा सव्वेवि सव्वन्नुणो
संजादा किर गोतमा अवि तया जस्सप्पसादा दुवे ।
सो सिद्धत्थभिहाणभूवदिसुदो जोगिंदचूडामणी
भव्वाणं भवदुक्खलक्खदलणो दिज्जा सुहं सासदं ॥ ३ ॥
(शौरसेनी)

दुस्टे शंगमके शुले भयकले घोलोवसग्गावलिं
कुव्वंतेवि न लोशपोशकलुशं येणं कदं माणसं ।
इंदे भत्तिपले ण गेहबहुलं योगीशलग्गामणी
शे वीले पलमेशले दिशतु मे नेउन्तपुन्नत्तणं ॥ ४ ॥

(मागधी)

कंपंतक्खितिमंडलं खडहडप्फुट्टंतबंभंडयं
उच्छलंतमहण्णवं कडयडत्तुट्टंतसेलग्गयं ।
पातग्गेन सुमेरुकंपनकरं बालत्तलीलाबलं
वीरस्स प्पहुनो जिनान जयतु क्खोनीतले पायडं ॥ ५ ॥

(पैशाची)

इंहोवेदणरेसि जासु महया हल्लोहलेणागओ
जं ज्झाई मुणिहंसओ हियडए अक्खे निरुंभेविणु ।
साहु श्रोप्पिणु जासु कोइ महिमा नो तीरए माणवो
पाए वीरजिणेसरस्सु नमहुं सीसल्लडे अम्हहे ॥ ६ ॥

(अपभ्रंशः)

॥ इति श्रीवीरजिनस्तवः ॥

---

एवं पञ्च जिना निरस्तवृजिनाः सद्भक्तिविभ्राजिना
षड्भाषामयसंस्तवेन मयका नीतः स्तुतेर्गोचरम् ।
त्रैलोक्यस्पृहणीयसिद्धिरमणीश्रृङ्गारणप्रत्यला
देयासुर्गुरुसोमसुन्दरकरप्राग्भारगौराः श्रियः ॥ ७ ॥

इति षड्भाषास्तवनं ॥ लिखितं संवत् १५२२ वर्षे पण्डितशिरोमणि
पं० महीकलशगणिशिष्यचारित्रसुन्दरगणिना । फागणवदि
चतुर्थीदिने । लोहजग्रामे इंद्रसागरगणिपठनार्थं ।
शुभं भवतु श्रीश्रमणसङ्घस्य ॥

अर्हम् ।

संस्कृत-प्राकृत-शौरसेनी-भाषात्रयसमम्

# चतुर्विंशतिजिनस्तवनम् ।

अमरगिरिगरीयो मारुदेवीयदेहे
कुवलयदलमालाकोमला कुन्तलाली ।
सजलजलदपावन्तु सन्नीलकण्ठी
ध्वनिवहममन्दं नन्दयन्ती जयाय ॥ १ ॥
असमसमरलीलालालसाभावरूप-
च्छलपरबलहेलाभङ्गरङ्गंगमीव ।
करिवरपरिधारी वो विमोहावहारी
भवजयिविजयाभू रङ्गभूमी रमासु ॥ २ ॥
भविविभुसमिवन्दे संभवं संभवन्तं
निबिडजडिमभङ्गेऽभङ्गरङ्गेण गेयम् ।

---

अथाऽवचूरिः ।

सुवर्णाद्रिगरिष्ठं यत् श्रीऋषभसम्बन्धि देहे तस्मिन्नर्थादंसलक्षणे कुवलयदल-श्रेणिश्यामा जटा । सजलजलदमालेव साक्षात् सन्त एव नीलकण्ठीधवा मयूरास्तत्स-मूहम्, अमन्दं यथा स्यादेवं समुल्लासयन्ती जयायाऽस्त्वित्यध्याहारः ॥१॥ असम-समरलीलायां लालसा भावो येषामीदृशा ये भावरूपाश्छलपराः शत्रवो रागादयस्त-त्सैन्यभङ्गायो रङ्गस्तङ्गनिद्यमिवाङ्कनिमषात् (?) करीन्द्रधारी अन्योऽपि यः शत्रुजयैषी स्यात् करीन्द्रसङ्ग्रहं करोति । अस्त्वित्यध्याहार्यं । भवजयी यो विजयाभूः श्रीअजितः, रङ्गस्थानं सकलश्रीविषये यथा नर्तक्यो रङ्गभूमौ लास्यलीलां कलयन्ति तथा विश्वश्रियः श्रीअजिते इत्यर्थः ॥२॥ भविनां प्राणिनां प्रकरणाद्गुणभृदादिकानां, तृतीयजिनम्, निबिडजडिम्नो भङ्गे सम्भवन्तं घटमानमित्यर्थः, अर्थादिन्द्रादिभिः अङ्ककैतवात्

---

1 एतद् चिह्नविहितस्थलस्याऽवचूरिः प्रायस्त्रुटिता.

तरणिहयवरेणाबद्धसेवं विबोधो-
    द्धुरयविरलाहंकारभारेण किंनु ॥ ३ ॥
समसमयमिवाऽलं चञ्चलं चित्तमङ्गा
    हरणहरिवरं वाऽचञ्चलीभावयन्तम् ।
उरसि विरसभावं हन्त हन्तुं तुरीयं
    तमरिहरमणीयं धारणीयं धरेऽहम् ॥ ४ ॥
असमसमयपारावारपारीणरीण-
    च्छलचरणधुरीणच्छन्नमच्छिन्नमीडे ।
महिमभरनिरुद्धामङ्गलं मङ्गलाभू-
    विभुमिदमसुबद्धं मङ्गलाकारणं तु ॥ ५ ॥
तमुदयगिरिचूलाचुम्बि भूच्छायभूरि-
    च्छिदुरतरणिबिम्बाभङ्गधामाभिरामम् ।
सहभवमिव रागं कुङ्कुमाभं वहन्तं
    वह विदुरसुसीमासंभवं देवदेवम् ॥ ६ ॥
अवममवहरन्तु च्छन्दसंचारिपश्वाऽ-
    न्नणुस्रमणिफणा मे देवदेवोरुदेहे ।

---

....................॥ ४ ॥........चारित्रधुरीणा यतयस्तैः सेव्यत्वेन च्छन्नं व्याप्तम् निरन्तरम् स्तौमि, महिमभरेण निरुद्धं निषिद्धममङ्गलं जगतोऽपि येन तं तथा । मङ्गलाङ्गजजिनं श्रीसुमतिमित्यर्थः । इदमसंबद्धं यो मङ्गलाभूः स मङ्गलायाः कारणं कथम् ? विरोधाभावपक्षे मङ्गलानामाकारणं निमित्तत्वात्कारणमाकर्षणमिति भावः, मङ्गलानामाकारणं यस्मादिति बहुव्रीहिः ॥ ५ ॥ तं प्रसिद्धं उदयाचलचुम्बीत्यनेनाऽभिनवं भूच्छायस्य तमसो भूरिच्छिदुरेत्यनेनातितीव्रं यत्तरणिबिम्बं तद्वदभङ्गं । यद्धामाऽर्थोदारत्नवर्णं वपुस्तेजः नश्वरवैराताम्रधामवान् तेनाऽभिरामम् । इमिदं जिनविशेषणम् । सहजमिव कुङ्कुमाङ्गरागं वहन्तं वहीति शेषः । श्रीपद्मप्रभम् ॥ ६ ॥ अवमं निन्द्यं अभिप्रायमतं मेऽपहरन्त्विति

रणभुवि किल भङ्गे मारवीरेण दूरे
समिमिह परिहीणा पञ्चबाणी रयेण ॥ ७ ॥

सममिह हिमभाजिदेहदन्तोरुकूलं
धय धवलकरालं सारिभावारिणेदम् ।
समलममलयन्तं भूविहायोऽहिगेहं
हिमकरधरमंके देवदेवं नुवामि ॥ ८ ॥

नरवरकुरुरामा नामरामालिचूडा-
मणिभुवमभवन्तं चित्तवासे वसन्तम् ।
नवमममलभासं भासमिद्धोरुभाल-
च्छलधवलकराभा संकरेणेव विद्धम् ॥ ९ ॥

निरवमतमनन्दासुन्दरोदारतुन्दि-
स्थलसलिलरुहाली केवली केवलाय ।
नवमरसनिलिम्पाहारसाराभिरामं
नवमचरमकुण्डं किंनु भूखण्डमण्डि ॥ १० ॥

---

योगः अर्थात् सुपार्श्वे, समं युगपत् परित्यक्ता पञ्चफणानां पञ्चबाणीवेत्युत्प्रेक्षा ॥ ७ ॥ युगपदिव इदं चाऽमलयन्तमित्यत्र योज्यम्, हिमभासां जैत्रदेहस्य दन्तानां तथोरुकूलंधय उरुतटस्थायी यो धवलकरो लाञ्छनचन्द्रस्तस्य चात्यर्थ-प्रसारिकान्तिजलेन क्रमात् पृथ्व्याकाशपातालानि निर्मलयन्तमिव, अङ्के चन्द्रभृतं अर्थाच्चन्द्रप्रभम् ॥ ८ ॥ रामानाम्नी या स्त्रीश्रेणिचूडामणिस्तज्जं सुविधिमित्यर्थः, चित्तवासस्थाने वसन्तं कुर्वित्यन्वयः, शुक्रः कान्तिदीप्तो गुरुश्च यो भालच्छलाद् धवलकरश्चन्द्रस्तत्कान्तिसङ्क्रमेन व्याप्तमिव सन्तममलभासम् ॥ ९ ॥ अनिन्द्यतमाया नन्दायाः सुन्दरोदारा या तुन्दिः कुक्षिस्थलकमलेऽलिः भ्रमरः, अर्पांचशीतलः अस्त्विति योगः, शान्तरस एव निलिम्पाहारः सुधा, नवमचरमं दशममित्यर्थः, पाताले नव सुधाकुण्डानि शीतलन्तु भूखण्डस्थं दशमं सुधाकुण्डमिव ॥ १० ॥

भवभयजयिनन्दाभूपुरोगामिदन्त-
   च्छविनिवहभवाभा भूरिभद्रङ्करा मे ।
इह किल कलशाली भाववन्दारुदेवा-
   सुरनरवरभाले काममुत्तंसकेलिम् ॥ ११ ॥

दुरवमपरमोहं हन्तु मोहं जयाभू-
   रविनववसुहासी कासरेणावभासी ।
सहजलजलवाहालिङ्गिभागाभिरामो-
   दयगिरिगरिमाणं हन्त धत्ते किलाऽयम् ॥ १२ ॥

स गिरिधरणिभाराधारलीलाधुरीणं
   किरिवरममुमङ्के धारयन्तं निरन्तम् ।
परमगरिमलाभं लम्भयन्तं किमेवं
   विमलममलदेहं चित्तगेहं नयेऽहम् ॥ १३ ॥

विभुविमलपुरोगाभङ्गरोगावलीभि-
   श्चरणकररुहालीभासमूहा जयन्ति ।
नमिपरसुरबाला भालभागे सरागं
   किल परमललामाडम्बरं धारयन्ति ॥ १४ ॥

चरणसरसि सारे किंनु निस्सीमधामाऽ-
   मलसलिलसमूहे हेमपङ्केरुहाणि ।

---

भवभयजयी यो नन्दाभुवः शीतलजिनात् पुरोगामी श्रीश्रेयांसः । व
शोभा ॥ ११ ॥ दुष्टो गर्वः परम ऊहो यत्र । वसुपूज्यः, रक्तवपुः श्रिया, ल
महिषेण, सजलजलदालिङ्गी यो भागस्तदभिरामोदयाद्रिशोभाम् ॥ १२ ॥ व
रन्तरं, साद्रिभूभारक्षमत्वात्, अङ्के उत्सङ्गे ॥ १३ ॥ श्रीअनन्तस्य यौ निर्मल
श्रेविभिंदौ चरणौ, नख (?) नमतः । कर्ता पूर्वार्धगत एव ॥ १४ ॥ पविधर
ज्ञाहस्य विभोः श्रीधर्मस्याऽसौ कान्त्या पिञ्जरा पिङ्गवर्णा, विभुवऽङ्गे तत्र

पविधरविमुक्तासन्निभापिङ्गरङ्गा
 करुहवरमाला वो विरुद्धं रुणद्धु ॥ १५ ॥
दिवि भुवि चिरकालं चन्द्रमिद्राहुकण्ठी-
 रवभवभयभूयोरीणरङ्गं कुरङ्गम् ।
तरुणकरुणमङ्के लालयन्तं किलाऽमुं
 भविवर! भगवन्तं धेहि हे धीर! चित्ते ॥ १६ ॥
नर! नम परपङ्कावासहिंसाधुरीणा-
 खिलभविभयभीरुं दूरभीपङ्कमङ्कम् ।
छगवरमवगाढं पालयन्तं सुगूढं
 सदयमनयमन्थं कुन्थुदेवं सुसेवम् ॥ १७ ॥
तमरममरदत्तामन्दमन्दारमाला-
 परिमलरसबद्धालम्बिरोलम्बमालम् ।
निरवमनवहेमच्छायकायं नमामोऽ-
 मरगिरिमिव कण्ठे वारिवाहावगाढम् ॥ १८ ॥
बहलमिह वहन्तं कुन्दमन्दारमल्ली-
 कुसुममसमवल्लीमञ्जुलं मल्लिदेवम् ।
चिरमुरसि वहामो भूरिताराऽविरामा-
 वलिविमलविहायोमण्डलं किंनु नीलम् ॥ १९ ॥
कुवलवलयकायं कुन्दजिद्दन्तपाली-
 च्छविभरपरिभोगं देवमल्लीपुरोगम् ।

---

मते सवर्ण, नखं, ॥ १५ ॥..............................॥ १९ ॥ श्यामकायम्,
......श्रेणीबद्धत्वात् पालीव पाली तत्कान्तिभरस्य समन्ताद् भोगो यस्य, मुक्ति-

तमरिहमिव सेवे वारिवाहं सवारिं
किमसमबिसकण्ठीमण्डलीलीढकण्ठम् ॥ २० ॥

जयभुवि विजयन्ते भासुरा भूरिभासा
दमिवर ! नमिदेहे केलिगेहे कलासु ।
किमहिमकिरणाभा भाववन्तं नयन्ति
सुदिवसमविरामं चण्डभावं विहाय ॥ २१ ॥

हरिमुरुधरमाणं कम्बुसम्बन्धबन्धु
किमु इह बहुमन्ता कम्बुधारी चिरेण ।
नवनवभवकारावासवारी वरीयो-
गवलविमलधामा नेमिनामा ममायम् ॥ २२ ॥

फणिगुरुफणमालालम्बिचूडामहीयो-
मणिगणकिरणालीसङ्करङ्गावगाढम् ।

---

सुव्रतम्, बलाकाश्रेण्या श्लिष्ट ॥ २० ॥ जयोत्पत्तिस्थाने, दमिनो मुनयः, अत्र षष्ठ्यर्थे सप्तमी, कलास्वित्यत्राऽपि, एताः किं रविकान्तयश्चण्डतां त्यक्त्वा सौम्यत्वापन्ना नत्यर्चादौ भावभाजं प्राणिनं निरन्तरं सुदिवसं शोभनदिनं प्रापयन्ति, रविकान्तितुल्याभिर्नमिजिनतनुद्युतिभिर्भाभिर्नित्यं श्रेयोदिनमेव क्रियते इति भावः ॥ २१ ॥ पुन्नपुंस्त्वात् कम्बुशब्दस्य क्लीबत्वम् ततो गुरुशङ्खं पाञ्चजन्याभिधानं धरन्तम्, संबन्धेन बान्धवं कृष्णं बहु मन्तेव कम्बुधारी, अङ्के पाञ्चजन्यकम्बुधारित्वबन्धुकृष्णबहुमानार्थमिव स्वयमप्यङ्के कम्बुभृदित्युत्प्रेक्षा । अत्र शीलार्थस्तृन्, तेन तत्कर्मणि द्वितीया । नवनवभवा एव कारा गुप्तिगृहाणि तत्र वासं वारयतीत्येवंशीलः । अस्तिसम्याहार्यम् । वरतरं नवमहिषवन्निर्मलं धाम वपुःस्वग्वाञ्चि यस्य, जिनः ॥२२॥ फणिगुरुर्धरणेन्द्रस्तत् फणमालायामवलम्बिनो ये चूडासु महत्तरा मणयः तेषां किरणानां सङ्केन यो रङ्गो रक्तिमा तेन व्याप्तम् । अत्रैव

अरिहमुरुमहेळासिद्धिसम्पन्नरागा-
रुणमिव गुणगेयं चित्तधेयं धरेयम् ॥ २३ ॥

गिरिभुवि हरिभावे बाहुलीलाविभिन्ना-
विरलनिबिडपीडासङ्गमे गाढखिन्नम् ।
परिभवपरिहारायेव वोढारमङ्के
हरिवरमरिहन्तं हे नरा धत्त चित्ते ॥ २४ ॥

इत्थं स्तोत्रपथं कथञ्चन जिना नीता विनीतात्मना
वृत्तैः प्राकृतसंस्कृतैः समुदितैस्तैः शौरसेन्या समैः ।
दद्युः श्रीगुरुसोमसुन्दरमुदास्वादं प्रसादं जवाद्
येनाऽसौ रसिकेव केवलकला लीलायते मय्यपि ॥२५॥

इति संस्कृत–प्राकृत–शौरसेनी–भाषात्रयसमं चतुर्विंशतिजिनस्तवनम् ।
महोपाध्यायश्रीरत्नशेखरगणिविरचितम् ॥

---

पार्श्वम् विश्वेऽपि गरिमास्पदविनोरुमहेळात्वं सिद्धेर्युक्तम् । तस्य सम्पन्नो यो राग-स्तेन रञ्जितमिव । गुणैर्गेयम् । चित्ते धेयं धारणार्हं ततएवाऽहं धरेयमर्थाच्चित्ते ॥ २३ ॥ शालिक्षेत्रासन्नायां । प्राग्भवे त्रिपृष्ठवासुदेवत्वे बाहुलीलया यद्विभिन्नं, क्लीबे क्तान्तत्वात् विदारणं तेन निरन्तरं निबिडा च या पीडा तस्याः संपर्के, गाढखेदाद् यः परिभवस्तदपहरणार्थमिव सिंहवरमङ्के वोढारं, शीलार्थेऽत्र तृन्, अर्थात् वर्धमानम् ॥ २४ ॥ श्रिया गुरुः सोमस्तद्वत् सुन्दराऽतिविशुद्धा या मुद् तस्या आस्वादोऽनुभवो यत्र प्रसादे तं तथा ॥ २५ ॥

॥ इति भाषात्रयसमचतुर्विंशतिजिनस्तवावचूरः ॥

ॐ नमः

# चतुर्विंशतिजिनस्तवनम् ।



जिन! श्रीनाभिजात! त्वां नतामरनराजित! ।
वन्देऽहं हतसंसारसम्भवामलकेवल! ॥ १ ॥
देव संवरसम्भूते सुमते! कुमतापह! ।
सुसीमाधरसम्भूतपरमानन्द! पाहि माम् ॥ २ ॥
मयापि पृथिवीजात! सुयशो भवतीशितः ।
महसेनभवासङ्ग सुविधे सलया रतिः ॥ ३ ॥

---

## अवचूरिः ।

नता अमरा नराश्च यस्य । विशेष्यपदं व्याख्याय विशेषणपक्षो व्याख्यायते जिनश्रिया आर्हन्त्यश्रिया इनो नायकस्तस्याऽऽमन्त्रणम् । हेऽभिजात सुकुलीन ॥ १ ॥ देव पूज्य! संवराभिधानात् जन्म यस्य अभिनन्दन इत्यर्थः । कुमतानां कुतीर्थिकनयानां विक्षेपकत्वात् कुमतापह! सुसीमा राज्ञी धरो राजा ताभ्यां संभूत! पद्मप्रभ इत्यर्थः । परमः प्रकृष्ट आनन्दः सुखनिस्यन्दो यस्य । पाहि रागादितस्करैर्गृह्यमाणं मां स्तोतारं रक्ष । विशेषणपक्षे तु संवरस्येन्द्रियनिग्रहरूपस्य सम्भूतिरुत्पत्तिर्यस्मात् । शोभनबुद्धे! सुसीमायामकृत्यकरणनिवारणात्, शोभनमर्यादायामात्मानं परांश्च धारयतीति सुसीमाधरः, सम्भूतः संजातः परमानन्दो येन यस्य वा ॥ २ ॥ मया स्तावकेनाऽपि प्राप्ता, लयेन मनसा ऐकाग्र्येण सहिता रतिः समाधिः, पृथिवी नामदेवी ततो जातः पुत्रत्वेन । हे सुपार्श्व शोभनकीर्ते! जगति त्वयि रतिरापीति गम्यम् । हे ईशितः! महसेननृपसंभव! असङ्गो निःसङ्गः । विशेषणपक्षे तु पृथिव्यामुपलक्षणत्वात् त्रिभुवनेऽपि जातं शोभनं यशो यस्य तत्संबोधनम् । महसा प्रतापेन इनः सूर्यः । भवे संसारे न सङ्गो वीतरागत्वादासक्तिर्यस्य ।

श्रेयसे भव मह्यं त्वं निकामशम ! शीतल ! ।
कृतानन्तशिवश्रेयन् जयाङ्गज मदासन ॥ ४ ॥
विमल ! ज्ञानसंपन्न ! सदानन्तसुखावह ! ।
मदनं मदलं धर्म नाशयाशयसङ्गतम् ॥ ५ ॥
वसुधाविहितानन्द ! शान्ते ! शान्तरसालय ! ।
तमो हर ममाऽऽशु श्रीनन्दनासारमानहृत् ॥ ६ ॥
सुगन्धिशीलमल्ले ! त्वां भावारिभयभीलुके ।
मयीह सुव्रतस्वामी भवामदन मे भय ॥ ७ ॥
शिवाभव नमामि त्वां न वामेयमदासन ।
हतमोह महावीर ! नवीनहरिदीधिते ॥ ८ ॥

---

शोभनो विधिर्यस्य ॥३॥ निकाममत्यर्थम्। शमः प्रशमो यस्य। दशमो जिनः, श्रेयांस एकादशः, जयानाम देवी तस्या अङ्गजः, मदं जात्याद्यष्टमेदमस्यतीति। विशेषणपक्षे, निकामशमेन शीतलः एकान्तशान्तात्मा। कृतानि अनन्तानि शिवानि श्रेयांसि येन स कृतानन्तशिवश्रेयान्, सम्बोधने तु दीर्घत्वाभावः। हे नाथ! त्वं जय। हे कन्दर्पनाशन! ॥ ४ ॥ विमलजिन! ज्ञानेन सम्पन्न! अनन्तजिन! भक्तानां सर्वसौख्यजनक! मदनं कामं मत्सकाशात् अलमतिशयेन हे धर्म! नाशय दूरीकुरु। शयसङ्गतं चित्तवर्तिनम्। विशेषणपक्षे, विमलं च तज्ज्ञानं च तेन सम्पन्नः। सदा निरवधिसौख्यजनक! अलमत्यर्थमतिशयेन धर्मो यस्य ॥ ५ ॥ पृथिव्यां विहितानन्द!.........सामस्त्येन सार्वभौमत्वात्। सा नवनिधानरूपा लक्ष्मीर्यस्य सः। हे अरनाथ! । विशेष०। भूमौ विहित आनन्दः शान्तिर्येन, (श्रीनन्दनं) काममस्यतीति कामास! अरीणां समूह आरं अन्तरङ्गबहिरङ्गरूपं तस्य मानं हरतीति ॥ ६ ॥ सुगन्धि गरिमप्राप्तं शीलमस्य। भावारिभीरो मयि स्वामी भव। विशेष० सुगन्धिशीतलमेव मल्लो विचकिलो यस्य। शोभनानि व्रतानि यस्य। न मदनेन रूपवत्त्वात् मातुं शक्या भा कान्तिर्यस्य। सोऽमदन०। भयेन शुभभाग्योदयेन भासि स्वयमेव शोभसे ॥७॥ मदमस्यतीति ततो द्वौ नञौ प्रकृत्यर्थं गमयतः। अनित्यत्वात्। न न नमामि किन्तु नमाम्येव। नवीना स्वेदमलादिरहिता

श्रीसोमप्रभसद्धर्मगुरुं गुरुमुदालयम् ।
वन्दे संयमरम्य त्वा महाशय रमावरम् ॥ ९ ॥
एवं श्रीजिन यः सोमयशोमलननौविन ।
तं पालय सुधाकुन्दतमः सूर ! भवारितः ॥ १० ॥
सरसां श्रीजिनसूदितोम्मदनद० ॥ ११ ॥

॥ इति श्रीचतुर्विंशतिजिनस्तवनम् ॥

---

॥ अर्हम् ॥

## चतुर्विंशतिजिनस्तवः ।

यन्नामामिसमापिताखिलविपच्छ्रीसिद्धमन्त्रोपमं
चेतोगोचरचारि चारु रचयत्युच्चैरमीष्टाः श्रियः ।
भूयादद्भुतवैभवा भगवती सा भूयसे श्रेयसे
भो भव्या भवतां भवान्तजननी जैनी चतुर्विंशतिः ॥ १

---

पीता सुवर्णवर्णत्वात् दीधितिर्यस्य । पक्षे शिवः कल्याणकारी, भयातीतः
नवो बलिष्ठो मातुमशक्यो यो मदस्तमस्यतीति, अनिटि प्रत्यये, हतो मोह ए
महावीरो येन । नवीन उदयं गच्छन् यः सूर्यः हरिशब्देन चन्द्रपीतवर्णशुकविष्णु
वाचकत्वे पञ्चवर्णा दीधितिर्यस्य ॥ ८ ॥ श्रिया उपलक्षितः सोमस्तद्वत् प्रभा य
............सौवर्णश्रितः कलङ्कवशेन उरुं महाप्रमोदालयम् । पञ्चाश्रवविरमणेः
रम्य! त्वा त्वाम् । परमशमलक्ष्मीरमणम् । गुरुपक्षे । शोभन सोमप्रभाऽभिः
गुरो! हे सद्धर्म! शेषं प्राग्वत् ॥ ९ ॥ चन्द्रसमयशोनिर्मलज । अथवा सा
उमया कीर्त्या वर्तते यः स निर्मलः, त्वां न नौति । स्तौत्येव । तं रक्ष, कुत इत्या
भवारितः ॥

॥ इति श्रीचतुर्विंशतिजिनस्तवावचूरिः ॥

---

## चतुर्विंशतिजिनस्तवः ।

त्रैलोक्यक्षोभहेतुर्विलसगतिचतुर्भेदसेनासमाथो
निर्स्त्रिंशो दुष्टकर्माष्टकनृपसबलो भैरवोऽसौ भवारिः ।
भव्यास्तस्माद्भयं चेद्विमलगिरिमहादुर्गमाशु श्रयध्वं
यस्मिन् विश्वाधिनाथो निवसति ऋषभः संश्रितानां शरण्यः ॥२॥
क्रुध्यत्पुण्यवपुर्भ्रमद्विमलहक्तृष्णातिरेकोच्छल-
न्मूर्च्छाविप्लुतचेतनः कुगतिभूपीठे लुठन्नाकुलः ।
दुःस्थोऽहं भवरोगयोगविवशो विश्वप्रभो ! त्वत्पुरः
संप्राप्तोऽजित ! विश्ववैद्य सहसा यत्कृत्यनिष्ठो भव ॥ ३ ॥
ध्वस्तज्ञानतटा प्रवाहनिपतन्निःसत्त्वसत्त्वा स्फुर-
त्कुग्राहा पृथुमोहपङ्कपटली भूयिष्ठमज्जज्जना ।
भीमाऽत्यर्थमपारसंसृतिसरित् यस्यामहं मीनवद्
विध्वस्तो बहुकर्मजालपतितः श्रीसंभव ! त्वां विना ॥ ४ ॥
मिथ्याभ्रान्तिमरीचिकाचयचिते क्रोधोष्णवातूलिके
तृष्णानश्यदनन्तजन्तुवितते दुःखौघतापाकुले ।
संसारेऽत्र मरुस्थलेऽतिविषमे भ्रान्त्वा निरीणोऽस्म्यहं
तन्मे विश्वविभो !ऽभिनन्दन ! शिवारामेऽभिरामे नय ॥५॥
मिथ्यात्वप्रबलान्धकारनिचितात् कर्मावलीशृङ्खला-
गाढाबद्धसमस्तजन्तुविसराद्दुष्टैः कषायैर्वृतात् ।
साटोपं विषयस्फुरद्विषधरात् संसारकारागृहा-
न्मुक्तिं वाञ्छसि चेत्तदाशु सुमतिं सेवस्व विश्वेश्वरम् ॥६॥
पात्रैर्यत्र विनिर्गतैर्बहुविधैर्योन्या जवान्यास्ततो
निःक्रान्तैर्निजकायुरङ्कविगमे स्यात् तत्क्षणं शून्यता ।

तस्मिन्मोहनटप्रपञ्चरहिते संसारनाट्येऽबुधा
नृत्यन्तो यदि लज्जिताः श्रयत तत् पद्मप्रभं स्वामिनम् ॥७
कर्माऽम्भःपरिषेकसङ्गविततः सम्मोहमूलो मद-
स्कन्धो विघ्नदलो जरामृतिबृहच्छाखाप्रशाखाकुलः ।
मिथ्यादृक्क्रूरवानरो भवतरुर्दुष्टस्तदुन्मूलने
जीयादुन्मदहस्तिमञ्जसदृशः श्रीमान् सुपार्श्वो जिनः ॥ ८ ।
रागद्वेषविषाणभीषणतरः सम्मूर्च्छदिच्छाकरो
मूर्च्छापुच्छधरश्चतुर्गतिमहाकुक्षिः कषायक्रमः ।
युक्तः कुश्रुतिगर्जितेन भवतां भीत्यै भवेभो भवेद्
भो भव्या जिनसिंहमाशु शरणं तद्यात चन्द्रप्रभम् ॥ ९ ।
किंपाकप्रतिमप्रमादपटले कन्दर्पसर्पाकुले
स्फूर्जद्दुःखदवानले जनिजरादुःखापदैः सङ्कुले ।
निर्विण्णोऽस्मि परिभ्रमन् भववने तन्मे जिनेशात्मनो
निर्बाधे सविधे विधेहि सुविधे ! वासं कृपाया निधे ! ॥१०।
दग्धज्ञानजनाः कषायदहनैर्मिथ्यात्वधूमान्धिताः
स्फारोद्भूततृषान्यथासमुदयज्वालौघसन्तापिताः ।
आः प्राप्स्यन्ति भवे प्रदीपित इवावस्थां न कां कां जडा
लीयन्ते नहि पादपद्मसरसि श्रीशीतलस्वामिनः ॥ ११ ॥
निर्मग्नो विषयाशुचिव्यतिकरे कर्मावलीपङ्किले
रौद्रोपद्रवविद्रुतोऽपि बहुधा तत्रैव कुर्वन् रतिम् ।
गर्तायामिव गर्तशूकरशिशुर्भूयो विगुप्तो भवे
श्रीश्रेयांसविभो ! ऽधुना मम पुनस्त्वत्पादपद्मं गतिः ॥१२॥

अज्ञानध्वान्तपूरा कुमतविलपतज्जन्तुका मोहनिद्रा-
निद्राणालोकलोकाऽन्धितसकलसदृक् शोकघूकातिघोरा ।
प्रेमप्रेतप्रचारा न भवति भयदा तस्य संसाररात्रिः
पूज्यः श्रीवासुपूज्योऽर्क इव समुदितो यस्य चित्तोदयाद्रौ १३

सचैतन्यहृता कदाग्रहकृता सौमुख्यशोभावृता
ज्ञानाऽङ्गानि विधुन्वता मतिमतां हास्यत्वमातन्वता ।
प्रेतेनेव भवेन ये विगलिताश्चेद् योग्यता तत् कुरु
तन्मुक्तान् विमलेश तान् निजवचोमन्त्राक्षरश्रवणात् ॥१४॥

कृत्वा रूपपरम्परां बहुविधां विध्वंसयद्भिः पुन-
र्द्विष्टैः कर्मभिरप्रयोजनतया दुष्टैः कुलालैरिव ।
आरोप्यातिचलाचले भवमहाचक्रेऽहमुच्चैश्चिरं
मृत्स्नावद्भ्रमितोऽस्मि विष्टपपतेऽनन्त ! त्वयोपेक्षितः ॥१५॥

मत्ताः केचन केचन प्रपतिताः केचित् पुनर्मूर्च्छिताः,
केचिन्मूढतमाश्च केचन पुनर्निश्चेतनाः सर्वथा ।
मूढा यत्र विमोहमद्यवशतस्तस्मिन् भवापानके
श्रीधर्माऽऽपतितोऽस्मि बोधय दयावास ! स्वशक्त्या ततः १६

मिथ्यादर्शनकन्दशालिनि रुषाबीजाचिते मूढता-
नालीभाजि कुवासनाजलभृते कर्माष्टपत्रावृते ।
सौरभ्यभ्रमतो भ्रमद्भ्रमरवल्लीनो भवाम्भोरुहे
बद्धस्तत्र दलैर्विमोचय ततः शान्ते ! जगद्भास्कर ! ॥१७॥

कोपाटोपफटोऽप्रवृत्तिरसनः कालुष्यकृष्णाङ्गभृ-
दुर्वारस्मरतीव्ररागगरलोद्गारैर्जगन्मूर्च्छयन् ।

तेषां किं कुरुते भवोरगपतिर्भीष्मोऽपि येषामिदं
चित्ते स्फूर्जति नाम मन्त्रसदृशं श्रीकुन्थुतीर्थेशितुः ॥ १८

अज्ञानोच्छ्रितभस्मकीर्णमभितो लोभस्फुरत्फेरवं
मोहप्रेतमनल्पदुर्गतिचितारौद्रं कषायद्विषम् ।
चेद्वो भीमभवश्मशानमशिवाऽमुक्तं विमोक्तुं मनो
वस्तुं मोक्षपुरे च तज्जिनवरः श्रीमानरः सेव्यताम् ॥१९

संज्ञाद्वारः समन्तादविरतिसरितामाश्रयोऽसातवात-
प्रक्षोभैर्दुर्निरीक्ष्यः परमतविततावर्तविभ्रान्तजन्तुः ।
तृष्णावेलाकरालो घनरसनिचितो नोकषायोग्रनक्रः
क्रूरोऽयं नाथ! कुम्भोद्भव! भवजलधिः शोष्यतां मल्लिदेव! २

ये मातापितृपुत्रबन्धुदयिताद्यास्तत्त्वबुद्ध्या क्षणं
दृष्टास्तानपि कृत्रिमानिव जवाद् दृष्ट्वा विनष्टानहम् ।
व्यामूढोऽस्मि भवेन्द्रजालपतितो जातो विलक्षः पुन-
स्तन्मे दूरमपास्य सुव्रतविभो! तत्त्वप्रकाशं कुरु ॥ २१ ।

कालं भ्रान्तोऽस्म्यनन्तं वृषभनिभभवचन्द्रसूरप्रयोगात्
प्रभ्राम्यत्कालचक्राचलति गतिघटीयन्त्रकेऽस्मिन् घटीवत् ।
सिञ्चन् दुःकर्मनीरैर्जननमृतिवनं भीष्मसंसारकूपे
तस्मान्मे मोहबन्धं नमिजिन! विरलीकृत्य मोक्षं कुरुष्व २१

अश्रान्तं विगलद्विवेकविभवे श्रेयःकणोपद्रवे
हीनप्राणिपरिस्फुरत्पदि भवे प्रोत्सर्पिदीनारवे ।
दुःखौघप्रभवे भवे गतशिवे दुर्भिक्षवद्भैरवे
भ्रान्तो रोर इवाऽस्मि नीरदमिभं नेमे! भवन्तं विना ॥२३॥

पित्रादिप्रतिबन्धबन्धुरगुणाशुभग्रहग्रन्थिकां
स्वेच्छाशुत्त्यभियोगजातनिबिडीभावां सुखेच्छामिषाम् ।
मोहव्याधकदर्थ्यमाननिपतत्प्राण्युत्करामेणवत्
प्राप्तोऽहं भववागुरां जिनपते ! वामेय ! मां मोचय ॥२४॥

तीव्राकृत्यपरंपराप्रहरणे क्लीबीकृतप्राणिके
दुर्ध्यानास्थनि विप्लवासृजि दुराचारप्रहारोत्कटे ।
भूरिप्राभवभीमभावरिपुभिर्भूयोऽभिभूतो भव-
द्वन्द्वेऽहं शरणं गतोऽस्मि भवतः श्रीवीर ! रक्ष प्रभो ! ॥२५॥

इति जिनवराः सम्यग्भक्त्या मया समभिष्टुता
नवनवभवायासव्यासप्रकाशपुरस्सरम् ।
दलितविपदः सन्तु श्रीमत्कवीन्द्रकुलप्रभ-
स्तुतनतपदाः श्रेयोलक्ष्मीनिवाससुखप्रदाः ॥ २६ ॥

॥ इति चतुर्विंशतिजिनस्तवः ॥

## चतुर्विंशतिजिनस्तवः ।

श्रीनाभेयोपमानोन रहित तमसा नन्द दाराऽमनोऽजः
श्रीनाभेयोऽपमानो नरहिततम सानन्ददारामनोज ! ।
न त्वा नातारधीरा सम वृषभजिन ब्रह्मचारित्रसारं
नत्वा नातारधीरा सम वृषभजिन ब्रह्मचारित्रसारम् ॥ १ ॥

---

॥ अवचूरिः ॥

अथाऽस्य किञ्चिद् व्याख्या । हे श्रिया युक्तो नाभिः श्रीनाभिस्तस्यापत्यं श्रीनाभेय ! हे उपमानोन ! उपमानेन ऊनो मुक्तः निरुपमान इत्यर्थः, हे रहित ! केन ? इत्याह–तमसाऽज्ञानेन, हे दाराऽमनो ! दारेषु कलत्रेषु मनो न विषयेऽस्य

---

१ स्तोत्रमिदं दुरवगाहं अवचूरिश्चाबद्धेति यथालब्धं संगृहीतमस्ति.

श्रीकान्तेहाममोहासममजिततमो रङ्कदेनासमान:
श्रीकान्तेहाममोहा सममजिततमोरङ्कदेनासमान: ।
रत्या हीनो विनोदो नयपर विजयाजात नो नाशयामा
रत्याहीनो विनोदो नयपरविजयाजाऽतनो नाशयामा ॥२

---

स, तथा हे अज अजन्म ! हे श्रीन ! श्रिया अर्हल्लक्ष्म्या इनः कान्तः । अपमान अपगताहङ्कार ! हे नरहिततम ! नरेषु प्रकृष्टवत्सला सा लक्ष्मीर नन्दो हर्षस्तौ ददातीति हे सानन्दद ! हेऽमनोज निष्काम ! त्वं नन्द ज त्वं कथंभूतः ? अमेयो मोहाद्यरिभिरिति गम्यम् । अत्रभवतः श्रीनाभेयस्य दा मनस्त्वेऽमनोजत्वममनोजत्वे च तमोराहित्यमिह चापमान ! समत्रापि च सा न्ददत्वमिहापि च नरहिततमत्वमत्रोपमानो न तत्राप्यजत्वमत्र च श्रीन हेतुः । यद्यजमनोजशब्दौ जिनविशेषणे व्याख्यायेते तदैवं व्याख्या–हेऽमेयस्त्व मनोऽमनोजश्चाऽसि, स त्वं हे आनन्दद ! नन्देति व्याख्यार्थः। शेषं तथैव । सान न्ददेत्यत्र 'तदः सेः स्वरे पदार्थे'त्यनेन सेर्लुकि 'समानाना' मित्यनेन सन्धि सिद्धः । अथवा वाक्यान्तरमाह–हेऽतार ! अन्यातार ! हे धीर ! हे असम ! वृषभजिन ! हे समवृषभ ! समा समस्ता वृषेण भा महिमाऽस्येति, ना पुमान् त्वाऽनत्वा ब्रह्म मोथां(?)ननाराऽपि तु त्वायेव, ना कथंभूतः? तारधीरा तारा मनो धीर्बुद्धिस्तस्या इरा स्थानं, त्वां कथंभूतम् ? चारित्रेण सारं प्रशस्तम्, तथा जिना केवलिनो दशमगुणस्थानवर्तिनो वा, ब्रह्म शीलमवध्यादिज्ञानं वा तद्धारिण एषां त्रं रक्षकं बलं यस्य तां नत्वेत्यत्रामात्वत्यनेनाऽमा सह युष्मदस्त्वादेशः पग्वदश(?) दावपि सर्वत्रातारधीरादिसंबोधनविशेषणानि पूर्वापरसंबन्धसंबद्धान्येवावगन्त- व्यानि ॥ १ ॥ हे श्रीकान्त शोभया सुभग ! हेऽसमान ! हे श्रीकान्त ! हेऽ- समान ! श्रीरर्हल्लक्ष्मीः सैव कान्ता तस्यामीहा वाञ्छा यस्य, हे नयपर ! नया नैगमाद्यास्तैः प्रकृष्ट ! हे विजयाजात ! विजयाराज्ञी तस्या जातः पुत्रः । हेऽना- शयाम ! अमो रोगो न विद्येते तौ यस्य, यद्वा न विद्यते शयं मनस ईहा यस्य सः तथा या लक्ष्मीस्तस्यामश्चन्द्रः । लक्ष्मीर्हि चन्द्रपद्मायवितिष्ठति "चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्मं गता चान्द्रमसी न लेखा" इत्युक्तेः, हे नयपरविजय नयं भूतं तदेव परः शत्रुस्तस्य विजयो यस्मात् स, तथा हेऽज ! हेऽतनो हेऽदेह !

राजावामाजमायाहर शमद महानङ्गजन्माजितारे

राजावामाज मायाहर शमदमहा नङ्गजन्माजितारे ।

कल्याणच्छाय तत्त्वादर सुभग जरानाशनः शम्भवेनः

कल्याणच्छायतत्त्वादरसुभगजरानाशनः शम्भवेनः ॥ ३ ॥

सिद्धार्थासंवराङ्गप्रभवभवमदो नाऽरताऽकाऽयितारः

सिद्धार्थाऽऽसंवराङ्गप्रभव भवमदोऽनारताऽकायितारः ।

---

त्वमत्र नास्ति मा मानमस्य, यद्वा महे तु राम इव वा यो मोहश्चतुर्थकर्म तस्यासनं सप्ततिकोटाकोटिरूपां स्थितिं गदेन रोगेणाऽमा सह नोऽस्माकं नाशय अपनयेति । गदेन कीदृशेन? तमोरङ्गदेन तमो दुःखं तस्य रङ्ग उत्सवस्तं ददातीति तथा, यद्वा तमोऽज्ञानं अरंगदेन गदेन सह नाशय, कीदृक् तमः? अममोहस्यासनमवस्थानं, अथाममोहासनं तमो वा कीदृशम्? हेऽमम! ऊहो विचारः, यद्वा अममश्चासावूहश्च ममतारहितविचारस्तस्यासनं क्षेपो यस्मात्तथा त्वं गति, कीदृक्? अतिशयेन अजितोऽजिततमो रागादिरिति शेषः, सह मानेनाऽहङ्कारेण वर्तत इति समानोन तथाऽसमानः, अविनोदोऽक्रीडः, निश्चि—इनः, स्वामी तत्तद्गुणैः सूर्यो वा, विगतो नोदः क्षयो यस्य सः, तथा नास्ति रतिर्धृतिर्यस्यां तया रत्या विषयेण हीनो रहित इति ॥२॥ नास्ति वामा स्त्री यस्येति हे वाम! यद्वा हे वाम अप्रतिकूल!, यद्वा हे वाम मनोज्ञ! हेऽज! हे शमद क्षान्तिद! मं रोगमजति क्षिपतीति हे माज! मायां हरतीति हे मायाहर हेऽदम! दमाभाव अहिंसक!, नास्त्यङ्गजन्मा स्मरोऽस्येति अनङ्ग, जन्मकल्याणकस्य स्वर्णस्येव छायाऽङ्गकान्तिर्यस्येति हे कल्याणच्छाय! हेऽदर निर्भय! सुष्ठुर्भोऽस्येति हे सुभ! गजं राति ददातीति हे गजर! गजान्तश्रीदेत्यर्थः, नास्त्याशा नाशो वाऽस्येति हेऽनाश! हे शम्भो अर्हन्! कल्याणेन मङ्गलेनोपलक्षिता भव्या वा छाया महिमश्रीर्यस्येति हे कल्याणच्छाय! जीवादितत्त्वेषु आदरोऽस्येति हेतत्त्वादर! हेसुभग सौभाग्यवन्, हे शंभव! शं सुखं दत्त्वा विस्तार्य नोऽस्माकमेनः पापं हराऽपनयेति । त्वं कीदृग् । नाताकस्या इत्याह—मया श्रियास्तथा महान् पूजार्ह! हेंऽगजन्मा सुतः, कस्य? जितारेर्नृपस्य, किंविशिष्टस्य आजौ रणे जितारेरभिभूतशत्रोस्तथा जराया वयोहानेर्नाशनः क्षेपकस्तथा इनः प्रभुः ॥ ३ ॥ हे सिद्धार्था राज्ञी संवरो

सद्राज्यानाशयागोऽसमभयमपरः सापदे नो समाधिः
सद्राज्यानाशयागो समभयमपरः सापदेनोऽसमाधिः ॥४
नव्याश्रीमङ्गलाजा नयमव सुमतेतापदं मावराऽकं
नव्या श्रीमङ्गलाजा नयमवसुमते तापदंमावराकम् ।
हन्तारन्ता सदोमाभव नवरविभोऽव्याधिरुर्व्योमनीतेऽ
हन्ता रं ता सदोमा भव नवरविभो व्याधिरुर्व्योमनीते ॥५

---

नृपस्तयोरङ्गप्रभव सुत! हे भवः संसारो मदो गर्वस्ताभ्याम् न! नास्ति विषयसुखं अकं दुःखं च यस्येति हेऽरताक! सिद्धोऽर्थो यस्येति हे सिद्धार्थ! था तार्थेत्यर्थे, हे संवर! अरण, यद्वाऽऽसमन्तात् संवरोऽस्येति हेऽसंवर! सन्न अनतरं राज्यमस्येति हे सद्राज्य! सौराज्यत्वेन अः कृष्णस्तद्वद्गौः सू( रस्येति हेऽगो, आसमन्ताद्गौरस्येति श्रमणावस्थायां न गौरस्येति वा मोक्ष मित्वादायतो नास्ति गौः स्वर्गमस्येति वा, यदुक्तं "मोक्षंगमी यः खलु तन्नुवेऽ गन्तुं कथं सोऽर्हति केवशालाम् ।" इति । असमा भाऽस्येति हेऽसमभ! सद्राज् सतां श्रेण्यः एनः पापं नाशयेति, कीदृगेनः? असमाधि नास्ति स्वास्थ्यमस्मादिर पराभभूतं समं समस्तं भयमस्मादिति समभयम्, सह पदाऽस्ति यस्य सापं ऽसम अप्रमाण!, आधिर्मानसी व्यथाऽस्मात् तदसमाधि, यद्वातं कीदृ नास्ति समः संपूर्णश्रीरस्येति स०, अयि इति कोमलामन्त्रणे, तां लक्ष्मीं राती हे तारो मनोज्ञवाऽनारतं निरन्तरं, अक्षयितां अदेहितां रातीति अनारताव यितारः, नास्त्याशा नाशो वाऽस्येत्यनाशः, नास्ति परो रिपुरस्येत्यपरः, सा श्री स्या ये पदं स्थानं तेषामिनः प्रभुः, यमेषु व्रतेषु परस्तत्परः । यद्वा यमैः प प्रकृष्ट इति तथा, कीदृगेनोऽङ्गप्रभवादङ्गजाद्भवमुत्पन्नम् । अदः प्रत्यक्षम् । अन शयाग इत्यत्र यकारस्य स्वरेवेत्यनेन विकल्पाल्लुगभावः ॥ ४ ॥ हे नव्या स्तव्य श्रीः शोभाऽस्याः सा चाऽसौ मङ्गला चाऽस्याः ज जात! हे सुमते सुमतिजिन नव्येऽन्यदेवेष्वदृष्टे श्रीश्चतुस्त्रिंशदतिशयरूपा मङ्गलं श्रेयश्च यस्येति हे नव्यश हेऽव! नास्ति वसुमती भूरस्येति हेऽवसुमते! सदा सर्वदा हे उमा कीर्ति स्तस्य भवन स्थान हे वरविभो विशिष्टप्रभो! नास्ति नीतिरन्यत्रेति हेऽनीते नास्ति मानवः अपरोऽन्येति हे मानव! मां वराकं क्षोभ्यमव रक्ष प्रागिहीरि

विश्वांशो ! रुच्यपद्माङ्क लसदय सदा देव नव्यामरीणां
　　विश्वांशोऽरुच्य पद्माकुल सदय सदादेव नव्यामरीणाम् ।
तारायानामद त्वाप्त समयमतमारक्त पद्मप्रभोमा-
　　तारायानाम दत्वाप्तसमयमतमा रक्तपद्मप्रभो मा ॥ ६ ॥

---

मा । नास्ति नयो नीतिरस्येत्यनयं तदेव तापदं जन्तुसन्तापकारकं, तथा नास्त्ययो भाग्यमस्येत्यनयमत एवाऽताया अलक्ष्म्याः पदं स्थानम् । त्वं कीदृक् ? हेमया शोभया वर श्रेष्ठ ! अकं दुःखं हन्ता हननशीलोऽरन्ता अरागत्वादक्रीडकः, नास्ति व्याधी रोगोऽस्येत्यव्याधिस्तथाऽहन्ता जन्तुरक्षकः । यद्वा हन्तेस्त्यार्थेऽरमत्यर्थं शीघ्रं या, तासदः क्षयदः, कस्य ? अनीतेरन्यायस्य, कस्याम् ? उर्व्यां गुर्व्यां भुवि, अत एव नवस्तरुणो यो रविः सूर्यस्तद्वद्भा प्रभाऽस्येति नव०, विगताऽऽधिरस्येति व्याधिः तापदं चेत्यत्राऽमा अ (?) मोत्यनेनाऽमा सहाऽस्यदो मादेशः । ननु अकं हन्तेत्यत्र कर्मणिषष्ठी प्राप्नोति कथं द्वितीया ? मैवम्, उदुदन्तेत्यनेन षष्ठीनिषेधादिति ॥ ५ ॥ हे विश्वांशो भुवनसूर्य ! रुच्यं मनोज्ञं पद्ममङ्के लाञ्छनेऽस्येति हे रुच्य० ! लसदयो भाग्यमस्येति हे ल० ! सदा शश्वत् हे देव ! हे नव्यानां भव्यानाममरीणां सुन्दरीणां विश्वाः संपूर्णा अंशवः कान्तयोऽस्येति हे वि० ! हे कल मनोज्ञ ! हे सदय दयापर ! सत् शोभन आदिरुत्पत्तिहेतुरस्येति हे स० ! हे तार श्रीद ! नास्ति यानं वाहनमस्येति हेऽयान ! नास्ति मदोऽस्येति हेऽमद ! तुः पुनरर्थेऽवधारणे वा, हे आप्त ! वीतराग ! हे समाः सम्पूर्णा यमतमाः प्रकृष्टव्रतानि तैरत्यारक्त आसक्त ! हे पद्मप्रभ ! हे उमया कीर्त्या तारा मनोज्ञा आसमन्तात् या श्रीरस्येति हे आय ! यद्वा उमया तारया लाभोऽस्येति उमैव तारं रूप्यं तस्याऽऽयोऽस्येति हे उमा० ! नास्त्यामोऽस्येति हेऽनाम ! हे रुच्य अभिलषणीय ! नव्यामपूर्वामरीणामहिनां पद्मां लक्ष्मीं मा मां दत्वा वितीर्य अव रक्षेति कथमित्याह–आप्तो लब्धसमयागमो यत्राऽस्त्येत्येवं यथा स्यात्, यद्वा मां कीदृशम् ! आप्तः समयो येन तम्, त्वं कीदृग् ? नास्ति तमोऽज्ञानमस्येत्यतमाः, तथा रक्तोऽरुणो यः पद्ममणिस्तद्वद्भाऽस्येति रक्तपद्मप्रभ ! 'अभ्वादेरत्वसः सौ' इत्यनेन दीर्घत्वे सेरुत्वे रोरेऽत्रुमिति रोर्लुकि अतमा रक्तेति ॥ ६ ॥

सातं का श्रीसुपार्श्वोऽर ततम जनताऽमानस स्वासमा ना

सातङ्का श्रीसुपार्श्वोरततम ज नता मान सत्त्वासमाना ।

श्रीपृथ्वीजं तुरक्षाकरणकुशल तादावदाताज्ञ मोह-

श्रीपृथ्वीजन्तुरक्षाकरणकुशलतादाव दाता ज्ञ! मोह ॥

स श्रीचन्द्रप्रभेशामर ! गुरुसुमनो मह्य यस्यारताशं

सश्रीचन्द्रप्रभेशामरगुरुसुमनोमह्य यस्यारताशम् ।

---

हे श्रीसुपार्श्वजिन ! अज ! मनोव्यापाराभावान्नास्ति मानसमस्येति हेऽमान। श्रिया शोभया शोभनौ पार्श्वौ यस्येति हे श्री० ! अतिशयेन नास्ति रतं सुरतमस्ये हेऽरत तम ! जनता जनाली त्वां नता प्रणता सती सातं सौख्यं का नाऽ न प्रापाऽपितु सर्वाऽपि प्रापैवेत्यर्थः । सातं कीदृग् ? ततं विपुलं । जन कीदृशी ? असमा गुणैरन्यजनाऽसदृशी, असातङ्काऽसरोगा अमानं अप्रम सत्त्वं बलमस्याः सा अमा० । सह मानेन पूजयाऽस्ति या सा स०, यद्वा हेऽमान निरहङ्कार! कीदृग् जनता? सत्त्वेन बलेन साहसेन वाऽसमानाऽसदृशी, त्वां कीदृश श्रीपृथ्वी माता तज्जातम् । अथ उक्त्यन्तरमाह–अकं दुःखं रणं युद्धं, यद्वा नास्ति सुखं यत्रैवंविधं यद्रणं तदेव कर्कशत्वात् कुशलता दर्भाङ्कुरास्तां द्यति छिनत्तीति हेऽक ! अवदाता विशुद्धाऽऽज्ञाऽस्येति हेऽव० ! जन्तूनां प्राणिनां रक्षाकर त्राणविधाने कुशलतां दक्षत्वं ददातीति हे जन्तु० ! यद्वा हे जन्तुरक्षाकरणकुश ल ! तां लक्ष्मीं ददातीति हे ताद ! मा मामव प्रीणीहि, तुः पुनः, रक्ष पाल त्यर्थः । त्वं कीदृक् ? ऊहश्रीर्विचाररमा तस्याः पृथ्वी स्थानमित्यर्थः । तथा दात खलोऽज्ञानां जडानां मोहो जाड्यं येन स दा० । यद्वैवं व्याख्यातुरुक्त्यन्तरसूच नार्थो, हेऽकरणकुशलतादाव वन्याग्ने ! हे ज्ञ विद्वन् ! हेऽवदाताज्ञ मा मां रक्ष त्वं कीदृग् ? दाता त्यागवान् मया श्रियोपलक्षित ऊहोऽस्य स मोहः ॥ ७ । हे श्रीचन्द्रप्रभ ! हे ईश प्रभो ! न म्रियते इति हेऽमर ! गुरु–अतुच्छं सु मनोऽस्येति हे गुरु० ! हे सहश्रिया लक्ष्म्या वर्तन्ते ये तेषां चन्द्रप्रभेशाम रगुरुसुमनसां शशिसूर्येसुरबृहस्पतिविदुषां मह्य पूज्य ! हे सुसार सुप्रशस्य यद्वा शोभनां सां रमां रातीति हे सु० ! नास्ति तनुभवोऽङ्गजोऽस्येति हेऽत० ! हे दा दानं तत्र रत तत्पर ! हे सुसार ! सुसु बलं तस्य, हेऽतनुभवन ! विशाल-

भास्वचित्तं सुसारातनु भवन मतोदार तत्त्वासमानं
भास्वचित्तं सुसारा तनु भव नमतो दारतत्त्वा समानम् ॥८॥
माया रामासुतं कोकलकल सुविधेऽनारतं धीर नत्वाऽ-
माया रामासु तं को कलकलसुविधे नाऽरतं धीर न त्वा ।
शम्भोऽगेहाप हीनं गुरुरुचिरतनुं भासमानं श्रियोर्व्या
शं भोगेहापहीनं गुरु रुचिरतनुं भासमानं श्रियोर्व्याम् ॥९॥

---

वेश्म ! हे मतोदार शासनेनाद्भुत ! यस्य जनस्य त्वा त्वां नमतो वन्दमानस्य चित्तं मनो भास्वत् प्रमुदितत्वात् कश्मलव्यपगमत्वात् कान्तिमद् बभूव । बभूवेति क्रियाऽध्याहार्या । स पुमान् वा श्रीशं सुखं, यद्वा तया श्रिया शं शर्माऽऽऽर प्राप । कीदृग् ? मही स्थानं । कस्य ? अयस्य भाग्यस्य, त्वां किंभूतम् ? नास्ति रताशा विषयेच्छा यस्य तं, अरप असमानं साहङ्कारं चित्तो भावश्चिद्रूपा वा ता श्रीश्चित्ता भास्वद्भश्चित्ताऽस्य तं भा० ! तवैरसमानसमदृशमिति ॥ ८ ॥ हे मायाः श्रियाः, कोर्भूमेः कला मनोज्ञा कला यस्येति हे क० ! हे सुविधे सुविधिजिन ! हे शम्भो अर्हन् ! धियं बुद्धिं रातीति हे धीर ! हेऽगेह ! अनगारत्वात् त्वा त्वां नमस्कृत्य ना पुमान् कलं सुखं नाऽऽप न लेभे ? अपितु सर्वोऽप्यापैवेत्यर्थः । किंभूतो ना ? गृणाति तत्त्वार्थमिति गुरुस्तत्र रुचिर्यस्येति हे गु० ! गुरौ रुचिर्हि जिनधर्मरुचेर्निबन्धनं गुरोस्तत्रैव प्रवर्तकत्वात्, त्वां कीदृशम् ? रामा नाम राज्ञी तस्याः सुतं पुत्रम् । तथा आ समन्तात् शोभना ता श्रीरस्येति तं । असुतं अरतं अक्रीडं, हि निश्चये, इनं स्वामिनं श्रिया शोभयाऽतनुं प्रौढम्, भाभिर्महोभिरसमानमसदृशम् । भोगः स्त्रीस्रक्चन्दनादिः तस्येहा वाञ्छा तयापहीनं रहितम् । गुरुरत्यन्तं रुचिरा कान्ता तनुर्देहोऽस्य तं गुरु० । उर्व्यां गुर्व्यां०, उर्व्यां भुवि श्रिया समवसरणादिरूपया भासमानं, अस्मिन् वृत्ते हे मा–को । त्वां कीदृशम् ? असुतं श्रियाऽतनुम्, श्रिया भासमानमित्यत्र प्रायो भिन्नार्थाभावात् पौनरुक्त्याः शङ्का स्यात् तन्निरासार्थं मासुतम् । अत्र स्थाने रामाभवमिति पाठो युक्तस्तथा चैवं व्याख्या–रामानाम राज्ञी तत्र भवति यस्तं रामाभवं, तथा नास्ति भवः संसारोऽस्येति अभवम् । शेषं प्राग्वत् । अथवा पृथगर्थकल्पनया पौनरुक्त्यं परिहार्यम् । यद्वा एवं व्याख्या–अमाया मायारहिता या रामानाम राज्ञी तस्याः सुतं पुत्रम् ।

शुद्धो नन्दाज ! विश्वाहित ! रहिततमः शीतलामन्दसारः
शुद्धो नन्दाऽज ! विश्वाहितरहिततमः शीतलामन्दसारः
सूद्युत्ताराय शोभामय नरकमला भोगदातापरागः
सूद्युत्ताराय्यशोभामयनरकमला भोगदाताऽपरागः ॥ १०
श्रेयःश्रेयांस मारापद घनगदहं सर्वदाकान्तमाप्त
श्रेयः श्रेयांसमारापदघनगदहं सर्वदाकान्तमाप्त ! ।

---

जमाया । कासु ? रामासु स्त्रीषु, त्वां कीदृशम् ? जगत्प्रतीतम्, शेषं प्राग्वत् जन्मायारामेत्यत्राऽसामर्थ्याद्दृद्धस्य राज्ञः पुरुष इत्यादिवत् समासो न स्या सामर्थ्यात् समासे च रामास्वित्यनेन सापेक्षत्वं न स्यात् । मैवम् । देवदत्त गुरुकुलमित्यादिवदत्र वृत्तेऽपि सापेक्षत्वाद्धानेः स्यादेव समासः, यदुक्तम्, "सा भिवशब्दः सापेक्षो नित्यं सर्वः प्रवर्तते । स्वार्थवत्सा व्यपेक्षास्य वृत्तावपि न हीयते इति ॥ ९ ॥ हे नन्दाया नाम राज्ञाः जायते इति हे नन्दाज ! विश्वे सर्वे ये हिता रागाद्यरयस्तैरतिशयेन रहित, हे विश्वायाः पृथ्व्याः हित !(?) रति स्वकं तमो येनेति हेऽर० ! यद्वा विश्वाया हितं रातीति हे विश्वाहितर ! त्वं क हक् ? ततमः तता विस्तीर्णा मा श्रीरस्य स तथा ! हे शीतल सर्वथा कोपाद्य वाच्छीतलस्वभाव ! हेऽमन्द नीरोग ! हेऽज शीतलजिन ! सुद्यु उत् प्राबल्ये द्युत् दीप्तिर्यासां ताश्च तारा नक्षत्राणि च तद्वद् यशसः कीर्तेर्भा प्रभाऽस्येति सू० ! हे सूद्युत् प्रोल्लासत्तारो मनोज्ञोऽयो भाग्यं यस्येति हे सू० ! हे शोभ मय सशोभ ! नास्ति परोऽन्योऽपि कश्चिदागोऽपराधोऽस्येति हेऽप० ! शुद्धः के कस्त्वमेवेत्यर्थः, नन्द जयेति, त्वं कीदृक् ? अमन्दमजिह्मं सारं बलं यस्य अमं० । शुद्धः क्षालितः कर्ममलः, सां रातीति सारः प्रधानो वा, आमया रोग नरकं दुर्गतिर्मलं पापं तेषामाभोगो विस्तारोऽस्य दातीति दाता च्छेत्ता, अपार समो येन स तथा, नराणां पुंसां कमला श्रीभोगाः सूकन्दनादि तयोर्वाता दाय ॥ १० ॥ श्रेयश्चासौ श्रेयांसश्चेत्युभयनामप्रसिद्धत्वात् हे श्रेयःश्रेयांस ! यदु 'ऋषभो वृषभः श्रेयान् श्रेयांस' इति, यद्वा श्रेयान् प्रशस्यतमः स चाऽसौ श्रेय स्चेति हे श्रे० ! हे मारापद स्मरास्थान ! सर्वं ददातीति हे सर्वद ! आप्त विश्वहित ! मामां हन्तीति हे मायह ! हे सत्यासम ककाऽप्रतिम

सौम्यो मायाहृसत्वा समदमपरमाज्ञ स्तु वेगेन धीरं
सौम्योमायाहस त्वा समदमपरमाः ज्ञ स्तुवे गेन धीरम् ॥११॥
साराव्याधीरसेनासमरदसमताभास्वरश्रीजयाऽज
साराव्या धीरसेनासमरद समताभास्वर श्रीजयाज ।
सद्मानो वासुपूज्याऽमदनरम महाचित्ततोहासमाया
सद्मा नो वा सुपूज्यामद नरममहा चित्ततोऽहास मा या १२

इन्द्रियदमः कार्य इति दमेन परमा प्रकृष्टाऽऽज्ञाऽस्येति हे दम० ! सौम्या प्रसन्ना उमा कीर्तिस्तस्याऽऽयो लाभोऽस्य, यद्वा सौम्यावुमायौ कीर्तिशुभदैवे यस्येति हे सौम्यो० ! न हसति प्रमादाभावात् इति हेऽहस ! अपास्ता रमा राज्यादिश्रीर्येनेति हेऽपरम ! सौम्यः कषायरोधादरौद्रः सन्नहं त्वा त्वां स्तुवे स्तौमि । केनेत्याह–गेन गीतेन 'गं गीते' इति वचनात्, तुः पुनः वेगेन त्वरया, यद्वा कीदृशा वेगेन ! न गच्छति इत्यगेन अविनश्वरेणेत्यर्थः । कीदृशोऽहम् ? अज्ञः मूर्खः, भवद्गुणस्तुतौ वाक्पतेरप्यशक्तत्वात् कोऽहमित्यर्थः, त्वां किंभूतम् ? घनो निबिडो रोगस्तं हन्ति यस्तं, नास्ति कान्ता स्त्रीरस्य, अकस्य दुःखस्याऽन्तो यस्येति वाऽन्तं अकान्तं, आप्तं प्राप्तं श्रेयसो मोक्षस्य श्रेयः सर्वोपद्रवाभावरूपं कल्याणं येन तं आप्तं, आरमरिजातं, आपद्विपदघं पापं तान्येव नगा वृक्षास्तान् दहति भस्मीकरोतीत्यचि क्विपि वाऽम् विभक्त्याऽऽरापादघनगदहं सर्वदा सदान्तं मनोज्ञं, नास्ति कस्य सुखस्याऽन्तोऽस्येति वाऽकान्तम्, धीर्बुद्धिस्तां राति यस्तं तथा धीरं परीषहाक्षोभ्यमिति ॥११॥ हे सार नीतिसार ! हे रसायाः पृथ्व्या इन पते ! असमा निरुपमा रदा दन्ता असमा विषमा ता श्रीर्भा कान्तिः, स्वरो ध्वनिः, श्रीः शोभा, जयोऽक्षदमो यस्येति हेऽसम ! सारा प्रधाना धीरा रणे स्थिरा एवा सेना चमूस्तया समरः संग्रामस्तं द्यति विच्छिनत्तीति हे धी० ! हे समताभास्वर सौम्योज्ज्वलश्रियोपलक्षित ! जयानाम राज्ञी तस्या जायत इति हे श्री० ! हे वासुपूज्यजिन ! नास्ति मदनरमा कामश्रीरस्मिन्निति हेऽमदनरम ! ततो विस्तीर्णो विचारोऽस्येति हे त० ! न सह माययाऽस्तीति हेऽस० ! हे सुपूज्य सुकृमत्व ! हे नास्ति मदोऽस्येति अमद ! हे नास्ति हासं यस्येति अहास ! त्वं नोऽस्मान् अव्याः पायाः, वा पुनर्नोऽस्माकं चित्ततो मानसान्मा याः मा गाश्चि-

सोमा श्यामा भवस्याऽनिधुवन सुधृतेऽनाश भावारसूर
सोमाऽश्यामाऽभव स्याऽनिधुवन सुधृतेऽनाश भावार सूर
व्यापद्विश्वान्यमाना शिव विमलत मोहा समज्ञानते न-
व्यापद्विश्वान्यमानाशिव विमलतमोहासमज्ञान तेन ॥१३।
केऽनन्तज्ञानरुच्याऽऽशु भवति सुगते तेन तारागदाराः
केऽनन्त ज्ञान रुच्या शुभवति सुगतेतेनता रागदाराः ।

---

तमेवाधितिष्ठेत्यर्थः । त्वं कीदृशः ? नास्ति व्याधी रोगोऽस्य स तथा । अत्र सो रुत्वं रेफपरत्वाद् रोरे लुगित्यनेनाऽस्य लुक्, प्राग्दीर्घत्वम् चेत्येवमग्रेऽपि ज्ञेयम्, तथ न जायत इत्यजः, सच्छोभनं मानं प्रमाणं यस्य सः, तथा महा महत्तरं चिज् ज्ञा यस्य सः, नास्ति सद्म यस्य सः, तथा नराणां पुंसां प्रतिवस्तु ममेत्यभिलाषं हन्ती ति क्विपि सौ इन्हन्नित्यनेन दीर्घत्वे नरममहा ॥ १२ ॥ हे नास्ति निधुव मैथुनं यस्येत्यनिधु० ! सुष्ठु धृतिस्तुष्टिरस्येति हे सुधृते ! नास्त्याशा वाञ्छाऽस्येति हेऽनाश ! हे भावारेण प्रभापुञ्जेन सूर सूर्य ! हेऽनिधुवन निष्प्रकम्प ! सुष्ठु धृति र्मुक्तिलक्षणं सुखमस्येति हे सु० ! अत एव नास्ति नाशः क्षयोऽस्येति, हे भाव रोऽभ्यन्तरारिजतश्च (?) यस्येति हेऽभा० ! सुष्ठु उरो हृदयमस्येति हे सूर हे शिव निरुपद्रव ! हे विमल जिन ! समे सर्वे ज्ञा विद्वांसस्तेषां कर्तृभ तानां नतिः प्रणामोऽस्येति, हे समाऽविगता आपद् यस्येति हे व्यापद् ! विद्यते मानाशिवे गर्वामङ्गले यस्येति, हेऽमा विमलतमोऽतिनिर्मल ऊहोऽस्येति हे वि० ! असमं ज्ञानमस्येति हेऽस० ! ते तव सा प्रसिद्धा उमा कीर्तिरम नाऽप्रमाणा सती विश्वानि संपूर्णानि विश्वानि जगन्ति न व्यापदपि तु व्याप्नै त्यर्थः । कीदृश्युमा ? सोमश्चन्द्रस्तद्वदश्यामा श्वेताऽतएव तमोऽन्धकारं दुःखं व हन्ति या सा तमोहा, तव किंभूतस्य ? नास्ति भवः संसारोऽस्य तस्याऽभवस्य तथा श्यामा नाम राज्ञी तस्या भवति यस्तस्य श्या० ! तमोऽज्ञानं हन्तीति तमोह ! इति । जिनामन्त्रणे तु आसमन्तात् समस्तज्ञानां सर्वविदुषां मा नति र्यस्येति हेऽस० ! इति कार्यम् ॥ १३ ॥ हेऽनन्तं निःसीमं यज्ज्ञानं तेन रुच्य मान मनोज्ञ ! सुष्ठु गतिर्यस्येति हे सुगते ! हे ता श्रीस्तस्या इन स्वामिन् हे तार प्रधान ! हेऽनन्तजिन ! सुष्ठु अतिशयेन गता नष्टा ईतयोऽस्मादि

सातङ्कामन्ददानेऽरत परमदमासत्तमाः कामदेहा-
ऽसातङ्कामन्द! दाने रत पर मदमासत्तमाः कामदेहा ॥१४॥
जाताऽपारप्रभावा दरमरण सदा सुव्रताप्ताघनाशो
जातापार प्रभावादरमरणसदा सुव्रताप्ताघनाशो ।
सज्जाया धामभानोऽरतनुतरम ते धर्म रक्ताधरेश
सज्जाया धाम भानोरतनुतरमते धर्मरक्ता धरेश ॥ १५ ॥

---

हे सुमते० ! न विद्यते रतं विषयः, परो रिपुर्मदो गर्वः, यद्वा पर इव दुःखदत्वाद्रिपुरिव परः प्रकृष्टो वा मदोऽस्येति हेऽर० ! हे कामद इष्टद । इह जगति, हेऽसातङ्क असभय ! हेऽमन्द अजिह्म ! दानविषये, हे रत तत्पर । शुभवति श्रेयस्वति भवति त्वयि रुच्या वासनया नताः प्रणताः सन्तः के ज्ञा विद्वांसो रागं विषयाभिलाषं दारयन्ति घ्नन्तीति रागदारा न स्युरपि तु नीरागपदं सिद्धिलक्षणं प्राप्नुयुरेवेत्यर्थः । ज्ञाः कीदृशाः ? मासत्तमाः श्रीप्रकृष्टास्तथा परमः प्रकृष्टो क्षमो(?)ऽक्षजयो येषां ते पर०, सत्तमाः शक्रादीनां पूज्याः । भवति किंभूते ? न विद्यन्ते गदो रोगोऽरोऽरिजातोऽकं दुःखं यस्येति तस्मिन् अग० तथा सातं सौख्यं कामं अत्यर्थं ददाने वितरति, कामवत् स्मरवद्देहोऽङ्गं येषां ते का० ॥ १४ ॥ न विद्येते दरमरणे भयमृती यस्येति यद्वा नास्ति, दरो यत्र ईदृशं, सकृन्मरणं यस्येति हेऽद० ! आप्यते उपायोऽर्थोऽस्मात्, यद्वाऽऽप्ती रागादिदोषक्षितिः साऽस्त्यस्येत्यर्शआदित्वादति० हेऽतापार ! हेऽरण असंग्राम ! हे धामभिस्तेजोभिर्भानो सूर्य ! हेऽतप्त ! हे जन्तोस्तापहेतुत्वात्तापः स चाऽसौ आरोऽरिसमूहश्च, यद्वा तापः कषायादिः स एव चारः स नास्ति यस्येति, यद्वा नास्ति तायाः ज्ञानश्रियाः परोऽस्य, नास्ति ता गार्हस्थ्यश्रीरस्येति, अपगतः आरोऽस्येति वा हेऽतापार ! अरता योगिनस्तैर्नुता स्तुता रमा ज्ञानादिश्रीरस्येति हेऽर० ! हे धर्मनाथ ! रक्तौ प्रवालाभौ अधरावोष्ठपल्लवौ यस्येति हेऽर० हे ईश प्रभो ! भानोर्नाम धारयामीष्टे इति क्विपि धरेशः पृथ्वीपतेः सज्जाया कलत्रं सुव्रतानाम्नी त्वदम्बा ते तवाऽतनुतरमतेऽतिप्रौढशासने धर्मरक्ता जाता जज्ञे । भगवति धर्मनाथे गर्भावतीर्णे तदम्बा किल धर्मदोहदा जातेत्यैतिह्यम्, सुव्रता कीदृशी ? अपारोऽनन्तः

सन्मानासाङ्गजन्माऽदरमलम चिरादार साराङ्कताराऽ-
सन्माना साङ्गजन्मादरमलमचिरा दारसाराङ्कतारा ।
प्रायादुर्व्यामनाशाच्छमपर भवतो विश्वसेनस्य राज-
प्रायादुर्व्यामनाशाच्छमपरभवतो विश्वसेनस्य राज ॥ १६ ॥

---

प्रभावोऽस्याः साऽपा० । सदा सर्वदा सुष्ठु व्रतं यस्याः सा सु०, प्रभौ भर्तरि आदरं भक्तिविशेषं आप्ता प्राप्ता सादराऽभूदित्यर्थः, प्रभौ किंभूते ? अघनाम्नो काऽऽशा वाञ्छाऽस्य वीतरागजनकत्वादिति तत्राऽघनाशे पापात्यये सञ्जातस्तघ- ताया (?) श्रीरस्या धाम सद्म ॥ १५ ॥ हे गतार नष्टारिजात ! असन्न- विद्यमानो मानोऽहङ्कारोऽस्येति हे स० ! न सहाऽङ्गजन्मना स्मरेणाऽस्तीति हेऽसां० ! नास्ति दरो भयं मलं पापमनयोर्मा श्रीरस्येति हेऽद० ! शमेन पर प्रकृष्टो भवतस्त्वत्तोऽङ्गजन्माऽमुत्राग् अरं शीघ्रं अलमत्यर्थं, अचिरा नाम राज्ञी चिरात् प्राग् त्वादृशपुत्राभावाद्बहोः कालात् शं सुखमार प्राप । अचिरा कीदृशी ? सती शोभना मा श्रीः प्रमाणं वा यस्या ईदृशी नासा नासिकाऽस्याः सा सन्मा० नेत्रश्रिया सारङ्गो मृगस्तद्वत्तारा मनोज्ञा, यद्वा सारङ्गवद् दक्ताराऽस्याः सा सारङ्गमृगाक्षी इत्यर्थः । अतएव दारेषु कलत्रेषु सारं प्रधानं, कस्येत्याह- विश्वा सम्पूर्णा सेना सैन्यमस्य तस्य विश्वसेनस्य नाम राज्ञः पृथ्वीपतेः भवतः, किंभूतात् ? प्रकृष्ट आयो लाभोऽयो भाग्यं वाऽस्य तस्मात् प्रा०, नास्त्याशा वाञ्छाऽस्य तस्मात् अना०, तथा उर्व्यां पृथुलायामुर्व्यां भुवि राजप्राया- चन्द्रतुल्यात्, नास्ति नाशः क्षयोऽस्य तस्मादना०, नास्ति परः शत्रुर्भवः संसारोऽस्य तस्मान्नसि अय०, यद्वैवं व्याख्याऽचिरात्स्वजनानन्तरितमेवाऽऽसम- न्ताद्प्रसाया रञ्जतां उत्सवश्रियं रातीति हेऽवि० । अः सम्बोधने, आः स्मरणे वा, तव गुणान् स्मरन्ती अचिरा नाम्नी त्वदम्बा शं प्रायादगच्छत्, कीदृशं शम् ? अङ्गजन्मा स्मरस्तत्र य आदरः स एव मलं पापं न सहते नास्ति यत्तद् असां० । अचिरा किंभूता ? जिनमातृत्वेन गतारा नष्टारिजाता, सद्भ्यः सज्जनेभ्यो मानः पूजाऽस्याः सा सन्मानेति, शेषं प्रागवत् । श्रीतीर्थ- राजपदपद्मसेवेत्यत्र तदङ्गजन्मादित्यत्र क्विप् चाऽवगन्तव्य इति ॥ १६ ॥

श्रीमत्यायासमानामरहितऽसदया सत्यसाराज हर्ष-
श्रीमत्यायासमानाऽमर हित सदया सत्यसारा जहर्ष ।
देवी वामा सुरुच्या शिवपदजनने तेऽरमातारनव्या
देवीवामासुरुच्या शिवपद जननेते रमातार नव्या ॥ १७ ॥
श्रीश्रीजातापनाशं नयद जगदरं तेन कामं समायं
श्रीश्रीजातापनाशं नयदज गदरं तेनकामं समायम् ।
श्रेयो नाऽऽपत् प्रजापं जयदमद सदादे हि नामाप्तरूप
श्रेयो नापत् प्रजापं जयदमद सदा देहिनामाप्तरूप ॥ १८ ॥

---

हे आयासमानामरहित प्रयासगर्वरोगमुक्त ! हे सत्यसार सूनृतप्रधान ! हेऽज ! हेऽऽयोगुणान्निरूपो लाभस्तेन आसमन्तादया श्रीस्तया चाऽऽसमान ! हेऽमरणां सुराणां हितोपदेशकत्वाद्धित वत्सल ! यद्वा न म्रियते इति हेऽमर ! हे हित ! शिवपदस्य मोक्षपदस्य जननमुत्पत्तिरस्येति हे शिव० ! इतो गतः ईरः कम्पोऽस्येति हे इ० ! हेऽरजिन ! हे शिवपद मङ्गलासद ! ते तव जनने जन्मनि देवी नाम माता जहर्षाऽऽननन्द, हेऽरम हेऽक्रीड ! हेऽतार अन्यातार्य ! यद्वा हे रमातार श्रीमनोज्ञ ! अथवा देवी किंविशिष्टा ? रमा श्रीस्तया तारनव्या मनोज्ञतरुणी अत एव श्रीमती शोभाभागिनी तथा सदया दयान्विता हर्षश्रीः प्रमोदलक्ष्मीः का ? सज्जयो भाग्यं यस्याः सा सदया सती सुशीला न सहारेणाऽरिजा ते नास्ति या साऽसारा, तथा रुच्या कान्त्याऽमासु अप्रमाणासु वामासु स्त्रीषु देवीव देवाङ्गनातुल्या इत्यर्थः । अत एव नव्या शक्राद्यैः स्तुत्येति ॥ १७ ॥ हे श्रीप्रधाना या श्रीराज्ञी तस्या जात पुत्र ! असाधारणविशेषणत्वात् हे कुन्थुजिनेत्यर्थः । हे नयद नीतिप्रद ! हे ताऽर्हल्लक्ष्मीस्तस्या इन पते ! हेऽज ! हेऽगद अगर्व ! जयदमौ ददातीति हे जयदमद ! आप्तं प्राप्तं रूपं देहसंस्थानादि येन हे आप्तरूप ! सन् प्रधान आदिरुपस्यादिरूपोऽस्येति हे सदादे प्रशस्य ! आप्त आप्तरूप ! "प्रशस्यरूपमिति हे आप्तरूपं हि निश्चितं" ते तव नाम प्रकृष्टो जापः प्रजापस्तं नयत् प्रापयज्जगद्विश्वं श्रेयो मोक्षं न नापदपितु प्रापैवेत्यर्थः । श्रेयः

श्रीमल्लेखेनमह्याऽपदघनरुचिमाराऽज मानासमाऽरं

श्रीमल्ले ! खेन मह्यामद घनरुचिमा राजमानासमारम् ।

नाकंपापेन न त्वाऽजितम हस मताकारसौम्यं सुदृष्टिं

ना कं पापेन नत्वाऽऽजितमह समताकारसौम्यं सुदृष्टिम् १९

---

किंभूतम् ? अपनाशं अपगतक्षयं, नाम कीदृशम् ? काममत्यर्थं कामं स्मरं समायं मायासहितं जयदमिभवत् । कामं कीदृशम् ? श्रीः शोभा श्रीर्लक्ष्मीस्तयोर्जातं समूहमपनाशयति यस्तं श्री० । अरं शीघ्रं गदरं रोगहं नाम, पुनः किंभूतम् ? श्रेयः शुभं, प्रजां जनतां पातीति प्रजापं, मा श्रीरयो भाग्यं सह ताभ्यां अस्तीति समायम्, यद्वा जगत् कीदृक् ? माऽयाभ्यां श्रीभाग्याभ्यां सहाऽस्ति, यद्वा समः सम्पूर्णोऽयो भाग्यं यस्य तत्समायम्, अत एव नास्त्यापदस्येत्यनापत् आप्तरूपं कामं वा, केषां ? जन्तूनां देहिनामिति ॥ १८ ॥ हे श्रीमद्भिः सश्रीकैर्लेखानां देवानामिनैरिन्द्रैर्मह्य पूज्य ! हेऽसदष्टमदस्थानमुक्त ! घनो मेघस्तद्वद्या रुचिमा कान्तिश्रीस्तया राजते इति हे घ० ! हे श्रीमल्ले श्रीमल्लिजिन ! मह्याः पृथ्व्या आमो रोगस्तं दाति लुनातीति क्वचिद्हे मह्यामद मां श्रियं रातीति हे मार ! हेऽज ! हे मानेन पूजयाऽसम निरुपम ! हेऽहस हास्यमुक्त ! हेऽकम्प धीर ! इन स्वामिन् ! घना निबिडा रुचिर्वासना यत्रैवं त्वा त्वां नत्वाऽरं शीघ्रमत्यर्थं वा, ना पुमान् कं सुखं न नाप अपितु प्रापैवेति । त्वां किंभूतं ? न सह मारेण स्मरेणाऽस्ति यस्तं । अस० तथा पापेन कुमार्गगमनाद्दुष्टेन स्वेन यवो निष्पन्न इतिवदत्राऽपि जातावेकवचनादिन्द्रियजात्याऽजितं अनभिभूतं, सर्वजनलोभनसेचनकरूपतया मतः सम्मतः आकारः संस्थानादिविशेषस्तेन सौम्यं सोमोपमं, सुष्ठु दृष्टी नयने यस्य तम् सु० । 'दुर्भिक्षमारीतिनिजान्यचक्रभीवैरामयावृष्ट्यतिवृष्टियष्टकं(?) । शते च साग्रे जिन यो जनानां तव प्रभावान्न भवे'दिति वचनादाजितमं स्वपरचक्रोद्भवं प्रकृष्टं रणं हन्ति अपाकरोति यस्तं आजि०, समतां साम्यं कारयतीति समताकाराः केवलिनस्तेषु सौम्यं जिनेन्द्रत्वान्मनोज्ञं, सुष्ठु दृष्टिः शासनमस्य तं सु० इति ॥ १९ ॥

श्रेयोऽनेनोऽभवाना रदरमघवतोऽनाशयामाऽसम ह्यः
श्रेयोनेनो भवानाऽरदर मघवतो नाशयामास मह्यः ।
श्रीपद्माभूरतापाऽयमरण हततं सुव्रताऽकोऽपमान-
श्रीपद्माभू रतापायमरणहऽततं सुव्रताऽकोपमान ॥ २० ॥
सूरो ! मायाहृदोजोविजयभवन मे भव्यकल्याणदेह
सूरो मा या हृदोऽजो विजयभव नमे ! भव्यकल्याणदेह ।
नारेडेऽनोदरागानल सततमहं सारधीराम हत्वा
नारेडे नोदरागानलस ततमहं सार धीरामहत्वा ॥ २१ ॥

---

नास्त्येनः पापमस्येति हेऽनेनः । आशयं मनः आमा रोगास्ते न सन्त्यस्येति हेऽना० हेऽसम निरुपम ! हेऽभव असंसार ! नास्त्यारयूसरिजात (?) मीरस्येति हेऽना, न विद्यते तापः कषायादिज अयमा अविरतयो रणं सङ्ग्रामोऽस्येति हेऽना० (यम०) हे सुव्रतजिन ! नास्ति कुः पृथ्वी यस्येति हेऽको ! अपगतं मानं प्रमाणं ययो-रीदृश्यौ ये श्रीपद्मे शोभालक्ष्म्यौ तयोर्भूः स्थानं, यद्वा नास्ति कस्य सुखस्योपमा-नमस्येति हेऽको० ! हे श्रीर्लक्ष्मीस्तस्याः पद्म ! लक्ष्मीर्हि पद्ममधिवसति "हरि-प्रिया पद्मवासे" त्युक्तेः, नास्ति भूः पृथ्वी यस्येति हेऽभूः, रतं विषया अपायोऽ-नर्थो मरणं प्राणत्यागस्तानि हन्तीति हे रत० ! सुष्ठु व्रतमस्येति हे सु० ! न विद्येते कोपमानौ क्रोधाऽहङ्कारौ यस्येति हेऽको० ! श्रेयो मोक्षं भवांस्त्वं अरं शीघ्रं मार प्रापाऽगमद्वा । तथाऽघवतः पापिनो भूरभव्यार्देह(?)ततं विनाशित-श्रीक ! ततं विस्तीर्ण विनिश्चितमश्रेयोऽशिवं न नाशयामास पापिषु मध्यस्थत्वा-दजीगमदित्यर्थः, भवान् कीदृग् ? इनः स्वामी मघवतः शक्रस्य मह्यः पूज्यः । श्रीप्रधाना या पद्मा नाम राज्ञी तस्यां भवति यः स श्री० ॥२०॥ सुष्ठु उरो हृदयं यस्येति सूरो !, मायां हरतीति हे मायाहृद् ! हे ओजो बलं विजयो बाह्या-ऽभ्यन्तारिजेतृ भवस्तयोरोजसा यो विजयस्तस्य वा भवन सद्म ! विजयो नाम नृपस्तस्माद् भवतीति हे वि० ! हे नमे नमिजिन ! भव्यानां भाविमोक्षाणां कल्याणं श्रेयो ददातीति हे भव्य० ! मे मम हृदो हृदयात्त्वं मा याः मा गाः, कीदृशस्त्वम् ? अजोऽजन्मा, भव्यं कल्याणं प्रधानं स्वर्णं तद्वद्देहोऽङ्गं यस्य-स

सद्भावाऽराग नेमे ! समयमहि महोरो समानायतेन
सद्भावारागनेमे ! ऽसम यमहिम हो रोसमानायतेन ।
नाशज्ञो देवराजस्तुतवचन रसासार भूयादनन्ता-
ऽनाश ! ज्ञो देव राजस्तुतवचनरसासार भूयाद नन्ता २२
श्रीमत्पार्श्व प्रभोमालय समितिमनोऽजन्मनाशोऽहताशः
श्रीमत्पार्श्वप्रभो मालय समितिमनो जन्मनाशोहताशः ।

---

म० । तथा इह त्रिजगति प्रकाशकत्वात् सूर इव सूरः । अथोक्तान्तरमाह—हे नृणां नराणां वा समूहो नारं तस्य ईड् ईश ! हे दरागानल भयवृक्षवह्ने ! हे सारा प्रधाना प्रशस्या धीर्बुद्धिस्तया अराम मनोज्ञ ! नास्त्यारमरिजातमस्येति हेऽनार ! न विद्यते नोद(वा) रागौ क्षेपमनोविकारौ यस्येति हेऽनो० ! हेऽन-लस निरालस्य ! हे सार श्रीद ! हे धीर निष्प्रकम्प ! आमं रोगं हन्तीति हे आमह ! त्वा त्वां एनः क्षुत्यन्तरायभूतं पापं हत्वा सततं निरन्तरं अहं ईडे स्तुवे । त्वां कीदृशम् ? ततो विस्तीर्णो मह उत्सवोऽस्य तम् । तत० इति ॥ २१ ॥ सन् प्रहृष्टो भावोऽस्येति हे सद्भाव ! हेऽराग नीराग ! हे नेमे नेमि-जिन ! हे समयमहि सिद्धान्तपृथ्वि ! हे महैरुत्सवैरुरो गुरो ! महद् विपु-लमुरो हृदयमस्येति हे म० ! सतां भव्यानां सावार एवाऽन्तरारिजात एवाऽगा वृक्षास्तत्र नेमिरिव धारेवेति हे सद्भा० ! असमा अप्रतिमा यमा महाव्रतान्य-स्येति हेऽस० ! असमाना सर्वोत्कृष्टाऽऽयतिरुत्तरकालोऽस्येति हेऽस० ! हे रसा-यामुर्व्यां सार प्रधान ! हे नास्त्याशाऽस्येत्यनाश ! हे देवराजभिर्नृपैश्चेन्द्रैर्वा स्तुतः श्लाघितो वचनरसस्य वाग्यूषस्य, वचनमेव रसोऽमृतं यस्य वाऽऽसारो वेग-वद्वृष्टिरस्येति हे राज० ! भुवः पृथिव्या यां श्रियं ददातीति हे भू० ! तव नन्ता नमस्कर्ता पुमान् देवराजो देवेन्द्रस्तुतः, पुनरर्थे तुः, पुनर्मध्यग्रहणे आद्य-न्तयोर्ग्रहणमिति न्यायेन "जो एगं जाणइ सो सव्वं जाणइ" इति वचनाद्वा नाश-मुत्पादव्ययध्रौव्यात्मकलक्षणं वस्तु स्वरूपं जानातीति राज्ञश्च न न भूयादपितु भवेदेवेति । कीदृशोऽसौ ? हेऽसमान असाहङ्कार ! महस्तेजो रातीति महो-रस्तथाऽयता भाग्यश्रीर्यद्वाऽऽयतः प्रौढः स चाऽसाविनश्चेति, हि स्फुटं, तथा हेऽनन्त अक्षय ! ज्ञः कवीति ॥ २२ ॥ श्रीमान् महर्द्धिः पार्श्वो नामाऽधिष्ठा-

नापायासः सदानो विभव परमतीराज ते शस्तयोगी
नापायासः सदा नो विभवपरमती राजते शस्तयोगी ॥२३॥
मुक्तोमन्दोदयोर्वी शमद कलकलाऽऽसातमोहारिदोऽश्री-
मुक्तोमन्दोदयोर्वीश मदकलकलासाऽतमो हारिदोश्रीः ।
नीरागो वर्धमानाऽयमहजयभयासामहीनः सुधीरा-
नीरागो वर्धमानाऽयमहजयभया साम हीनः सुधीरा ॥२४॥

ताऽस्य, श्रीमत् सश्रीकं पार्श्वं समीपं वाऽस्येति हे श्री० ! हे प्रभा माहात्म्यं तेजः कान्तिर्वा उमा कीर्तिस्तयोरालय स्थान ! समितिषु इर्या भाषैषणादाननिक्षेपोत्सर्गाभिधासु मनोऽस्येति हे स० ! हे श्रीमत् पार्श्वप्रभो श्रीपार्श्वजिन ! नास्ति मासु समवसृत्यादिश्रीषु लय आसक्तिरस्येति हेऽमा० ! "निर्द्रव्यपरमेश्वरा" इत्युक्तेर्नास्ति भवोऽस्येति हेऽवि० ! हेऽज ! विगतो भवोऽस्येति हे वि० ! वे तव परं प्रकृष्टं मतं शासनं यस्य सः, ना पुमान् नो सदा शश्वद् राजते शोभतेऽपि तु राजत एवेति, ना किंभूतः ? न विद्येते जन्मनाशौ जनुःक्षयौ यस्य सोऽजन्मनाशोऽहताशः सज्जनः ! न हता छिन्नाऽऽशा वाञ्छाऽस्येति वा । समितिः सङ्ग्रामो मनोजन्मा स्मरस्तौ नाशयत्यपनयति यः स समि० । न हताशः कृपापात्रमित्यहताशोऽदीन इत्यर्थः, अपायासो गतप्रयासः, सह दानेन वर्तत इति स सदानः, परा प्रकृष्टा मतिर्बुद्धिस्तस्या इरा स्थानम्, शस्ताः प्रशस्ता योगाः मनःप्रभृतयोऽस्य स श० । अपायाननर्थानस्यति क्षिपति यः सोऽपायासः । शस्तः शुभो योगोऽलब्धलाभो ज्ञानं यस्य स शस्तयोगीति ॥ २३ ॥ हे शमद ! कला मनोज्ञा कला यस्येति हे क० ! नास्ति सातं सुखं यस्मात् स चाऽसौ मोहारिश्च तम्, यद्वाऽसातमोहारी दुःखमोहद्विषो द्यति छिनत्तीति सः तथाऽमन्दोऽजिह्म उदयोऽस्येति हेऽमं० ! उरुः प्रौढः स चाऽसौ ईशश्च, यद्वा हे उर्वी पृथ्वी तस्या ईश ! उर्वीत्युपलक्षणं तेन भूर्भुवःस्वस्त्रयीश इत्यर्थः । मदकलकलौ गर्वकलहौ अस्यति क्षिपतीति हेऽम० ! नास्ति तमोऽज्ञानमस्येति हेऽतमः ! वर्धमाना एधमाना अयमहजया भाग्योत्सवविजया अस्येति हे वर्ध० ! हे सुधीर निष्प्रकम्प ! न विद्येते ईरागौ क्षेपापराधौ अस्येति हेऽनी० ! हे वर्धमान महावीर ! अयमानविरतीर्हन्तीति हेऽय० ! न सहाऽमेन रोगेणाऽस्तीति

एवं श्रीनाभिसूनुप्रभृतिजिनवराः षोडशाऽष्टौ च विश्वे
विख्याताः संपुटाख्याऽसमतमयमकैः संस्तुता भूरिभक्त्या ।
मह्यं मह्यक्रमाब्जारविशशिभवनव्यन्तरस्वर्गिराजां
सिद्धिश्रीकार्मणं आगतिगुरुददतां दुर्लभं बोधिरत्नम् ॥२५॥

॥ इति पण्डितवरश्रीधर्मशेखरगणिकृतो जिनस्तवः ॥

हेऽसाम ! हे साम सुकुमालेति वा त्वं जय नन्देति । किंभूतः ? मुक्तः सिद्धः, अमन्दोऽनलसः, दयोर्वी कृपास्थानं, अश्रिया अलक्ष्म्या मुक्तो रहितः, हारिणी मनोज्ञा दोःश्रीर्भुजविक्रमोऽस्य स हारि० नीरागो वीतरागः, भयं भीरसामाऽनयविशेषस्ताभ्यां हीनः रहितस्तया भया कान्त्या हि निश्चितमिनः सूर्यः, सुधीः सुष्ठु बुद्धिस्तस्या इरा स्थानमिति ॥ २४ ॥ एवं प्रागुक्तप्रकारेण आद्यन्तपादयमकत्वेन यमकानां मिथः सम्पुटीभवनाः सम्पुटाख्या येऽसमतमा निरुपमा यमकास्तैः संस्तुताः स्तुतिविषयीकृताः सन्तो नाभिप्रभृतिजिनवराः श्रीनाभेयादिजिनेन्द्राः बोधिः सम्यक्त्वं, ज्ञानं जिनधर्मावाप्तिर्वा स एव महर्घत्वाद् रत्नं मह्यं मे ददतां वितरन्तु, आगच्चिराद्, बोधिरत्नं किंभूतम् ? सिद्धिश्रीर्मोक्षलक्ष्मीः, यद्वा सर्वमनश्चिन्तितार्थावाप्तिः श्रीर्लक्ष्मीस्तत्र कार्मणमिव कार्मणं कार्मणवत् सिद्धिश्रीवशीकारकमित्यर्थः । तथाऽतिगुरु अतिशयेन गौरवार्हं अत एव दुःखेन लभ्यते दुर्लभम् । नाभिसूनुप्रभृतिजिनवराः किंविशिष्टाः ? षोडशाऽष्टौ च चतुर्विंशतिमिता इत्यर्थः । तथा विश्वे जातावेकवचनत्वेन विश्वत्रये विशेषेण ख्याताः प्रसिद्धाः, यद्वा विश्वा संपूर्णा या ईर्लक्ष्मीस्तया विख्यातास्तथा रविशशिभवनव्यन्तरस्वर्गिराजां सूर्येन्द्रभवनपतिव्यन्तरनाकिराजानां 'कृत्यस्येवे'त्यनेनाऽत्र ', मह्यं पूजनीयं क्रमाब्जं पदपद्मं येषां ते मह्यक्रमाब्जाः । अत्र मह्येति शब्दस्य देवदत्तस्य गुरुकुलमित्यादिवत् सम्बन्धिशब्दत्वाद् वृत्तावपि रविशशीत्यस्य सापेक्षत्वमवसेयम्, संस्तुता मह्यक्रमाब्जा वा । कया ? भूरिभक्त्या प्रभूतवासनयेति ॥ २५ ॥

॥ इति धर्मशेखरगणिकृतस्तवावचूरिः ॥

## अथ श्रीशाश्वतजिनस्तवनम् ।



सिरिउसहवद्धमाणं चंदाणणवारिसेणजिणचंदं ।
नमिउं सासयजिण भवण संखपरिकित्तणं काउं ॥ १ ॥
जोइ वणेसु असंखा सगकोडिबिसयरिलरकभुवणेसु ।
चुलसीलरकसगनवइसहस्सतेवीसुवरि लोए ॥ २ ॥
बावन्ना नंदीसरवरंमि चउ चउर कुंडले रुअगे ।
इयसट्ठी चउबारा तिहुवारा सेसजिणभवणे ॥ ३ ॥
पत्तेसु अबारेसु अ मुहमंडवरंगमंडवे तत्तो ।
मणिमयपीढं तदुवारि थुभे चउदिसासु चउपडिमा ॥ ४ ॥
तत्तो मणिपीढजुगे असोगधम्मज्झओ य पुरकरिणी ।
पइभुवणं पडिमाणं मज्झे अट्ठुत्तरसयं च ॥ ५ ॥
पडिमा पुण गरुयाओ पण धणुसय लहुय सत्तहत्थाओ ।
मणिपीढे देवच्छंदयंमि सिंहासणनिसण्णा ॥ ६ ॥
जिणपीठे छत्तधरा पडिमा जिणभिमुह दुन्नि चमरधरा ।
नागा भूया जरका कुंधधरा जिणमुहा दोदो ॥ ७ ॥
सिरिवच्छनाभिचचुयपयकरके सिमहिजीहतालुरुणा ।
अंकमया नहअच्छी अंतो रत्ता तहा नासा ॥ ८ ॥
तारायरोमसयई अच्छिदलाभिमुहि केसिरिट्ठमया ।
फलिहमयदसणवयरम यसीसविद्दुममया हुट्ठा ॥ ९ ॥
कणगमयजाणुजंघा तणुजट्ठीनाससवणभालोरु ।
पलिअंकनिसण्णाणं इय पडिमाणं भवे वण्णो ॥ १० ॥

भवणवणकप्पजोइसउववायमिसेय तह अलंकारा ।
ववसायसुहम्मसभा मुहमंडवमाइ छक्कजुआ ॥ ११ ॥
तिदुवारा पत्तेयं तो पणसतथूभसट्ठिबिंबेहिं ।
चेइय बिंबेहि समं पइभवणं बिंबअसियसयं ॥ १२ ॥
जोयणसयं च पण्णा बिसयरि दीहत्त पिहुलउच्चत्तं ।
वेमाणियनंदीसर कुंडलरुअगे भुवणमाणं ॥ १३ ॥
तीस कुलगिरीस दस कुरुमेरुवणे असिइ वीस गयदंते ।
वक्खारेसु असीयं चउचउ असुयार मणुअनगे ॥ १४ ॥
एयाइं असुरभुवणट्ठियाइ पुव्वुत्तमाण अद्धाइं ।
दलमित्तो नागाई नवसु वणेसु ईओ अद्धं ॥ १५ ॥
दिग्गयगिरीसु चत्ता दहे असी कंचणेसु इगसहसो ।
सत्तरिमहानईसुं सत्तरिसयं दीहवेयड्ढे ॥ १६ ॥
कुंडेसु तिसय असीया वीसं जमगेसु पंच चूलासु ।
इक्कारससयसत्तरि जंबूपमुहेसु दसतरुसु ॥ १७ ॥
वयवेदड्ढे वीसा कोस तयद्धं च दीहवित्थारो ।
चउदसधणुसयचालीसा अहियं उच्चत्तणे सव्वे ॥ १८ ॥
अडदिसि विदिसिसु सोलस सोहम्मीसाण अग्गिदेवनयरीसु ।
एवं बत्तीससया गुणसट्ठिजुआ तिरिअलोए ॥ १९ ॥
एवं तिहुयणमज्झे अडकोडी सत्तवण्ण लक्खाय ।
दो अ सया बासीया सासयजिणभवण वंदामि ॥ २० ॥
साट्ठी लक्खा गुणनवई कोडी तेर कोडि सय बिंबा ।
भुवणेसु १३८९६००००००० तिसय वीसा
इग नवइ सहस्स(३९१३२०२१)लक्खतिगतिरिअं ॥ २१ ॥

एगं कोडिसयं खलु बावन्ना कोडि चउ नवइलक्खा ।
चउचत्तसहस्स सगसयट्ठी वेमाणि बिंबाणि ॥ २२ ॥
पन्नरसकोडिसयाइं दुबत्त कोडी अडवन्नलक्खा य ।
बत्तीससहस्स असीया तिहुअणबिंबाणि
पणमामि (१५४२५८३५०००) ॥ २३ ॥
सिरि भरह निवइपमुएहिं जाइं अन्नाइं इत्थ विहियाइं ।
देविंदमुणिंदथुआइं दिन्तु भवियाण सिद्धिसुहं ॥ २४ ॥

॥ इति श्रीशाश्वतजिनस्तवनम् ॥

## अथ श्रीचक्रेश्वरीदेवीस्तुतिः ।

श्रीचक्रे ! चक्रभीमे ! ललितवरभुजे ! लीलया लोलयन्ती
चक्रं विद्युत्प्रकाशं ज्वलितशितशिखं खे खगेन्द्राधिरूढे ! ।
तत्त्वैरुद्भूतभावे सकलगुणनिधे ! त्वं महामन्त्रमूर्ते !
क्रोधादित्यप्रतापे ! त्रिभुवनमहिते ! पाहि मां देवि ! चक्रे ! ॥१॥
ह्रीँ ह्रीँ ह्रीँकारचित्ते ! कलिकलिवदने ! दुन्दुभीमीमनादे !
ह्राँ ह्रीँ ह्रः सः खबीजे ! खगपतिगमने मोहिनी शोषिणी त्वम् ।
तच्चक्रं चक्रदेवी भ्रमसि जगति दिक्चक्रविक्रान्तकीर्ति-
र्विघ्नौघं विघ्नयन्ती विजय जयकरी पाहि मां देवि ! चक्रे ! ॥२॥
श्राँ श्रीँ श्रूँ श्रः प्रसिद्धे ! जनितजनमनःप्रीतिसन्तोषलक्ष्मीं
श्रीवृद्धिं कीर्तिकान्तिं प्रथयसि वरदे ! त्वं महामन्त्रमूर्तिः ।
त्रैलोक्यं क्षोभयन्तीमसुरभिदुरहुङ्कारनादैकभीमे !
ह्रीँ ह्रीँ ह्रीँ द्रावयन्ती हुतकनकनिभे पाहि मां देवि ! चक्रे ! ॥३॥

वज्रक्रोधे ! सुभीमे ! शशधरधवले ! भ्रामयन्ती सुचक्रं
  राँ रीँ रौँह्‌ः कराले ! भगवति ! वरदे ! रुद्रनेत्रे ! सुकान्ते ! ।
आँ ईं ॐ भीषयन्ती त्रिभुवनमखिलं तत्त्वतेजःप्रकाशि
  क्षाँ क्षीँ क्षुँ क्षोभयन्ती विषमविषयुते ! पाहि मां देवि ! चक्रे ! ४

ॐ ह्रीँ ह्रूँ ह्रः सहर्षं हरहसितसिते चक्रसङ्काशबीजे !
  ह्राँ ह्रीँ ह्रूँ(ह्रः)क्षीरवर्णे ! कुवलयनयने ! विद्रवं द्रावयन्ती ।
ॐ ह्रौँ ह्रः क्षः त्रिलोकीममृतजरजरैर्वारणैः प्लावयन्ती
  ज्वाँ ज्वीँ ज्वौँ सत्त्वबीजे ! प्रलयविषयुते पाहि मां देवि ! चक्रे ! ५

आँ आँ आँ ह्रीँ युगान्ते प्रलयदिनकरे कारकोटिप्रतापे !
  चक्राणि भ्रामयन्ती विमलवरभुजे पद्ममेकं फलं च ।
सचक्रे कुङ्कुमाङ्गैर्विधृतविनिरुहं तीक्ष्णरौद्रप्रचण्डे
  ह्राँ ह्रीँ ह्रैँकारकारीरमरगणतवो(?) पाहि मां देवि ! चक्रे ! ६

श्राँ श्रीँ श्रूँ श्रः सवृत्तिस्त्रिभुवनमहिते नादबिन्दुत्रिनेत्रे
  वं वं वं वज्रहस्ते ललललललिते नीलशोनीलकोषे ।
चं चं चं चक्रधारी चलचलकलिते नूपुरालीढलोले
  त्वं लक्ष्मीं श्रीसुकीर्तिं सुरवरविनते पाहि मां देवि ! चक्रे ! ७

ह्रीँ ह्रीँ ह्रूँकारमन्त्रे कलिमलमथने तुष्टिवश्याधिकारे
  ह्रीँ ह्रीँ ह्रूँ यः प्रघोषे प्रलययुगपटाजेयशब्दप्रणादे ।
याँ याँ याँ क्रोधमूर्ते ! ज्वलज्वलज्वलिते ज्वालसंज्वाललीढे
  आँ ईं ऊँ अः प्रघोषे प्रकटितदशने पाहि मां देवि ! चक्रे ! ॥८॥

॥ इति श्रीचक्रेश्वरीदेवीस्तुतिः ॥

श्रीः

# अथाऽम्बिकास्तवनम् ॥ १ ॥



पुण्ये गिरीशशिरसि प्रथितावतारा-
मासूत्रितत्रिजगतीदुरितापहाराम् ।
दौर्गत्यपातिजनताजनितावलम्बा-
मम्बामहं महिमहैमवतीं महेयम् ॥ १ ॥

यद्वक्रकुञ्जरहरोद्गतसिंहनादोऽ-
प्युन्मादिविघ्नकरियूथकथाममाथम् ।
कूष्माण्डि खण्डयतु दुर्विनयेन कण्ठः
कण्ठीरवः स तव भक्तिनतेषु भीतिम् ॥ २ ॥

कूष्माण्डि ! मण्डनमभूत्तव पादपद्म-
युग्मं यदीयहृदयावनिमण्डलस्य ।
पद्मालया नवनिवासविशेषलाभ-
लुब्धा न धावति कुतोऽपि ततः परेण ॥ ३ ॥

दारिद्र्यदुर्दमतमःशमनप्रदीपाः
सन्तानकाननघनाघनवारिधाराः ।
दुःखोपतप्तजनबालमृणालदण्डाः
कूष्माण्डि ! पान्तु पदपद्मनखांशवस्ते ॥ ४ ॥

देवि ! प्रकाशयति सन्ततमेष कामं
वामेतरस्तव करश्चरणानतानाम् ।
कुर्वन् पुरः प्रगुणितां सहकारलुम्बि-
मम्बे विलम्बविकलस्य फलस्य लाभम् ॥ ५ ॥

हन्तुं जनस्य दुरितं त्वरिता त्वमेव
नित्यं त्वमेव जिनशासनरक्षणाय ।
देवि ! त्वमेव पुरुषोत्तममाननीया
कामं विभासि विभया सभया त्वमेव ॥ ६ ॥

तेषां मृगेश्वरगरज्वरमारिवैरि-
दुर्वारवारणजलज्वलनोद्भवा भीः ।
उच्छृङ्खलं न खलु खेलति येषु धत्से
वात्सल्यपल्लवितमम्बकमम्बिके ! त्वम् ॥ ७ ॥

देवि ! त्वदूर्जितजितप्रतिपन्थितीर्थ-
यात्राविधौ बुधजनाननरङ्गसङ्गि ।
एतत्त्वयि स्तुतिनिभाद्भुतकल्पवल्ली-
हल्लीसकं सकलसङ्घमनोमुदेऽस्तु ॥ ८ ॥

वरदे ! कल्पवल्लि ! त्वं स्तुतिरूपे ! सरस्वति ! ।
पादाग्रानुगतं भक्तं लम्भयस्वातुलैः फलैः ॥ ९ ॥

स्तोत्रं श्रोत्ररसायनं श्रुतसरस्वानम्बिकायाः पुर-
श्चक्रे गूर्जरचक्रवर्तिसचिवः श्रीवस्तुपालः कविः ।
प्रातः प्रातरधीयमानमनघं यच्चित्तवृत्तिं सता-
माधत्ते विभुतां च ताण्डवयति श्रेयःश्रियं पुष्यति ॥१०॥

इत्यम्बिकास्तुतिः ॥

## पुनरम्बिकास्तवनम् ॥ २ ॥

देवगन्धर्वविद्याधरैर्वन्दिते
जय जयामित्रवित्रासने विश्रुते ।
नूपुरारावसुनिरुद्धभुवनोदरे
मुखरतरकिङ्किणीचारुतारस्वरे ॥ १ ॥

ॐ ह्रीँ मन्त्ररूपे शिवे शङ्करे
अम्बिके देवि! जय जन्तुरक्षाकरे।
स्फुरत्तारहारावलीराजितोरःस्थले
कर्णताडङ्करुचिरम्यदङ्कस्थले ॥ २ ॥

स्तम्भिनी मोहिनी ईश उच्चाटने
क्षुद्रविद्राविणी दोषनिर्णाशिनी।
जम्भिनी भ्रान्तिभूतग्रहस्फोटिनी
शान्तिधृतिकीर्तिमतिसिद्धिसंसाधिनी ॥ ३ ॥

ॐमहामन्त्रविद्येऽनवद्ये स्वयं
ह्रीँसमागच्छ मे देवि दुरितक्षयम्।
ॐप्रचण्डे प्रसीद प्रसीद क्षणं
(हे)सदानन्दरूपे विधेहीक्षणम् ॥ ४ ॥

ॐनमो देवि दिव्येश्वभे भैरवे
जयेऽपराजिते तप्तहेमच्छवे!।
ॐजगज्जननि संहारसम्मार्जनी
ह्रीँकूष्माण्डि! दिव्याधिविध्वंसिनी ॥ ५ ॥

पिङ्गतारोत्पतद्भीमकण्ठीरवे
नाममन्त्रेण निर्णाशितोपद्रवे।
अवतरावतर रैवतकगिरिनिवासिनि
अम्बिके! जयजय त्वं जगत्स्वामिनी ॥ ६ ॥

ह्रींमहाविघ्नसङ्घातनिर्णाशिनी
दुष्टपरमन्त्रविद्यावलच्छेदिनी।

हस्तविन्यस्तसहकारफललुम्बिका
हरतु दुरितानि देवी! जगत्यम्बिका ॥ ७ ॥
इति जिनेश्वरसूरिभिरम्बिका
भगवती शुभमन्त्रपदैः स्तुता ।
प्रवरपात्रगता शुभसम्पदं
वितरतु प्रणिहन्त्वशिवं मम ॥ ८ ॥

इति श्रीअम्बिकादेवीस्तुतिः ।

ॐ

## अथ चतुर्विंशतिजिनस्तुतयः स्तोत्राणि च ।

विनतवासवभूपतिमण्डलीमुकुटरत्नविभाभररञ्जितम् ।
जिनपदं प्रणिपत्य सुखालयं प्रवरमादिमतीर्थकरं स्तुवे ॥ १ ॥
वरमुदारगुणावलिराजितं कनककान्तिधरं गजलाञ्छनम् ।
भववनावलिभञ्जनवारणं सुविजयासुततीर्थकरं स्तुवे ॥ २ ॥
प्रबलमोहमहाकरिकेशरिन्नपगताखिलराग! सुरस्तुत! ।
वरद शम्भव! देहि सुखालयं विमलकेवलभासितविष्टपम् ॥ ३ ।
प्रणतजन्तुसमीहितकामदं भविकलोकविबोधकरं सदा ।
विहतमोहमहाभटसूदनं जिनपतिं प्रणमाम्यभिनन्दनम् ॥ ४ ॥
भवनिवासकुवासनिवारकं गतदरं करुणारससागरम् ।
नवसरोजविभासितभूतलं जिनवरं सुमतिं प्रणमामि तम् ॥ ५ ॥
जनमनोजविकाशनभोमणे! विमलकेवलबोधितभूतलम् ।
कमललाञ्छन! शोणतनुद्युते! वरमरालगते प्रणमामि ते ॥ ६ ॥
भवनिवासनिदाघघनाघनं सुरनराधिपमण्डलसेवितम् ।
जितभयं वरसौख्यकरं महत् किल नमामि सुपार्श्वजिनाधिपम् ७

प्रणतदेवनराधिपमण्डलो भुवनभासुरचन्द्रनिषेवितः ।
प्रकटिताखिलसिद्धनिकेतनो विजयतां वरचन्द्ररुचिर्जिनः ॥ ८ ॥
प्रवरदानवदेवनिषेवितं सकलजीवविनाशितसंशयम् ।
त्रिदशपूजितपादयुगं मुदा सुविधिनाथजिनं प्रणमाम्यहम् ॥ ९ ॥
निजयशोभरभासितभूतलं वरविहारविबोधितविष्टपम् ।
भविककाननन्नूतननीरदं प्रवरशीतलतीर्थकरं स्तुवे ॥ १० ॥
भवपयोधिविशोषघटोद्भवं भविककैरवबोधनिशापतिम् ।
नरसुरेन्द्रनतं प्रवरं जिनं नृवरविष्णुसुतं प्रणमाम्यहम् ॥ ११ ॥
कुगतिरेणुनिवारणवारिदं भवमहीरुहभञ्जनवारणम् ।
विकृतिकाननदाहदवानलं महिषलाञ्छनतीर्थकरं स्तुवे ॥ १२ ॥
विमलकीर्तिभरं विमलाशयं प्रवरसिद्धिकरं जनतानतम् ।
मदनदाहनिवारणजीवनं विमलतीर्थकरं सुखदं स्तुवे ॥ १३ ॥
विविधदेशविनेयविराजितं त्रिवरसालसुपूतमहीतलम् ।
चरणभारधुरावृषपुङ्गवं वरमनन्तजिनं प्रणमाम्यहम् ॥ १४ ॥
किल चतुर्गतिभीतिनिवारकं वरचतुर्विधधर्मविभाषकम् ।
नरचकोरदृशोर्हिमदीधितिं तमिह धर्मजिनं सुखदं स्तुवे ॥ १५ ॥
प्रबलचक्रधरं भरताधिपं सकलराज्यधुरापरिहारकम् ।
वर(प्र)यतीश्वरसंसदि सेवितं मृगधरं वरशान्तिजिनं स्तुवे ॥ १६ ॥
गजपुरेश्वरशूरतनूरुहं वरसुराधिपवीजितचामरम् ।
गणधरादिमुनीश्वरसेवितं तमिह कुन्थुजिनं प्रणमाम्यहम् ॥ १७ ॥
सकलभारतभूतलसेवितं त्रिदशचापतनुं वरसौख्यदम् ।
सजलनीरदघोषनिभस्वनं कनककान्तिभरं प्रणमाम्यहम् ॥ १८ ॥
प्रवरकुम्भिनराधिपनन्दनं विपुलभारतखण्डविभूषणम् ।
वरघटाङ्कितपादयुगं मुदा तमिह मल्लिजिनं प्रणमाम्यहम् ॥ १९ ॥

वरसुमित्रकुलाम्बरभास्करं भवमरुस्थलकल्पमहीरुहम् ।
जिनवरं कलकृष्णविभाभरं तमिह सुव्रततीर्थकरं स्तुवे ॥ २०
विजयभूपकुलाम्बुनिधौ विधुं नवपदावलिबोधितमानवम् ।
शिवनिवासमहासुखलालसं नमिजिनेश्वरमादरतः स्तुवे ॥ २१
वरसमुद्रशिवाकुलदीपकं हरिनिषेवितपादयुगं मुदा ।
सकलजीवविमोक्षकरं वरं विमलशङ्खभृतं प्रणमाम्यहम् ॥ २२
कमठमानविभञ्जनकोविदं धरणसेवितचारुपदाम्बुजम् ।
प्रणतलोकसमीहितपूरकं गतभवं वरपार्श्वजिनं स्तुवे ॥ २३ ।
प्रवरकुण्डनराधिपनन्दनं वरमहाव्रतपद्मविकाशकम् ।
कृतसुराधिपमोक्षमहोत्सवं चरमतीर्थपतिं सुतरां स्तुवे ॥ २४
इति मया वरतीर्थकराः स्तुताः सकलभव्यजनौघनतक्रमाः ।
सुमुनिशेखरसूरिनिषेविता मम भवन्तु जिनाः सुमुदा हि ते २
त्रिभुवनस्य सदा तिलका जिनाः प्रवरकेवलभासितभूतलाः ।
सकलमानवभूपतिसेविता मम भवन्तु महोदयदायकाः ॥२६
गुरुगमावलिनीरसपूरितं सुपरिपद्धतिवेलविराजितम् ।
सकलजीवदयामणिसङ्कुलं जिनवरागमवारिनिधिं स्तुवे ॥ २७।
श्रुतवतां दमिनां हितकारिणी मधुपचुम्बितपद्मनिवासिनी ।
सकलसौख्यकरी श्रुतदेवता भविकलोकविबोधकरा स्तुता ॥२८।

( एभिस्त्रिभिः काव्यैश्चतुर्विंशतिजिनानां स्तुतयो भवन्ति )

इति श्रीचतुर्विंशतिजिनस्तवनं सं. १८५१ वर्षे मागशरसुदि १३ रवौ
लि. डुंभुराम. सुरतबंदिरे ॥

# चतुर्विंशतिजिनस्तोत्रम् ।

## जिनप्रभसूरिकृतम् ।



ऋ¹षभनम्रसुरासुरशेखरप्रपतयालुपरागपिशङ्गितम् ।
क्रमसरोजमहं तव मौलिना जिन! वहे नवहेमतनुद्युते! ॥ १ ॥
अपरवस्तुविलोकनलालसाविषनिषेधबुधां सुषमासुधाम् ।
वपुषि ते पिबतां मम चक्षुषी अजित! भाजितभास्वरकाञ्चन(नां)२
हरिहरादिसुरौघविलक्षणाद्भुतचरित्रचमत्कृतविष्टपम् ।
सुजन भो पदपीठविलुठत्सुमनसं मनसम्भवदेवतम् ॥ ३ ॥
मदनदुर्दमदन्तिदमे हरिस्तरुमृगाङ्कितमूर्तिरुपाश्रितान् ।
हृतमहारजतद्युतिरग्रणीः शमवतामवतादभिनन्दनः ॥ ४ ॥
चरणलक्ष्मिकरग्रहणोत्सवे विरचितैरयनद्वितयावधि ।
धृतसुखाऽतिशया वसुवर्षणैर्वसुमतिः सुमतिः सकृपा त्वया ॥ ५ ॥
स्मितजपाकुसुमोपमदीधितिं कुमतकोककुलामृतदीधितिम् ।
शरणमीशमुपैमि जगत्रयीमुदरविन्दरविं धरनन्दनम् ॥ ६ ॥
सकललोकचमत्कृतिकारिणी जिन! सुपार्श्व! भवद्गुणधोरणी ।
क इव नो मतिमान् भुवनत्रये कुमुदभामुदभावयदुच्चकैः ॥ ७ ॥
शुचियदङ्गरुचा नु पराजितः शशधरोऽङ्कमिषाद्यमशिश्रियत् ।
सपदि लोचनयोर्मम कल्पतां स महसे महसेनसुतो जिनः ॥८॥
सुविधितीर्थकरं करुणाकरं करणविष्किरपाशमुपास्महे ।
करणकान्तिविनिर्जितकार्तिकीहिमकरं मकरं दधतं ध्वजम् ॥९॥

---

१ एभिस्त्रिभिःकाव्यैः प्रतिकाव्यं संयोजितैश्चतुर्विंशतिजिनानां स्तुतयो भवन्ति।

जयति शीतलदेव ! सरस्वती त्रिजगतीं पुनती कविसेविता ।
मधुरिमातिशयेन तृणीकृतामृतरसा तरसाऽस्ततृषा तव ॥ १० ।
जिनवरोऽवतु गण्डकलाञ्छनः प्रथमविष्णुनताङ्घ्रिसरोरुहः ।
प्रथितविष्णुनृपाम्बरपुष्कराम्बरमणी रमणीयगुणाम्बुधिः ॥११।
मुनिपतिर्वसुपूज्यनृपात्मभूर्जयति निर्जितदुर्जयचित्तभूः ।
सुजनकोककदम्बकलोचनोत्सवरविर्वरविद्रुमविग्रहः ॥ १२ ॥
सुकृतिनः कृतवर्मधराधवान्वयनभस्तलभासनभास्करम् ।
श्रयत काञ्चनवारिरुहच्छदच्छविमलं विमलं जगदीश्वरम् ॥१३।
उपनमन्ति तमीश ! समुत्सुकाः प्रणयतो वरितुं सकलाः श्रियः
जगति तुभ्यमनन्त ! नमस्क्रियामकलये कलयेद्विनयेन यः ॥१४।
अवतु धर्मजिनेन्द्र ! कुभावनारजनिनाशनसप्तहयोदय ! ।
शममयः समयस्तव सुव्रताततनय ! मां नय मांसलविस्तर ! १५
हृदयनायक ! चक्रिजिनश्रियोः द्विचिविरिजयोर्जितिविक्रमः (?)
भवभयानि भिनत्तु भवान् मतानुग विशाङ्गविशानि विभो ! भवान्
किमतितीव्रतपोव्रतशीलनैः किमुत योगरहस्यनिषेवणैः ।
दलयितुं कुगतिं यदि वो रुचिर्वृजिनकुं जिनकुन्थुरुपास्यताम् १७
प्रणतवासवमौलिमणिप्रभापटलसंवलिताङ्घ्रिनखत्विषः ।
स्मरत भव्यजनाः ! स्मरकुञ्जराङ्कुशमरं शमरञ्जितसज्जनम् १८
अभिनुमः प्रभुमल्लिमपाकृतस्मरशरप्रसरां शिशुतावधिः ।
मरकतद्युतिदर्पविलोपनक्षमविभामविभाव्यगुणश्रियम् ॥ १९ ।
कमठलक्ष्मणि लक्ष्मिनिकेतने परिहितव्रतशालिनि सुव्रते ।
अविरतं मम भक्तिरसः स्फुरत्वनवमे नवमेघतनुद्युतौ ॥ २० ।
अलमृभुक्षपदेन सृतं धनैर्युवतिभिः कृतमस्तु नृपश्रिया ।
न रुचये मम मुक्तिपदं तव स्तवनमेव नमे भवतु प्रियम् ॥२१।

दनुजजिद्भुजवीर्यमदज्वरप्रशमनैकभिषग्वरदोर्बलम् ।
नमत नेमिजिनं भुवनत्रयीसुरतरू रतरुद्रतरुद्विषाम्(?) ॥ २२ ॥
शिवसुखस्य कथामपि वेदिता न खलु सा जनता जिन! कर्हिचित् ।
सृजति या जिन! पार्श्व! कुवासनाशतवशात् तव शासनलङ्घनम् ॥
चलनकोटिविघट्टनचञ्चलीकृतसुराचल! वीर जगद्गुरो! ।
त्रिभुवनाशिवनाशविधौ जिनप्रभवते भवते भगवन्! नमः ॥२४॥
स्वरवतारजनीव्रतकेवलाक्षरपदाप्तिदिनानि पुनन्तु नः ।
भगवतां विदधन्ति जगत्त्रयीमुदमितां दमितान्तरविद्विषाम् २५
जिनवराः कुणपालिमृणालिनीमुकुलनैकतुषारमरीचयः ।
विदधतं प्रणतं जिनमाहतस्मरचयं रचयन्तु मनाशिनः ॥ २६ ॥
भगवताऽभिहितार्थमधीयतां कुपथमाथि कदर्थितमन्मथम् ।
श्रुतमुदात्तमुदात्तपरस्परं स्वरचितं रचितं गणधारिभिः ॥ २७ ॥
प्रथमकल्पपतिः प्रथितायतिः प्रवचनाम्बुजसौरभषट्पदः ।
कुलिशशोभितपाणिरुपप्लवं शमयतामयतामिह नम्रताम् ॥ २८ ॥
इति जिनप्रभसूरिभिरीडिताः प्रणतभव्यजनाय जिनाधिपाः ।
ददतु शीलितसिद्धिवधूमुखाऽम्बुजरसा जरसा रहितं पदम् ॥२९॥

इति श्रीजिनप्रभसूरिविरचितं चतुर्विंशतिजिनस्तोत्रम् ।

## चतुर्विंशतिजिनस्तुतयः ।

### श्रीजिनप्रभसूरिकृताः ।

आनन्दसुन्दरपुरन्दरनम्रमौलि-
मौलिप्रभासलिलधौतपदारविन्दः ।

श्रीनाभिवंशजलराशिनिशीथिनीशः
 श्रेयःश्रियं प्रथयतु प्रथमो जिनेशः ॥ १ ॥
गोक्षीरहीरहरहारविहारहारि-
 कीर्तिप्रमोदितजनोदितमोहपाशः ।
कुर्वन् कुकर्मविजयं विजयातनूज-
 स्तन्यान्महोदयमहोदयसंपदं वः ॥ २ ॥
स्फूर्जन्निजोर्जितजितारिजितारिभूप-
 वंशान्तरिक्षतरणिं तरणिं भवाब्धौ ।
रोषादिदोषपरिमोषपरस्वभावं
 श्रीसंभवं विभवसम्भवमानमामि ॥ ३ ॥
प्रह्वप्रभूतपुरुहूतशिरःप्रदेश-
 कोटीरकोटितटघट्टितपादपीठम् ।
वन्देऽहमिन्दुकरगौरगुणैरमन्द-
 मानन्दकन्दमभिनन्दनतीर्थनाथम् ॥ ४ ॥
गाङ्गेयगेयरुचिमक्षयमोक्षसौख्य-
 लक्ष्मीवशीकरणकारणकार्मणाभम् ।
भव्याङ्गिनेत्रकुमुदाकरकौमुदीशं
 नौमि प्रणम्रसुमतिं सुमतिं मुनीशम् ॥ ५ ॥
श्रीमेघभूमिपतिनिर्मलवंशवंश-
 मुक्तामणिर्गुणमणीगणरोहणाद्रिः ।
बालप्रवालविलसत्तनुकान्तिकान्तः
 पद्मप्रभो विशतु वः शिवसौख्यलक्ष्मीम् ॥ ६ ॥

सौभाग्यभाग्यकमलाकमलायमानः
संख्याऽव्यतीतगुणराजिविराजमानः ।
कार्तस्वरप्रवररोचिरनर्गलानि
दद्यात्सुपार्श्वभगवानिह मङ्गलानि ॥ ७ ॥

विश्वेशिता विमलकेवलबोधलोका-
लोकावलोकनकलाकलितस्वरूपः ।
चन्द्रप्रभप्रभुरभङ्गशुभाय पूर्ण-
चन्द्रप्रभः प्रभवतात्प्रकरप्रभावः ॥ ८ ॥

राकाशशाङ्कविशदद्युतिदीप्यमानं
दीपोपमानमघसन्तमसाऽस्तमानम् ।
कीर्तिप्रतापपरितर्जितपुष्पदन्तं
श्रीपुष्पदन्तभगवन्तमहं भजामि ॥ ९ ॥

प्रास्तप्रवादिनिकृतिः कृतिलोककोक-
सन्तोषपोषकुशलः कुशलप्रणम्यः ।
श्रीशीतलः सरसशीतलवाग्विलासः
कुर्यात्सतां तनुमतां नमतां मतानि ॥ १० ॥

भव्याङ्गिनाममितकामितकल्पवृक्ष-
प्रत्यक्षलक्ष्यगुणरञ्जितदक्षलक्षः ।
श्रेयांसतीर्थपतिरङ्गिनमत्सकर्णः
श्रेयांसि यच्छतु सुवर्णसवर्णवर्णः ॥ ११ ॥

अज्ञानसन्ततितमिस्रसहस्रपादः
सद्भूतभक्तिभरवासवपूज्यपादः ।

श्रीवासुपूज्यभगवान् वसुपूज्यजन्मा
बाभस्ति नूतनगभस्तिगभस्तिशस्तः ॥ १२ ॥
आनन्दमेदुरपुरन्दरवृन्दवन्द्य-
पादारविन्दयमलं विमलं जिनेन्द्रम् ।
विश्वम्भरावलयशोभियशोभिरिद्धं
वन्दे स भक्तिरसमस्तसमस्तमारम् ॥ १३ ॥
नम्रामरेश्वरनरावलिमौलिमौलि-
मालाकलापकलिताङ्घ्रियुगोपहारम् ।
व्याहारनिर्मितसमग्रजनावबोधं
संस्तौम्यनन्तभगवन्तमनन्तबोधम् ॥ १४ ॥
श्रीभानुभूपतिकुलार्णवशीतभानु-
स्त्रैलोक्यलोकहृदयाम्बुजबोधभानुः ।
दुष्कर्ममर्ममथनः शिवशर्मधर्मः
स्फूर्जत्तनुस्तनुमतां तनुतां नतानाम् ॥ १५ ॥
श्रीविश्वसेनतनयः पदपूतविश्वः
कुन्देन्दुगौरगुणगाहितविश्वविश्वः ।
श्रीशान्तिरन्तरहितान्तकृते प्रशान्त-
संसारतान्तिरचिरादचिरासुतोऽस्तु ॥ १६ ॥
श्रीनन्दनः कुशलनन्दनकन्निरस्त-
श्रीनन्दनः कुशलपङ्कजपद्मबन्धुः ।
विश्वेश्वरः समनमन्नरनाथकुन्थुः
कुन्थुर्जिनः स वृजिनव्रततीश्छिनत्तु ॥ १७ ॥

सद्दर्शनप्रमदकृन्निजदर्शनेन
श्रीमत्सुदर्शनसुतस्ततदर्शनश्रीः ।
श्रीमानरः श्रितनरप्रकरस्य भूत्यै
सार्वप्रभुर्भवतु सप्तमसार्वभौमः ॥ १८ ॥

श्रीकुम्भसम्भवजनिं भववारिराशि-
श्रीकुम्भसम्भवसमं समतासमेतम् ।
कल्याणवल्लिजलदं जितमोहमल्लं
मल्लिप्रभुं नमत रोचिरपास्तमल्लिम् ॥ १९ ॥

वृन्दारकप्रकरवन्दितपादपद्मं
पद्माङ्गजं विमलकेवलबोधपद्मम् ।
श्रीसुव्रतं व्रततिव्रततीपयोदं
सिद्धिप्रसिद्धवनितापतिमर्चयामि ॥ २० ॥

सत्तापनीयकमनीयरुचिप्रपञ्चं
पञ्चेषुवारणनिवारणपञ्चवक्त्रम् ।
श्रीमन्नमिं नमदमर्त्यपतिं प्रतीत-
संख्याव्यतीतगुणगेहमहं महामि ॥ २१ ॥

जातः समुद्रविजयान्नतनैकनाकि-
व्रातः समुद्रविजयात्तगभीरिमश्रीः ।
कन्दर्पदर्पपरिणाशशिवः शिवासूः
शैवं शिवं वितनुतामतनुप्रतापः ॥ २२ ॥

स्फारस्फुरत्फणिफणामणिदीप्रदीप्ति-
चित्रीयितत्रिजगतीजनचित्तवृत्तिः ।

श्रीअश्वसेनतनयः श्रितयक्षपार्श्वः
पार्श्वः श्रिये भवतु वः सुरसेव्यपार्श्वः ॥ २३ ॥
श्रीभारतावनिविभूषणवर्धमानः
शीतांशुशुभ्रयशसा परिवर्धमानः ।
कैवल्यबोधकमलाश्रयवर्धमानः
कल्याणकन्दजलदोऽवतु वर्धमानः ॥ २४ ॥
दुःप्रापतापशमनामृतगीरमानो
मानाद्रिकीलनकलाकुलिशायमानः ।
त्रैलोक्यवर्तिसकलामलतत्त्ववेत्ता
सार्वप्रभुर्भवतु वो भवभीतिभेत्ता ॥ २५ ॥
मोहान्धकारनिकरक्षयसप्तवाहाः
सल्लोककेकिकुलकेलिकलाम्बुवाहाः ।
तीर्थेश्वरा विहितसिद्धिवधूविवाहा
भूत्यै भवन्तु मदनेन्धनहव्यवाहाः ॥ २६ ॥
सद्बोधिबीजजनकं जनपापताप-
व्यापव्यपायकरणप्रसरप्रशस्यम् ।
हृष्यन्मुनित्रिशिखिनं कृतशस्यसंपत्-
संपत्तिमागमघनागममानयामि ॥ २७ ॥
श्रीवीरशासनविभासनबद्धकक्षा
हंसासना कुमतिशासनलब्धलक्ष्या ।
श्रीशारदा कृतविशारदबुद्धिरिद्ध-
श्रीः शारदेन्दुविशदद्युतिरस्तु शान्त्यै ॥ २८ ॥

---

१ एभिस्त्रिभिः काव्यैः प्रतिकाव्यं पठनाच्चतुर्विंशतिजिनानां स्तुतयो भवन्ति

इत्थं पुण्यसुधाब्धिधौतधिषणा येऽर्हच्चतुर्विंशतेः
स्तोत्राण्यद्भुतभक्तिभावितहृदः कुर्वन्त्यखर्वादराः ।
संसारार्णवपारमप्यपरमं निश्रेयसश्रेयसां
स्थानं जन्मजराविनाशरहितं गच्छन्ति ते शाश्वतम् ॥२९॥

॥ इति श्रीचतुर्विंशतिजिनस्तोत्रं स्तुतयश्चापि भवन्ति ॥

## चतुर्विंशतिजिनस्तवनम् ।

सकलमङ्गलभूरुहजीवनं जिनपतिं जगतीजनजीवनम् ।
नमत नाभिसुतं वरचिन्मयं गजगतिं जगति प्रभुतालयम् ॥१॥
अजितदेव! सुधारससोदरां विमलगाङ्गतरङ्गमनोहराम् ।
तव निशम्य गिरं जितदुर्मतां परमते रमते न मतिः सताम् ॥२॥
वरजितारिनरेश्वरसम्भवं भजत भव्यजनाः प्रभुसम्भवम् ।
भवनिवासहरं हयलाञ्छनं स्मरविकारविकाशहरं जिनम् ॥ ३ ॥
अव भवाद् भगवन्! भवभञ्जन! प्रणतसज्जनमानसरञ्जन! ।
रुचिरसंवत! संवरनन्दन! ध्रुवरमावर मामभिनन्दन! ॥४॥
मदनमानविमर्दनशङ्करं श्रयत केवलदीप्तिदिवाकरम् ।
सुमतितीर्थपतिं नतविष्टपं करणवारणवारमृगाधिपम् ॥ ५ ॥
प्रवरशर्मद! धर्मधुरोद्वहे धरणिनाथधरप्रथितोद्वहे ।
कमलचिह्न! जिन! त्वयि मानसं वरमते! रमते मम लालसम् ६
जिन! सुपार्श्व विभो! तव भारती भविकचित्तशिलीमुखमालती ।
दिशतु तीर्थिकवाग्भिरतामसा शमधुता मधुतासनसद्रसा ॥ ७ ॥

---

१ एतत्काव्यत्रयेण सह यदि पठ्यन्ते नमस्कारास्तदा स्तुतयो भवन्ति ।

वदननिर्जितदीप्तिरसौ श्रितः शितकरः किल लक्ष्मणदम्भतः
सपदि यं महसेनतनूद्भवं नमत तं मतपूतमनोभवम् ॥ ८ ।
रजतधौतशिलातलदीधितिं विरतिकैरविणीहिमदीधितिम् ।
लघु भजे सुविधिं मकरध्वजं जिनवरं नवरङ्गरतोरुजम् ॥ ९
रजतहारतुषारनिशाकरत्रिपथगाहरगौरगुणाकरम् ।
पथविहारपवित्रितभूतलं लसदयं सदयं श्रय शीतलम् ॥ १०
विविधरोगतरङ्गभयङ्करं कथमसौ तरताद्भवसागरम् ।
नमति विष्णुनृपाङ्गज ! यः पदौ न हि तवेहितवेगसुसिद्धिदौ ।
जिनपते ! वसुपूज्यनृपाङ्गज ! स्मरमहीरुहमत्तमतङ्गज ! ।
जय पुरन्दरवन्दित ! सन्मते ! विमलकोमलकोकनदद्युते ! ॥१२
विमलदेव ! विभो ! मम मानसं कुरु शमामृतधारणमानसम् ।
जिनपते ! यदि शासनमापते परमया रमयालमुरुद्युते ! ॥१३
त्रिभुवनाधिपनिर्मितमाननः शिवमनन्तजिनो वनजाननः ।
मम तनोतु समीहितदानतः सुरमणीरमणीयशमान्वितः ॥१४
नृपतिभानुकुलाम्बरभानवे घनतमोवनदाहकृशानवे ।
अममधर्मजिनेश ! नमोनमः शुभवते भवते भवतान्मम ॥ १५
सदयमानसदुःखनिवारक ! स्फुरितबोधजगच्छिवकारक ! ।
मुनिप ! शान्तिविभो ! शिवसंपदं सुनयनो नयनो विगतापदम्
वारिधिमन्थनमन्दरं विनयसादरनम्रपुरन्दरम् ।
श्री·शूरनरेशितुरुत्तमं श्रितनयं तनयं जिनसत्तमम् ॥ १७ ।
भुवनाद्भुतभूषण ! प्रसृतिसंसृतिवारिधिशोषण ! ।
गतान्तरदुस्तमःप्रवरसंवरसङ्गत ! ते नमः ॥१८।

१ एभिस्त्रिभिः

सुरनरोरगकिन्नरनायकप्रणत ! मल्लिविभो ! शिवदायक ! ।
त्वयि रता जनता लयमीहते शमरसेऽमरसेव्य ! जगत्पते ! १९
श्रयति यो मुनिपं मुनिसुव्रतं मदनमानहरं धृतसुव्रतम् ।
स इह जन्मजरामरणाकरे जिनपते ! न पतेद्भवसागरे ॥ २० ॥
प्रणतकौशिकशेखररत्नरुक्सलिलधौतपदाम्बुज ! नष्टरुक् ! ।
यतिपते ! कृतसज्जनसम्मदं नवनमेव नमे ! तव मुक्तिदम् ॥२१॥
हरिहरेन्द्रचतुर्मुखसंयुतं त्रिभुवनं लघु येन वशीकृतम् ।
प्रवरनेमिजिनेश ! जितस्त्वया स मदनो मदनोदक ! हेलया २२
मदकृतच्छविभासुरविग्रहं सपदि नाशितदुर्मतकुग्रहम् ।
य इह पार्श्वजिनं ननु सेवते स परमं परमं पदमश्नुते ॥ २३ ॥
जयति यः सुरसङ्गमभानहृत् जगति वीरजिनो जगतीसुहृत् ।
भवतु भीतिहरो मम सर्वदा स शरणं शरणं गुणसम्पदाम् २४

( इति नमस्काराः )

विषयभूरुहभञ्जनवारणा मम हरन्तु तमो भववारणाः ।
भविकनेत्रसुधाञ्जनसोदरा जिनवरा नवरावपयोधराः ॥ २५ ॥
भुवनभासिशिवाध्वनि दीपकं विविधहेतुनयार्थनिरूपकम् ।
भविकलोकचकोरनिशाकरं जिनमतं नमत प्रतिवासरम् ॥२६॥
एवं श्रीजिननायका यमकितैर्वृत्तैर्मया संस्तुताः
सभ्रभ्रामरनाथमौलिमणिरुक्सम्भारनीराजिताः ।
श्रीमत्सद्गुरुदेवरत्नमहिमभ्राजिष्णुपादाम्बुजा
जायन्तां सुखसंपदे तनुभृतां कुप्तोरुभद्रव्रजाः ॥ २७ ॥

॥ इति चतुर्विंशतिजिनस्तवनम् ॥

श्रीः।

## अथ चतुर्विंशतिकास्तवनं स्तुतयश्च।



जस्सासी चवणं चउत्थिदिवसे आषाढकिण्हे तहा
जम्मो निक्कमणं च जस्स कसिणे चित्तट्ठमीवासरे।
नाणे फग्गुणकिण्हिगारसि सिवं माहस्स तेरस्सिए
किण्हाए रिसहेसरं जिणवरं वंदामि तं सुंदरम् ॥ १ ॥
जो वेसाहविसुद्धतेरसि चुओ माहस्स सुद्धट्ठमी-
जाओ माहविसुद्धपक्खनवमी दिक्खं पवन्नो य जो।
सुद्धेगारसि पोसमासि विमलं जो संगओ केवलं
जो चित्ते सियपंचमी सिवगओ वंदेजियं तं जिणं ॥ २ ॥
जाया जस्स विसुद्धअट्ठमिदिणे गब्भट्ठिई फग्गुणे
मग्गे सुद्धचउद्दसीइ जणणं तप्पुण्णिमाए वयं।
नाणं कत्तियकिण्हपंचमिदिणे चित्तुज्जला पंचमी-
मुक्खे तं सिरिसंभवं गयभवं वंदे जिणं संभवं ॥ ३ ॥
जस्सासी वइसाइवासि चवणं सुद्धे चउत्थीदिणे
जम्मो माहविसुद्धबीयदिवसे तब्बारसीए वयं।
नाणे पोसचउद्दसी सुधवला वेसाहसुद्धट्ठमी
मुक्खे तं अभिनंदणं बहुगुणं भत्तीइ वंदे जिणं ॥ ४ ॥
सुद्धा सावणबीय जस्स चवणे जम्मे विसुद्धट्ठमी
वेसाहस्स तयग्गिमा य नवमी दिक्खादिणे विस्सुया।
चित्तेगारसि सुद्ध नाणि नवमी मुक्खम्मि तप्पच्छिमा
तं वंदे सुमइं पयासियमइं लोअग्गलद्धट्ठिइं ॥ ५ ॥

माहे सामलछट्ठि जस्स चवणे लोगाणमाणंदणे
जम्मे कत्तियबारसी सुकसिणा तत्तेरसी निक्खमे ।
नाणे पन्नरसी य चित्तधवला मुक्खे तहेगारसी
किण्हा मग्गसिरस्स सुप्पभजिणं वंदामि तं सामिणं ॥६॥

जाया लोगसुहा य जस्स चवणे किण्हट्ठमी भद्दवे
जम्मे जिट्ठसिता य बारसि तहा दिक्खाइ तत्तेरसी ।
छट्ठी सत्तमि फग्गुणस्स कसिणा नाणे सिवेणुक्कमा
तं तित्थेसमहं सुपासमणहं वंदामि हेमप्पहं ॥ ७ ॥

आसी पंचमि चित्तमासकसिणा गब्भट्ठिईवासरे
जम्मे जस्स य पोसबारसितिही किण्हा वए तेरसी ।
नाणे फग्गुणकिण्हसत्तमितिही मुक्खे पुणो सत्तमी
किण्हा भद्दवयस्स तं जिणमहं वंदामि चंदप्पहं ॥ ८ ॥

मासे फग्गुणि जस्स किण्हनवमी गब्भागमे संगया
किण्हा मग्गसिरस्स पंचमितिही जम्मे वये छट्ठिया ।
नाणे कत्तियतीय चंदधवला जाया य मुक्खागमे
मासे भद्दवयंमि सुद्धनवमी तं पुप्फदंतं नमे ॥ ९ ॥

गब्भाहाणदिणे विसाहकसिणा छट्ठी तहा जम्मणे
दिक्खाए चिय किण्हबारसितिही माहस्स जस्सा हिया ।
नाणे पोसचउद्दसी सुकसिणा मुक्खंमि वेसाहिया
किण्हा बीयतिही जिणं गयमलं वंदामि तं सीयलं ॥१०॥

जिट्ठे सामलछट्ठि जस्स चवणे जम्मे पुणो फग्गुणी
किण्हा बारसि तेरसी तह वए तंस्सग्गिमा आहिया ।

नाणे माह अमावंसी तह सिवे सामा तिया सावणी
सो सेयंसजिणो वियासियमणो विण्हूनिवानंदणो ॥ ११ ।
जस्सासी चवणम्मि जिट्ठनवमी सुद्धा तहा फग्गुणी
जम्मे किण्हचउद्दसी तह वए तस्सग्गिमामावसी ।
नाणुप्पत्तिदिणम्मि बीय सुतिही माहस्स चंदुज्जला
सुद्धासाढचउद्दसी सिवदिणे तं वासुपुज्जं थुणे ॥ १२ ॥
संसुद्धा वइसाहबारसतिही गब्भम्मि जस्सागमे
जम्मे निक्खमणे य माहधवला तीया चउत्थी कमा ।
नाणे पोसविसुद्धछट्ठि कसिणासाढी सिवे सत्तमी
तँ वंदे विमलं सुकित्तिधवलं तित्थंकरं निम्मलं ॥ १३ ॥
आसी सावणसत्तमीइ चवणं वेसाहतेरस्सिए
जम्मो चोद्दसि दिक्खनाणजुअलं सामातिही तिन्निवि ।
मुक्खो चित्तविसुद्धपंचमिदिणे जस्सारिनिकंदणं
वंदेऽणंतजिणं गुणद्दुमवणं तं कित्तिवल्लीघणं ॥ १४ ॥
वेसाही सुविसुद्धसत्तमितिही जस्सासि गब्भागमे
माही उज्जलतीय तेरसि कमा जम्मो तहा निक्खमे ।
नाणे पोससु पुन्निमा सिवगमे जिट्ठुज्जला पंचमी
जाया जस्स जयंमि तं जिणवरं धम्मं नमामीसरं ॥ १५ ।
मासे भद्दवयंमि जस्स चवणे किण्हा तिही सत्तमी
जम्मे जिट्ठसुकिण्हतेरसि तहा चाउद्दसी निक्खमे ।
नाणे पोसपसिद्धसुद्धनवमी मुक्खे पुणो तेरसी
जिट्ठे कज्जलसामली थुणिवरं तं संतितित्थंकरं ॥ १६ ॥

जाया सावणमासकिण्हनवमी गब्भावहारे तहा
वेसाहस्स चउद्दसी सुकसिणा जम्मे वए पंचमी ।
नाणुप्पत्तिदिणंमि चित्तधवला तीया तहा निव्वुई
वेसाहे कसिणे पडिवयदिणे तं कुंथुनाथं थुणे ॥ १७ ॥

मासे फग्गुणि सुद्धबीय चवणं जस्सासि मग्गस्सिरे
सुद्धाए दसमीइ जम्मणमहो एगारसीए वयं ।
कत्तीसुद्धदुवालसीइ विमलं नाणं तहा सुंदरं
मुक्खं मग्गसिरस्स सुद्धदसमी वंदे जिणं तं अरं ॥ १८ ॥

सुद्धे फग्गुणपक्खि जस्स चवणे जाया चउत्थी तहा
सुद्धा मग्गसिरस्स जम्मवयसन्नाणेसु एगारसी ।
मुक्खे फग्गुणबारसी सुधवला सो मल्लितित्थेसरो
मल्लीफुल्लविसुद्धकित्तिपसरो हो तुम्ह सुक्खंकरो ॥ १९ ॥

आसी सावणपुण्णिमाइ चवणो जिट्ठस्स किण्हट्ठमी
जम्मे फग्गुणबारसी सिय वए नाणे य सा सामला ।
मुक्खे जस्स सुजिट्ठकिण्हनवमी जाया सया सुवयं
तं वंदामि सुमित्तरायपउमादेवीसुअं सव्वयं ॥ २० ॥

जस्सासोयसुपुण्णिमाय चवणे जम्मे पुणो सावणी
किण्हा अट्ठमिया तहेव नवमी आसाढकिण्हा वए ।
नाणे मग्गसिरस्सिगारसि सिया मुक्खे पुणो सामली
वेसाही दसमी सया सिवगमी सो देउ सुक्खं नमी ॥२१॥

किण्हा कत्तियबारसी य चवणे जस्सासि जम्मे पुणो
सुद्धा सावणपंचमी तह वए छट्ठी य तस्सग्गिमा ।

आसोमावस नाणि अट्ठमितिही आसाढसुद्धा सिवे
तं वंदे सुररायवंदियपयं नेमीसरं संपयं ॥ २२ ॥
किण्हा चित्तचउत्थि जस्स चवणे सा चेव नाणे तिही
जम्मे जस्स य पोसकिण्हदसमी एगारसी निक्खमे ।
मुक्खे सावणसुद्धअट्ठमितिही जाया जए विस्सुया
वंदे पासजिणेसरं भयहरं तं मेहकंतीहरं ॥ २३ ॥
आसाढे धवलाइ छट्ठि चवणं चित्तस्स तेरस्सिए
सुद्धाए जणणं सुकिण्हदसमी दिक्खा य मग्गस्सिरे ।
जस्सासी वइसाहसुद्धदसमी नाणं जणाणंदणं
मुक्खो कत्ति अमावसाइ तमहं वंदामि वीरं जिणं ॥२४॥
जे वेमाणियनारयत्तण चुया गब्भं गया जम्मणं
पत्ता रायकुलेसु पाविय परं दिक्खं च निब्बंधणम् ।
कायं कम्मखयं सुलद्धविमलन्नाणा सिवं जे गया
तीयाणागय वट्टमाणय जिणा ते दिंतु सुक्खं सया ॥२५॥
अंगेगारसुवंगबारसदसप्पाइन्नछच्छेयगा
मूलग्गंथचउक्क नंदिअणुओगद्दारसंजुत्तया ।
गंथा आगमसंगया जियहिया चत्ताल पंचाहिया
वट्टंता अहुणा अणाइ निहणा मे हुंतु चित्तट्ठिया ॥ २६ ।
पण्णत्ती वइरुट्ट रोहिणि महामाणस्सिया माणसी
मासेगोरी कालि समानवी पविधरा गंधारि वज्जंकुसी ।
जक्खा नरदत्त सिंखल महाजाला महाकालिया
नाणे पोसं मुक्खविसं दिसंतु सययं विज्जासुरी बालिया ॥२७।
सिद्धे पद्यत्रयेण समं पठनात् चतुर्विंशतिजिनानां स्तुतयो भवन्ति ।

इइपंचकल्लाणं गुणगणठाणं चउवीसइ जिणथुत्त वरं ।
मुणिउदयपहाणं धम्मनिहाणं पभणंताणं कित्तिकरं ॥२८॥

॥ इति चतुर्विंशतिकास्तवनं स्तुतयश्च ॥

संवत् १८ सडसठिना वर्षे आषाढमासे शुक्लपक्षे दशमीतिथौ श्रीचन्द्रवासरे श्रीभृगुकच्छबंदिरे श्रीमुनिसुव्रतजिनप्रसादात्, लिखितं पं० राजेन्द्रसागरेण ॥

---

## श्रीचतुर्विंशतिजिनस्तुतयः ।

जयपयउपयावं मेहगंभीररावं
भवजलनिहिनावं नायनीसेसभावं ।
हणियकुसुमचावं दोसकंतारदावं
पढमजिणमपावं वंदिमो छिन्नतावं ॥ १ ॥

सिवनिलयनिलुक्कं रागदोसेहिं मुक्कं
जणजणियचमक्कं भिन्नसंसारचक्कं ।
नमह नमिरसक्कं मोहसेणाधसक्कं
अजिअमजिअचक्कं नायतेलुक्कतक्कं ॥ २ ॥

पणयकयपसाया कामदिन्नाविसाया
दलियभवविसाया पत्तनिव्वाणसाया ।
सुरतरुमणिपाया दिंतु नालीयछाया
सिवसुहमणपाया संभवेसस्स पाया ॥ ३ ॥

विलसिरगुणसत्थं सव्वलोए पसत्थं
पयडियपरमत्थं कम्मनासे समत्थं ।

पसमियकुसुमत्थं नाणनिव्वाणतत्थं
समणह समणहत्थं(?)तित्थनाहं चउत्थं ॥ ४ ॥

सिरिसुमइजिणेसं भत्तिरत्तीदिणेसं
गयसयलकिलेसं मुक्कनीसेसलेसं ।
पणयपयसुरेसं लद्धिसिद्धीनिवेसं
फुरियनयविसेसं वंदिमो सायसेसं ॥ ५ ॥

कमलविमलगेहं नाणलच्छीइगेहं
जणजणियमणेहं सीलसंपत्तरेहं ।
सुकयवणसुमेहं भत्तिसंभत्तिलेहं
पउमपहमनेहं तित्थनाहं नमेऽहं ॥ ६ ॥

वरकणयसवण्णो लोअवित्थिण्णवण्णो
परमपयपवण्णो तिण्णसंसाररण्णो ।
असरिसगुणवण्णो पुण्णकारुण्णपुण्णो
हवउ जगसरण्णो मे सया सो पसन्नो ॥ ७ ॥

विसयविससुमंतं छित्तु सुद्धं वयं तं
चइअभवमणंतं जो गओ मुत्तिकंतं ।
अणुदिणमरिहंतं लोअथूअं पसंतं
परमगुणमहंतं सेव चंदप्पहं तं ॥ ८ ॥

जयपयउजसोहं पत्ततेलुक्कसोहं
भुवणविहियबोहं दड्ढकम्मप्परोहं ।
कयकरणनिरोहं भग्गकंदप्पजोहं
सुविहिजिणममोहं वंदिमो भिन्नमोहं ॥ ९ ॥

हयदुरियविहारं मुत्तिकंतोरुहारं
गयसयलविआरं पाववज्जप्पहारं ।
परममहिमभारं पत्तसंसारपारं
नमह महिअसारं सीयलं सत्तवारं ॥ १० ॥

पयडियवरदिट्ठी धम्मनिम्मायपुट्ठी
निरुवमसुहमट्ठी दिन्नतेलुक्कतुट्ठी ।
मम विविहकुदिट्ठी पंकनित्थारलुट्ठी(?)
कुसुलसमयदुट्ठी देउ सेयं सुदिट्ठी ॥ ११ ॥

परिहरियसरज्जो पत्तपुण्णप्पवज्जो
अमरनियरपुज्जो रोससेलेसवज्जो ।
जणमणकयचुज्जो कम्मनिग्घायसज्जो
कुणउ मम णवज्जो मंगलं वासुपुज्जो ॥ १२ ॥

उवसमरसतित्तं कित्तिमो सप्पवित्तिं
विमलममलवित्तिं केवलालोअचित्तं ।
कुमुयविलयचित्तं लोअबोहंगचित्तं
तिहुअणजणचित्तं फुल्लनालीयचित्तं ॥ १३ ॥

जडिमतिमिरहंसो जोतिलोआवयंसो
सिवरमणिरिरंसो निम्मलुत्तुंगवंसो ।
अमरकयपसंसो मुत्तकम्मप्पभंसो
कुणउ मम सिवं सोऽणंततित्थेसहंसो ॥ १४ ॥

पयडियवरधम्मं खीणनीसेसकम्मं
वियलियवरधम्मं पत्तनिव्वाणसम्मं ।

अइसयसयरम्मं नारयाणंदिजम्मं
पणमह सिरिधम्मं भिन्नभावारिमम्मं ॥ १५ ॥

कणयसरिसकंती कंतसद्दंतपंती
फुरिअपरमसंती नट्ठनीसेसभंती ।
भवगुरुतरुदंती पत्तपावोपसंती
भुवणजणियसंती मंगलं देउ संती ॥ १६ ॥

वर मुणिगयझेयं देवगंधव्वगेयं
जणियसयलजेयं नायनीसेसनेयं ।
कयकलिमलढेयं निच्चमच्चेदमेयं
भवणजणियसेयं कुंथुनाहं मुवेयं ॥ १७ ॥

गुरुअगुणगरिट्ठं भग्गवग्गंतरिट्ठं
परमरिसिवरिट्ठं नट्ठकम्मट्ठकट्ठं ।
तिजयसिरिनिविट्ठं लोअनित्थारनिट्ठं
अरजिण ! तुममिट्ठं वंदिमो सव्वजिट्ठं ॥ १८ ॥

सुचरिअजिअमल्ली भग्गलोगंतसल्ली
करणमयणसल्ली भिन्नसंसारपल्ली ।
नियडिवियडवल्लीच्छेअतिक्खासिवल्ली
समरियजयमल्लीभावमप्पेउ मल्ली ॥ १९ ॥

सतणजयतमालं रागरोसं तिकालं
करणहरिणजालं पत्तदेविंदमालं ।
निरुवमगुणजालं पाणिणं कप्पसालं
नमह महविसालं सुव्वयं सामिसालं ॥ २० ॥

जणकुमयमयंकं फुल्लनीलुप्पलंकं
    हरियसयलपंकं मोहदिन्नाभिसंकं ।
सिववहुमहिअंकं सोसि अन्नाणपंकं
    नमिजिण विकलंकं संभरामो विसंकं ॥ २१ ॥
भवदवजलवाहं नट्ठकम्मट्ठबाहं
    जणकयसिवलाहं केसवंदोलिबाहं ।
गुणजलहिसगाहं दिन्नतेलुक्कछायं
    सयलसिरिसणाहं वंदिमो नेमिनाहं ॥ २२ ॥
तिजयकयपयासो लोयसंपूरियासो
    सिवनयरिनिवासो मोहदिन्नप्पवासो ।
गयविसयपिवासो सव्वदोसप्पणासो
    वियलियभवपासो निव्वुइं देउ पासो ॥ २३ ॥
कणयसमसरीरं मोहमल्लेगवीरं
    दुरियरयसमीरं पावदावग्गिनीरं ।
सुगहियभवतीरं लोअलंकारहीरं
    पणमह सिरिवीरं मेरुसेलेसधीरं ॥ २४ ॥

सर्वजिनस्तुतिः—

समतिमिरदिणिंदा पुण्णपायारविंदा
    कुमुयकमलचंदा दड्ढसंसारकंदा ।
विसयविसनरिंदा भत्तदेविंदविंदा
    परमसुहममंदा दिंतु सव्वे जिणिंदा ॥ २५ ॥

जिनमतस्तुतिः—

सयलगुणनिहाणं मुक्खसंमग्गजाणं
    विविहगमपमाणं दिन्नतेलुक्कताणं ।

महियकुमयमाणं सवसिद्धीनिहाणं

.................................................|| २६ ||

श्रुतदेवतास्तुतिः—

जिणपयपणयंगी निम्मला बारसंगी
वररमणकुरंगी संघरक्खे विहंगी ।
ससहरसरिसंगी चंगसंदेरभंगी
भवभय(व)यरंगी देउ सुक्खं सुअंगी ॥ २७ ॥

॥ इति चतुर्विंशतिजिनस्तुतिः समाप्ता ॥

तपापक्षे श्रीसोमसुंदरसूरिशिष्यपण्डितशिरोवतंस पं० रत्नहंसगणिशिष्येण लिखिता । कडीग्रामे । पं० रत्नहंसगणिपादाः, माणिक्यनन्दिगणि–माणिक्यमन्दिरगणि–समयसारगणि–भावराजगणि–कुशलरत्नमुनयः ॥

---

श्रीः ।

## अथ श्रीसोपारकपुरमण्डनऋषभदेवस्तुतयः ।

श्रीसोपारकपत्तनाद्भुतरमारामाशिरःशेखरं
श्रीनाभिक्षितिपालवंशकमलाप्रोल्लासने भास्करम् ।
माद्यन्मोहमदाष्टकक्षयकरं मोक्षाध्वनिस्पन्दनं
भक्त्याऽऽदीशजिनं स्तुवे प्रतिदिनं श्रीजीवितस्वामिनम् ॥१॥
पञ्चैरावतपञ्चभारतमुखक्षेत्रेषु ये संस्थिता
भूतानागतवर्तमानजिनपा विश्वत्रयीवन्दिताः ।
लोकालोकविलोकिकेवलमहाज्ञानश्रिया संश्रिता-
स्तेषां श्रीपदपङ्कजं भवमिदे भूयाज्जिनानां सदा ॥ २ ॥
श्रीसिद्धान्ततरुः पदत्रयमहामूलोऽखिलाङ्गस्फुर-
च्छाखाभिः समलङ्कृतो वरतरोपाङ्गप्रशाखान्वितः ।

अर्थश्रेणिसुगन्धिपुष्पनिकरैः संवासिताशामुखो
देयान्मोक्षफलं जरामृतिहरं भव्यावलीनां सदा ॥ ३ ॥
श्रीमन्नादिजिनेन्द्रपादकमलप्रोद्यन्नखालीविभा-
श्रेणीनव्यपरागपूरमधुपः श्रीगोमुखो यक्षराट् ।
विघ्नौघप्रबलान्धकारनिकरप्रध्वंसनेऽहर्मणि-
र्भव्यानां सततं तनोतु विशदा नानाविधाः सम्पदः ॥ ४ ॥

---

## श्रीमज्जिनस्तवनम् ।

श्रीकुङ्कणाख्यविषयस्थितपत्तनश्री-
सोपारकावनितलामलभूषणाभ ! ।
श्रीमद्युगादिजिननायक ! मूलिनाहं
भक्त्या वहे तव पदाब्जयुगं जिनेश ! ॥ १ ॥
राज्यं विहाय सकलं तृणवद्गृहीतः
श्रीसंयमो नरसुरासुरसाक्षिकं यैः ।
ते तीर्थपा ऋषभदेवमुखाः सुखानि
त्रैलोक्यलोकनिवहस्य सदापि दद्युः ॥ २ ॥
श्रीतीर्थनाथमुखपङ्कजजन्मभूमि-
र्मोहान्धकारनिकुरुम्बविनाशभानुः ।
उद्भासिताऽखिलजगत्त्रितयस्वरूपः
श्रीआगमो दिशतु मे शिवसौख्यलक्ष्मीम् ॥ ३ ॥
सोपारकप्रवरतीर्थपतेः पदाब्जं
या सेवते मधुकरीव मुदा सदापि ।
चक्रेश्वरी सुरसुरीनिकरेण सेव्या
सा सकललोकनिवहस्य सुखं चिनोतु ॥ ४ ॥

---

ॐनमः सर्वविद्भ्यः ।

# श्रीचतुर्विंशतिजिनस्तुतयः ।



जय वृषभजिनाभिष्टूयसे निम्ननामि-
जडिमरव्यसनाभिर्यः सुपर्वाङ्गनाभिः ।
तम इह किल नाभिः क्षोणिभृत्सूनुनाऽभि-
द्रुतभवनमनाभिक्षान्तिसंपत्कुनाभिः ॥ १ ॥

प्रकटितवृषरूप ! त्यक्तनिःशेषरूप-
प्रभृतिविषयरूप ! ज्ञातविश्वस्वरूप ! ।
जय चिरमसरूपः पापपङ्काम्बुरूप !
त्वमजित ! निजरूपप्रास्तसज्जात्यरूप ! ॥ २ ॥

जय मदगजवारिः सम्भवान्तर्भवारि-
व्रजभिदिह तवारिश्रीर्न केनाऽप्यवारि ।

स त्वमिति गम्यते, सनाभिः सदृशः येन त्वयेति गम्यम्, णभि तु हिंसायाम्, कुनाभिर्निधानम्, ननु वाक्यान्तरप्रवेशे, न विच्छिन्नं खण्डितं इति वाग्भटालङ्कारवचनादनुचितमिहेदम्, नैवम्, अलङ्कारचूडामणौ क्वचि गुणोऽपीति भणनाद् यमकपदप्राचुर्याच्च वाक्यान्तरप्रवेशेऽपि न दुष्टम् ॥ १ प्रशस्यधर्म, प्रशस्ते रूपप् प्रत्य०, इन्द्रियार्थानां रूपाणि भेदाः, अनन्यसदृ निरुपमः, जात्यं सुवर्णम् ॥ २ ॥ वारिः जगबन्धभूः, अराः सन्त्यस्मिन् अ चक्रं 'रथाङ्गं रथपादोऽरिचक्र'मिति वचनात्, तस्य श्रीर्लक्ष्मीः शोभा वा, केनाऽ हरिहरादिना स्तव्या वा, अङ्गीकृतसंसारशत्रुध्वंसनस्त्वं वर्तसे इत्यध्याह्रियते, श्रीभ कामस्तस्याऽरिर्वैरी, यद्वा श्रिया भातीति क्विप्प्र० ततः श्रीभा पञ्चत्रिंशद्वचन गणैर्भान्ती वारिः सरस्वती वाणी यस्य सः, उक्तं चानेकार्थे 'वारिर्घटी सरस्वत्

यदधिकृतभवारिस्रंसनः श्रीभवारिः
प्रशमसुखरिवारिः प्रोन्नमद्दानवारिः ॥ ३ ॥
अकृतशुभनिवारं योऽस्तरागादिवारं
सुविनतमघवाऽरं संवरोद्धः सुवारम् ।
मदनदहनवारं दालितान्तर्भवारं
नमत सपरिवारं तं जिनं सर्ववारम् ॥ ४ ॥
तव जिन ! सुमते न प्रत्यहं तन्यते न
स्तुतिरिति सुमते नक्तुत्तमो निष्कृतेन ।
यदिह जगति तेन द्राग् मया सम्मतेन
ध्रुवमिह दुरितेन श्रीभवाव्यंहितेन ॥ ५ ॥
परिहृतनृपपद्म ! श्रीजिनाधीश ! पद्म-
प्रभ ! शदरण ! पद्मद्युत्तपोहंसपद्म ! ।
त्वदखिलभविपद्मव्रातसम्बोधपद्म !
स्वजनगतविपद्म येतु शर्माङ्कपद्म ! ॥ ६ ॥
दुरितमभिगमोऽहंपूर्विकाचक्रमोहं-
त्यसमतमशमोहं कारयद्यः समोहम् ।

---

गजबन्धभुव्यपि' इति, शिखरी वृक्षः 'अनतो लुप्' दानवारयो देवाः, अत्र अरि-शब्दप्रयोगोऽर्थान्तरे बहुशोऽपि न दुष्टु ॥ ३ ॥ शुभानि वारयतीति सुखेन वार्यते सुवार् जलम्, दुलण् उत्क्षेपे, अरिसमूहम्, सर्वकालम्, ॥ ४ ॥ मया इति सम्बन्धः । इति वक्ष्यमाणप्रकारेण निष्करणं निष्कृतं निरासस्तस्मिन् इन सूर्य ! सर्व-साधारणत्वादमीष्टेन मैत्र्यादिभावनान्वितत्वात् ॥ ५ ॥ नृपपद्मा राज्यलक्ष्मीः, पदैकदेशे पदसमुदायोपचारात्, पद्मरागमणिवद् द्युतिः तपसां निधिविशेषः हंसः श्रेष्ठः इत्यनेकार्थः, पद्मः स्वजनः सूर्यः तृतीयस्य इति मिलित्वा इस्य नो न श्लिष्टभावात् ॥ ६ ॥ गजपतिः पूर्वोत्तरभागयोरेकाक्षरत्वेपि यमकत्वापत्ति-

कृतकरणदमो हन्ताप्तलोभं नुमोऽहं-
मतिहृतमसमोहं तं सुपार्श्वं तमोहम् ॥ ७ ॥

समतृणमणिभावो ज्ञातनिःशेषभावः
प्रहतसकलभावः प्रत्यनीकप्रभावः ।
कृतमदपरिभावः श्रीशचन्द्रप्रभावद्-
द्विजपतितनुभावस्त्यक्तकामस्वभावः ॥ ८ ॥

निजपतिसुविधेयः स्यात्त्वदाज्ञाविधेया-
प्रवण इह विधेयः प्रस्फुरद्भागधेयः ।
त्रिजगदनपधेयः श्लाघ्यसन्नामधेय-
श्रयति शुभविधेयस्तं लसद्रूपधेयः ॥ ९ ॥

य इह नियतकामं मुक्तराज्यादिकामं
प्रणतसुरनिकामं त्यक्तसद्भोगकामम् ।
नमति स निजकामं शीतल ! त्वां प्रकामं
श्रयत कितमकामं सार्विका श्रीः स्वकामम् ॥ १० ॥

---

भङ्गदोषाभावः, निरुपमतमप्रशमः, मोहसहितं, हन्त निश्चयादौ, अहंमतिरज्ञा हरतीति तम्, असम ऊहो विमर्शो यस्य तम् ॥ ७ ॥ भावोऽभिप्रायः, भा धर्मास्तिकायादयः, 'भावोऽभिप्रायवस्तुनो'रित्यनेकार्थः, प्रभावः प्रतापः । परिभा पराभवः । भव्यानीति गम्यम् । चन्द्रवच्छरीरस्य भावः सुवर्णत्वात् स्वरूपं यस ॥८॥ विधेयं कार्यं तत्करणे प्रवणः, विधेयो विनयस्थः स्यात्, भागधेयं भाग्यम् यद्वा त्रिजगदनपधेयः, श्लाघ्यं सन्नामधेयं यस्य, शुभभाग्यं रूपमेव रूपधेयं यस्ये त्यत्र 'नामरूपभागाद् धेयः' इति स्वार्थे धेयप्रत्ययः ॥ ९ ॥ काममभिलाषं निकाम मतिशयेन, भोगो भोग्यवस्तूनि, कामश्च काम्यवस्तूनि च साभिलाषं यथा स्यात्तथा काममत्यन्तं, कः श्रयते को भजते ? इह त्यादिसर्वादेः स्वरेष्वन्त्यात् पूर्वोक्त इत्यने श्रयतिक्रियायाः अन्त्यस्वरात् प्राक् प्रत्ययः, अकामं निरीहं, यद्वा अकं दुः आमयति पीडयतीति अकामः, सर्वज्ञसम्बन्धिनी, स्वकामं स्वेच्छया ॥ १० ॥

विषमविशिखदोषाचारि(वा)रिप्रदोषा
प्रतिविधति सदोषाप्यस्य किं कालदोषा ।
य इह वदनदोषापार्चिषाऽक्षालिदोषा
तनुकमलमदोषा श्रेयसा शस्तदोषा ॥ ११ ॥
कृतकुमतपिधानं सत्त्वरक्षावधानं
विहितदमविधानं सर्वलोकप्रधानम् ।
असमशमनिधानं सञ्जिनं सन्दधानं
नमत सदुपधानं वासुपूज्याभिधानम् ॥ १२ ॥
भवदवजलवाहः कर्मकुम्भाद्यवाहः
शिवपुरपथवाहस्त्यक्तलोकप्रवाहः ।
विमल ! जय सुवाहः सिद्धिकान्ताविवाहः
शमितकरणवाहः शान्ततृड्हव्यवाहः ॥ १३ ॥
जिनवर ! विनयेन श्रीशशुद्धाशयेन
प्रवरतरनयेन त्वं नतोऽनन्त ! येन ।

---

पञ्चबाण एव रात्रौ चरणशीलत्वाद्दोषाचारी राक्षसस्तस्य चारेण प्रकृष्टं दोषस्थलं यस्यां, स किं प्रतिकूलं करोति ? विधत् विधाने, कलिकाल एव दोषा रात्रिः वदनमेव दोषापश्चन्द्रस्तस्यार्चिषा, क्षलण् शौचे, दोषा एवाऽनल्पकमलानि तेषां मदो विकाशस्तं उषति सङ्कोचाद्दहति, श्रेयसा श्रेयांसेन शस्तौ दोषौ बाहू यस्य ॥ ११ ॥ पिधानमाच्छादनं, अवधानं सावधानम्, शमनिधानं शोभनतपश्चरणम् ॥ १२ ॥ कर्माण्येव कुम्भादयः, आदिशब्दात् स्थालीकरकादयः, तेषां पाकाय दहनाय वा अवाहः पाकस्थानम्, नन्वेवं पाकसादृश्यात् कर्मणां दार्ढ्यमुक्तं स्यात्तच्च भगवतस्तक्षणप्रवणत्वादौचितीं नाऽञ्चन्ति, अत्रोच्यते, अपक्वकुम्भादयो हि भग्ना अप्यविनष्टमृदुद्रव्यत्वाज्जलादिसम्पर्कस्येति पुनः सद्रूपतां भजन्ते, नतु पक्वकुम्भादय इव कर्मणीत्यदोषः, सार्थवाहः तात्त्विकत्वात् शोभनभुजः, सिद्धि-कान्तां विवहति परिणयतीति अण् प्र०, शमितविषयतृष्णाभिः ॥ १३ ॥ वस्त-

भविकमलचयेन स्फूर्जदूर्जस्व्ययेन
  द्विरदगतिनयेन त्वेन भाव्यं सयेन ॥ १४ ॥
जडिमरविसधर्मंभुक्तदानादिधर्मा
  त्रुटितमदनधर्मन्यकृता प्राज्ञधर्म ! ।
जयति नवरधर्म त्यक्तसंसारिधर्म
  प्रतिनिगदितधर्मद्रव्यमुख्यार्थधर्म ! ॥ १५ ॥
यदि नियतमशान्तिं नेतुमिच्छोपशान्तिं
  समभिलषत शान्तिं तद् द्विधाऽप्याप्तशान्तिम् ।
प्रहृतजगदशान्तिं जन्मतोऽप्यात्तशान्तिं
  नमत विनतशान्तिं हे जना ! देवशान्तिम् ॥ १६
ननु सुरवरना(थ)त्वं न नाथे नृनाथ !
  त्वमपि विगतनाथः किन्त्वहं कुन्थुनाथ ! ।

---

मतपोन्यायमार्गवर्तिना, यद्वा प्रवरतरा नया नैगमादयो यस्य सः हे इन ! ह ऊर्जस्वी अयो यस्य स तेन, द्विरदगतिवत् नयो यानं गमनं यस्य स तया लक्ष्म्या सह वर्तते तेन ॥ १४ ॥ रविसमान, त्रुटितमदनचाप 'धर्मो य मापुण्यस्वभावाचारधन्वसु, सत्सङ्गेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि' इत्यनेन मूलानां धर्मः स्वभावः, संसारिजनाचारधर्मास्तिकायद्रव्यमुख्यपदार्थानां उपनिषद्रहस्यं येन ॥ १५ ॥ अशान्तिं अकल्याणं, उपशान्तिमुपशमं, युष्माकमस्तीत्युपस्कारः, यदि च समभिलषत यूयमिति गम्यम्, क कल्याणं, यदनेकार्थः । 'शान्तिर्भद्रे शयेऽर्हती'ति, तस्माद्धेतोः द्वेधाऽपि पूर्व प्रकारद्वयेनाऽपि, शान्तिं नमतेति सम्बन्धः, शान्तिर्निर्वाणं 'निर्वाणे स्याच्छि भावः शान्तिर्नैश्चिन्त्यमन्तिक' इति शेषवचनात्, पुराविर्भूताशिवोपश प्रहृतभुवनाशिवं, उपलक्षणत्वाद् गर्भवासाद्यपि, यदार्षम्-'आओ असिवोव कम्मगए तेण संति जिण्णुत्ति,' अङ्गीकृतशमम्, विनम्रीभूतब्रह्मशान्तिम ॥ १६ ॥ ननुशब्दो वाक्यारम्भनिश्चयामन्त्रणेषु इह, ततस्त्वं न नाथेति पद

प्रकुरु जिन ! सनाथः स्यां यथाऽघोपनाथ
　　प्रणतविबुधनाथः प्राज्यसच्छ्रीसनाथ ! ॥ १७ ॥
अवगमसवितारं विश्वविश्वेशितारं
　　तनुरुचिजिततारं सद्दयासान्द्रतारम् ।
जिनमभिनसताऽरं भव्यलोकावतारं
　　यदि पुनरवतारं संसृतौ नेच्छताऽरम् ॥ १८ ॥
अनिशमह्निनि शान्तं प्राप्य यः सन्निशान्तं
　　नमति शिवनिशान्तं मल्लिनाथं प्रशान्तम् ।
अधिपमिह विशां तं श्रीर्गता चावशाऽन्तं
　　श्रयति दुरितशान्तं प्रोज्झ्य नित्यं वशान्तम् ॥ १९ ॥
निदधतमथ वासः प्रोल्लसच्छुद्धवासः
　　परिहृतगृहवासः स्यांसकेयस्य वासः ।

---

गम्यते । 'अघं दुःखे व्यसनैनसो' रित्यनेकार्थः । तान्युपनाथति उपतापयतीति, प्राज्या प्रभूता ॥ १७ ॥ अवगमेन ज्ञानप्रकाशेन सूर्यं, समग्रविश्वनायकं, तारं कनकं, 'रद्‌रुचिततार' मिति वा पाठः । ते च ताराः निर्मला मौक्तिकानि नक्षत्राणि वा । यदनेकार्थः 'तारो निर्मलमौक्तिके । मुक्ताशुद्धौ च नादे च नक्षत्रे नेत्रमध्ययो' रित्यादि, सान्द्रा बहला सार्द्रा वा । वीतरागादन्यैस्तारयितुमशक्यं, अवतरणं नो कृतम् ॥ १८ ॥ नितरामुपशमवन्तं, प्रभातसमयं, कल्याणहेतुत्वात् तन्मयत्वाद् कल्याणभवनं, यद्वा शिवं मुक्तिपदमेव निशान्तं तत्र लीनत्वात् सदनं यस्य स तम् । सौम्याकारं, इह अस्मिन् जन्मनि विशां नराणां श्रीः अन्तर्निकटं गता प्राप्तासती । यदनेकार्थः—'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवे-ऽपी'ति, तत्, पुनः प्राग्भ्रमयश्रितत्वादवशा, दुरितानां शान्तं शमनं यत्र तम्, वशा स्त्री वन्ध्यगवी वा, यदाह–'वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपी'ति, तस्या अन्तःस्वरूपं चपलत्वं निःफलत्वं वा तं प्रोज्झ्य ॥ १९ ॥ धारयामास वेषोज्ज्वलत्वात् शोभनवासः इत्यत्र योगः, प्रोल्लसच्छुद्धवासः, मन इति 'उपान्वध्या-

विहितशिवनिवासः प्रत्तमोहप्रवासः
स मन इह भवासः सुव्रतो मेऽध्यवासः ॥ २० ।

समनमयत बालः शात्रवान् योऽत्रबालः
प्रकृतिरसितबालः स्रस्तरुक्चक्रवालः ।
जयतु नमिरबालः सोऽधरास्तप्रबालः
स्वमितविजितबालः पुण्यवल्ल्यालवालः ॥ २१ ॥

जितमुद नम नेमे नानिशं नाथ! नेमे!
निरुपमशमनेमे! येन तुभ्यं विनेमे ।
निकृतिजलधिनेमेः सीरमोहद्रुमेने
प्रणिदधति न नेमे तं परा अप्यनेमे ॥ २२ ॥

अहिपतिवृतपार्श्वं छिन्नसम्मोहपार्श्वं
दुरितहरणपार्श्वं संनमध्यक्षपार्श्वम् ।

---

क्वस' इत्यनाधारेऽपि द्वितीया, भवं अस्यति क्षिपतीति, ध्यानवशान्मम म[illegible]
स्थितः ॥ २० ॥ समयामास योऽलः वा यदार्षम्–'पणया पढंति मिवा[illegible]
अम्मिह्य जिणम्मि भणन'मिति, अपरिमितत्वात् श्यामकुन्तलः, रोगसमूहः, [illegible]
गतजाड्यः स्वमिति । न विजितो वालो ह्रीबेरापरपर्यायो येन ॥२१॥ अर्हल्लक्[illegible]
नायक! निरुपमशमिषु नेमिरिव नेमिः सीमाग्रं, अथ चक्रधारार्थस्यैव नेमिश[illegible]
स्योपचारात् सीमार्थत्वम्, यद्वा कीदृशाय तुभ्यम्, निरुपमशमनेमे इतिमयोऽर्थे
व्ययम्, यदुक्तं वामनालङ्कारवृत्तौ–नेमेशब्दो निपातेषु त्वया मया इत्येतस्मिन्नर्थे
येनमयेति, माया अम्भोधिमेखलायाः पृथिव्या सीराध्ययन्ति, द्वौ नञौ प्रकृता
परावैरिणेः (?) परतीर्थिका वा परा इति नवभ्यः पूर्वेभ्यः बालसङ्ग अने
संपूर्णा ॥ २२ ॥ छद्मस्थावस्थायां धरणेन्द्रेण निजभोगेन वेष्टितपार्श्वं, छिन्नं वि[illegible]
व्यामोहक्षयान्मयोऽपायो येन तम्, यदभिधानचिन्तामणिवृत्तिः–पार्श्वमनुजरूप[illegible]
इति सन्निधिहितसेवापरदेवानुभावाद्विघ्नविघातकृत् पर्यन्तस्तुपं, इह यक्षलक्ष[illegible]
[illegible] विशेषणत्वेन विवक्षितत्वात् कर्मधारयः । [illegible] ईश्वरस्तस्य समीपं, [illegible]

अशुभनम उपार्श्वं न्यकृतामं सुपार्श्वं
    वृजिनविपिनपार्श्वं हे जिना देवपार्श्वम् ॥ २३ ॥
त्रिदशविहतमानं सप्तहस्ताङ्गमानं
    दलितमदनमानं सद्गुणैर्वर्धमानम् ।
अनवरतममानं क्रोधमत्यस्यमानं
    जिनवरमसमानं संस्तुवे वर्धमानम् ॥ २४ ॥
जिन ! तव गुणकीर्तेर्विश्वविघ्नस्तकीर्ते-
    र्विगलदपरकीर्तेर्यद्गिरा धर्मकीर्तेः ।

---

इति काव्यकल्पलतावचनात् । तत्समीपे हि तस्य चन्द्रमौलित्वेन तमसामपास्ति-र्विदितैव गुणसंस्थानत्वात् पर्शुसमूहम् ॥२३॥ कन्दर्पदर्पं, अनहङ्कारं, अत्यर्थं क्षिपन्तम् । अश भक्षणे 'उपसर्गादस्यत्यूह्योः' इत्यात्मनेपदम्, अनन्यसदृशम् ॥ २४ ॥ अथ सामान्येन जिनसिद्धांश्च स्तौति, जिनो वृषभादिवीतरागः श्रीपुण्डरीकादिसिद्धो वा । गुणानां कीर्तने । अत्र कीर्तनं कीर्तिः भावकर्त्रोर्घञ् प्र० तस्मिन् मम गीः ईर्ते प्रसरति । किंभूते ? सर्वविघ्नान् स्तकति प्रतिहन्तीति तस्मिन् । ष्टक स्तक प्रतिघाते इति वचनात् । विगलन्ती हीनगुणत्वाद् भ्रश्यन्ती अपरेषामन्यदेवानां कीर्तिर्यस्मात्तस्य । यद्वा अपरा प्रकृष्टा विगलन्ती अपकीर्तिर्यस्मात्स तस्य । यद्ग-स्मादातोः ममेति गम्यम् । इह गीःशब्दस्य व्यञ्जनान्तस्याऽकारान्तता भागुरि-मताज्ज्ञेया । धर्मनृपप्रसादस्य, उक्तं च—'कीर्तिर्यशसि विस्तारे प्रासादे कर्दमेऽपि च ।' चन्द्रोज्वलयशसः शुद्धस्य मिथ्यात्वादनालीढस्य धर्मस्य जीवाजीवादिपदा-र्थानामुपनिषदो दानादिभेदस्य वा, एका यथास्थितत्वादद्वितीया कीर्तिः कीर्तनं कथनं यस्य यस्माद्वा स तस्य, यदवादि 'धर्मो यमोपमापुण्यस्वभावाचारधन्वसु । सत्सङ्गेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि' । एवंविधगुणविशिष्टस्य । हे जिन ! तव गुणान् कीर्तयन् मम गीः प्रसरति, तदिति गम्यम् । तत्तस्माद्धेतोः स्वां स्तुतिं अहं धर्मकीर्ते विस्तारितवान्, अतिशायिनीं । 'कृतं पर्याप्तयुगयोर्विहिते हि सिते फले' इति वचनात्, कृत्ता विनाशिता अर्थाच्छोषिता, अनङ्गः कामरस एव कीर्तिः कर्दमो येन, कृतण् संशब्दने, कृतः कीर्तिरिति कीर्तादेशः, चुरादिभ्यो णिच् प्र०

सितकरसितकीर्तेः शुद्धधर्मैककीर्तेः
स्तुतिमहमचिकीर्ते तां कृतानङ्गकीर्तेः ॥ २५ ॥

विगलितवृजिनानां नौमि राजिं जिनानां
सरसिजनयनानां पूर्णचन्द्राननानाम् ।
गजवरगमनानां वारिवाहस्वनानां
हृतमदमदनानां मुक्तजीवासनानाम् ॥ २६ ॥

अविकलकलताराप्राणनाथांशुतारा
भवजलनिधितारा सर्वदाऽविप्रतारा ।
सुरनरविनताऽऽरा त्वार्हती गीर्वतारा-
दनवरतमतारा ज्ञानलक्ष्मीं सतारा ॥ २७ ॥

नयनजितकुरङ्गीं कां सुधारोचिरङ्गी-
मिह किल महरङ्गीकृत्य चित्तान्तरङ्गी ।
स्मरत हि सुचिरं गीर्देवतां यस्तरङ्गी-
कुरुत इममरङ्गीत्यादिकृद्वन्धुरङ्गी ॥ २८ ॥

( एतत्काव्यत्रयेण सह पठनतश्चतुर्विंशतिजिनानां स्तुतयो भवन्ति ॥ )

---

भवतनी आत्मनेपदम्, णिश्रिद्रुस्रुभ्यः कर्मकर्तरि ङ प्र० द्विर्धातु० व्यञ्जनस्य कङश्चज् ह्रस्वः । अह्न धातोरादि० णेरनिटि अवर्णादेरस्वे स्वरे० चान्द्रव्याकरणे णिजन्तानामुभयपदित्वविधानादात्मनेपदम् ॥ २५ ॥ मुक्ताश्च ते जीवाश्च मु० तेषां वासना स्थितिर्येषां ते, यदार्षम्–'जत्थय एगो सिद्धो तत्थ असंता भवक्खयविमुक्खत्ति' ॥२६॥ अविकलाः सम्पूर्णाः कला यस्य स चाऽसौ ताराप्राणनाथश्च तदंशुवत्तारा श्वेता, तारयतीति अम्बिका, लक्ष्मीं रातु ददातु, वेगाद्धतारिवृन्दा मनोज्ञा ॥ २७ ॥ ऋङ्मित्यदितरकवत्समासान्तः, मुहुर्वारंवारं चित्ताऽन्तः अङ्गीकृत्य प्राणी निरन्तरध्यानसन्तानबहुलजलप्रसरयोगात्तरङ्गाः सन्त्यस्य सः, गीस्तिरार्या विशेषः सा आदिर्येषां तानि कुर्वन्ति कवयस्तेषां मध्ये मनोज्ञं कुरुते गीः ॥२८॥

इति श्रीजयवृषभस्तुत्यवचूरिः ।

श्री

# अथ श्रीऋषभजिनस्तुतिः।

श्रीनाभेयं[1] योगिध्येयं[2] देहज्योतिःसारङ्गं[3] (१)
सर्वश्रेयः[4]श्रेयःपद्यागत्यामाद्यत्सारङ्गम् (२)।
कर्मक्षोणी[5]जन्मश्रेणीश्रेणीध्वंसे सारङ्गं (३)
नौम्युत्कण्ठा[6]व्याप्तस्वान्तः सौवस्थाम्ना[7] सारङ्गम् (४) ॥ १ ॥
अर्हद्वृन्दं[8] कृप्तानन्दं चञ्चच्चक्षुः[9]सारङ्गं (५)
विश्वासत्य[10]व्याधादित्यच्छायामर्दैः सारङ्गं (६)।
क्षामाक्षेमं[11] दक्षक्षोणी[12]कौमुद्यामुत्सारङ्गं (७)
श्रेयोरत्याः[13] कण्ठाश्लेषे स्तोष्ये नन्दत् सारङ्गम् (८) ॥ २ ॥
स्तौम्यध्वान्तं[14] ध्वस्तध्वान्तं श्रीसिद्धान्तं सारङ्गं (९)
भव्याम्भोजे[15]ष्वाविर्भूतानन्दाम्भोरुट्सारङ्गम् (१०)।

---

## अवचूरिः।

१ श्रीनाभिराजसुतम्। २ साधुध्यानगम्यम्। ३ शरीरकान्तिस्तया सुवर्णोपमम्। ४ सकलकल्याणसमीचीनमार्गगमनविषये बलवत्सारङ्गमिव सारङ्गं अश्वम्। ५ कर्माणि अष्टौ तान्येव क्षोणी–पृथिवी जन्तोर्जन्मवतो या श्रेणिर्गुह्याकारा तद्ध्वंसने सारङ्गं–हस्तिनम्। ६ अहं उत्कण्ठाव्याप्तस्वान्तः–हर्षपूरितमनाः श्रीनाभेयं जिनम्। ७ स्वकीयबलेन सारङ्गं सिंहम्। ८ अहं अर्हद्वृन्दं स्तोष्ये स्तवीमि। कीदृशम्? अर्हद्वृन्दं–जिनसमूहं? कॢप्तानन्दं–सम्पादितहर्षं रचितप्रमोदम्। ९ देदीप्यमाननयनाभ्यां मृगम्। १० सर्वमृषावादपर्वकालीनसूर्यप्रभाभेदने सारङ्गमिव सारङ्गं राहुतुल्यम्। ११ कृशीभूतदुरितम्। १२ दक्षाः प्रवीणास्त एव क्षोणीकौमुद्यः पृथ्वीचन्द्रज्योत्स्नास्तासां मुदः–हर्षास्तेषां सम्पादने सारङ्गमिव सारङ्गं चन्द्रम्। १३ माङ्गल्यरत्याः कल्याणकामस्त्रिया आलिङ्गने नन्दत् माद्यत्सारङ्गमिव सारङ्गं–कन्दर्पम्। १४ नुवीमि अध्वान्तं–प्रकाशरूपं सिद्धान्तं स्तौमि सारङ्गं–सूर्यम्। १५ भव्य-

[16]अज्ञानालीपाथोदालीशत्या दृप्यत्सारङ्गं (११)
[17]वन्दारूणां [18]मीदारूणां [19]वक्षोवृक्षे सारङ्गम् (१२) ॥ ३ ॥
[20]जैनाध्यक्षं दक्षं यक्षं सुप्रुच्छायासारङ्गं (१३)
सौव्यी[21] वाण्या [22]गाम्भीर्येण [23]ध्वस्तोद्गर्जत्सारङ्गम् (१४)
[24]अर्हत्सर्पद्वाक्योद्गर्जत् पर्जन्याम्भःसारङ्गं (१५)
वन्दे [25]व्रीडाकामक्रीडा[26]कासारश्रीसारङ्गम् (१६) ॥ ४ ॥

इति श्रीऋषभस्तुतिः कामक्रीडाख्या ।

---

## अथ ऋषभजिनस्तुतिः । स्रग्धराछन्दः ।

आनन्दानम्रकम्रत्रिदशपतिशिरःस्फारकोटीरकोटी-
प्रेङ्खन्माणिक्यमालाशुचिरुचिलहरीधौतपादारविन्दम् ।
आद्यं तीर्थाधिराजं भुवनभवभृतां कर्ममर्मोपहारं
वन्दे शत्रुञ्जयाख्यं क्षितिधरकमलाकण्ठशृङ्गारहारम् ॥ १ ॥
माद्यन्मोहद्विपेन्द्रस्फुटकरटतटीपाटने पाटवं ये
बिभ्राणाः शौर्यसारा रुचिरतपरुचां भूषणायोचितानाम् ।

---

कमलेषु प्रकटीभूतप्रमोदजलरुहपालीषु सारङ्ग–हंसम् । १६ अज्ञानसमूहजलध
श्रेणीहरणविषये दृप्यत् माद्यत् सारङ्ग–वायुम् । १७ अभिवन्दितॄणाम् । १८ भव
काष्ठानाम् । १९ पञ्जरवृक्षे सारङ्गं शुकसदृशम् । २० अहं जैनाधिष्ठायकं दक्षं–प्रवी
यक्षं शोभनकान्त्या प्रवालसदृशम् । २१ स्वकीयया वाचा । २२ गम्भीरत्वेन
२३ निराकृतगर्जायमानमेघसदृशम् । २४ जितविस्तारिवचनरूपगर्जारवयुक्तज
वस्जलपाने सारङ्गं चातकम् । २५ लज्जायुतकामकेलितडागलक्ष्मीशोभाका
सारङ्गं–कमलम् । २६ सर्वगुर्वक्षरमयं कामक्रीडाख्यं १५ वर्णात्मकं छन्दः ।

सद्वृत्तानां शुचीनां प्रकटनपटवो मौक्तिकानां फलानां
तेऽमी कण्ठीरवाभा जगति जिनवरा विश्ववन्द्या जयन्ति ॥२॥
सद्बोधावन्ध्यबीजं सुगतिपथिरथः श्रीसमाकृष्टिविद्या
रागद्वेषाहिमन्त्रः स्मरदवदवथुप्रावृषेण्याऽम्बुवाहः ।
जीयाज्जैनागमोऽयं निबिडतमतमःस्तोमतिग्मांशुबिम्बं
द्वीपः संसारसिन्धोस्त्रिभुवनभवनज्ञेयवस्तुप्रदीपः ॥ ३ ॥
यः पूर्वं तन्तुवायः कृतसुकृतलवैर्दूरितः पूरितोऽघैः
प्रत्याख्यानप्रभावादपरमृगदृशामातिथेयं प्रपेदे ।
सेवाहेवाकिशाली प्रथमजिनपदाम्भोजयोस्तीर्थरक्षा-
दक्षः श्रीयक्षराजः स भवतु भवतां विघ्नमर्दी कपर्दी ॥ ४ ॥

इति श्रीऋषभजिनस्तुतिः ।

श्रीः

## अथ श्रीवीरजिनस्तुतिः ।

(१)

पटिष्ठाष्टकर्मद्विषद्ध्वंसनेन प्रदत्तं त्वदीयं महन्नामधेयम् ।
महावीर इत्यद्भुतं देवराज्ञा कृताज्ञाप्रपञ्चेन देवावलीभिः ॥ १ ॥
जिनाली भवाली हृताली नरालीनतारा नतारा समारा समारा ।
प्रमोदाप्रमोदा निदानानिदाना विमाना विमाना प्रमाणा प्रमाणा ॥२॥
ततान्तः कृतान्तः कृतान्तःप्रशान्तःप्रकान्तं मितान्तं नतान्तं महान्तम् ।
ददातु त्वजातु प्रमादः प्रमादः सुखं नः पुनानः समानां समानाम् ॥३॥
अधिष्ठायिका साधु सिद्धायिका वः पुनीताल् स्फुरन्नूपुरद्वन्द्वपादा ।
स्वकीयप्रभुप्रष्ठसेवानुरक्ता विरक्ता भवेभ्यः मतजन्मवन्ध्यः ॥ ४ ॥

(२)

त्वया निर्वृतिर्भूषिताऽऽर्या यदानीं तदानीं महाराजराजैः कृतं सत्
स्फुरद्दीपदीपालिकापर्व वर्यं महावीर! स त्वं प्रभो! पालयाऽस्मान् १
जिनश्रेणिका नायिका दायिका वा सुखस्याऽसमस्या शमस्या नमस्या
ततस्याऽतुलस्याकरस्यादरस्या सशङ्का दिवौका अशोकार्यनाका ॥ २ ।
जिनेशागमः सागमः सङ्गमः स्नाग् प्रसिद्धः प्रसिद्धः सुबद्धः प्रसिद्धः
विबुद्धिः समृद्धिः प्रसिद्धिः प्रवृद्धिः क्षतामः सुरामः प्रकामः प्रवामः ३
सहस्रच्छदस्योपरि स्थापितांह्रिद्वयाऽष्टापदस्येव पीताङ्गवर्णा ।
महाभूपसिद्धार्थसूनुप्रभूतप्रभावा वरं रातु सिद्धायिका वः ॥ ४ ॥

---

## अथ गौतमस्वामिस्तुतिः ।

(१)

गौतमान्वयपवित्रगौतमः सप्तहस्ततनुकः स सिद्धये ।
अस्तु सत्सचतुरस्रसंस्थितः केवलाय समभूद्विषादकः ॥ १ ॥
तीर्थकृत्ततिरियं भवे भवे दुःखकूपनिपतज्जनान् भवेत् ।
पालनाय यतनापरायणा कर्मशत्रुसुपुरीकृताऽक्षरा ॥ २ ॥
नैगमादिनयसंयुतागमस्तीर्थकृद्वदनभाषणाग्रिमः ।
अन्यतीर्थिकमतश्रमत्कृतिः शङ्करः सकलजन्मिनोऽस्तु वः ॥ ३
अम्बिकाभिधगरिष्ठदेविका बिभ्रती श्रवणयोः सुकुण्डले ।
स्तूयमानगुणमण्डली जनैर्विघ्नघातजनकाऽस्तु सन्ततम् ॥ ४ ॥

(२)

यदीयं प्रभाते स्फुरन्नामधेयं गृहीत्वा ययुर्जन्मिनः कोटिसंख्याः ।
शिवं शान्ति मत्यन्ति कुर्यात् कलानां कलापं कुकर्मारिमिद् गौतमो मे

जगन्नाथपङ्क्तिः सुमुक्तिर्विमुक्तिः सशक्तिः सयुक्तिः सुभक्तिः सुमुक्तिः।
प्रकामागता माहतामाविरामा यतीनां ततीनां रतीनां हृतीनाम् ॥२॥

गुणैः शुद्धसिद्धान्त सिद्धान्त ऊर्ध्वान्मकृत्
सदाभावतां संमतां दीयतां पोषिताम्।
दुरत्यन्तकष्टेन शिष्टेन लष्टेन वा
स्फुरद्वर्णपूर्णैः सकर्णैः सकर्णैः श्रितः ॥ ३ ॥

गलद्धारतीपीनपीयूषतुल्या यदीया रणत्कारकारिक्रमाब्जा।
महामूल्यसन्नूपुराभ्यां नवाभ्यां सुखायाऽस्तु देवी सतां जन्मभाजम् ॥

श्रीः

## श्रीवर्धमानजिनस्तवनम्।



श्रीवर्धमान! गुणपुङ्गववर्धमान! स्पर्धां करोषि विलसत्तरणिप्रभाभिः।
कामं समभ्यधिक एव तव प्रतापाद् यःस्यान्मम त्रिजगति प्रसरायमाणः
त्वदीयं मुखं कौमुदीनाथमित्थं प्रभो! वक्ति शीतद्युते! ते सदृक्षम्।
वदन्ति प्रबुद्धास्तदेतन्मुधाहं प्रमन्ये यतो निष्कलङ्कत्वयुक्तम् ॥ २ ॥
कलङ्कान्वयस्त्वं तु लोके प्रसिद्धो मृगाकारधारित्वतः साधु मन्ये।
त्वदीयक्रमद्वन्द्वमित्थं कजान्वा वरं भाषते ते सदृक्षं मुधैतत् ॥ ३ ॥
रजोयुक्तमेवाऽहमस्मिन् रजोभिर्वियुक्तं सदारक्तदन्तच्छदस्ते।
सुबन्धूकसान्ध्यारुणत्वं प्रतीति प्रहास्यं करोति त्वदीयोऽरुणत्वात् ४
मदीयं विरक्तस्थरक्तत्वमार्यं दरीदृश्यतेऽकृत्रिमं भक्तितस्त्वम्।
मयेति स्तुतो वर्धमानः स सिद्ध्यै भवेत् प्रोल्लसन्मोक्षलक्ष्म्याः प्रकामम्

इति श्रीमहावीरस्तवनम् ॥

## अथ श्रीगौतमस्वामिस्तवनम् ।

गुणपुङ्गव! गौतम! गोतमगौर्गतिभङ्गमागतिदुर्गतिवित् ।
त्वयकाऽग्रहि येन यतित्वमलं त्रिशलातनयान्तिक अन्तकरे ॥ १ ।
त्रिपदीग्रहणोद्यतसद्धिषणः कृतवीरपदार्थसुनिर्वचनः ।
वचनामृतहर्षितमर्त्यगणो गुरुसौख्यभराय भव त्वमिह ॥ २ ॥
यन्नाममन्त्रस्मरणेन सर्वं शशाम विद्युच्चपलायुषां नः ।
दुःखप्रतिगं कर्म पुराऽनुभूतं बद्धं निधत्तं भवकोटिभूतम् ॥ ३ ॥
सज्ज्ञानसद्दर्शनसच्चरित्ररूपं हि रत्नत्रयमत्र पुष्टम् ।
यद्देहगेहेऽग्रिममुद्बभूव ध्वस्तादिकान्तं सुरकोटिशस्यम् ॥ ४ ॥
विमलगुणाकर! गौतम! भिक्षालब्धिं ददस्व सकलानाम् ।
साधूनां प्रतिदिवसं स्तुतो मयेति प्रकारेण ॥ ५ ॥

इति गौतमस्वामिस्तवनम् ॥

वाचकचक्रवर्तिमहोपाध्यायश्रीधर्मसागरगणिशिष्य पं० गुणसागरगणिना कृतम् ॥

---

## अथ अजारपार्श्वस्तवनम् ।

अजारपार्श्वस्तुतिमार्गमानये नयेन सेवाविशदेन भास्वता ।
तथा यथा जन्म निजं महोदयप्रभुत्वपूतं सुखसन्ततिश्रितम् १
सौराष्ट्रदेशागमनश्रमो मे त्वद्दर्शनाद्देव! बभूव सिद्ध्यै ।
शीतद्युतेः क्षीरसमुद्रसङ्गाद् व्योमावगाहः किल कान्तिवृद्ध्यै ॥२।
शत्रुञ्जयः पर्वत एष सिद्धिक्षेत्रं बभूवोत्तमकालजानाम् ।
दुःकालजानामपि नाथ! सिद्धिक्षेत्रं त्वमेवास्यतुलप्रभावः ॥३।

श्रीनेमिनाथादिजिनेश्वराणां कल्याणमालापदमुज्जयन्तः ।
बभूव भूध्रः सकलाङ्गिनां तु त्वमेव कल्याणनिधिर्विभासि ॥४॥
अजारपार्श्व! स्तुतिमार्गमित्थं नीतो विनीतेन मयाऽतिमोदात् ।
चेतःसरोमङ्गलपद्मसागरं करोतु सेवाकर! लोकवत्सलः ॥ ५ ॥

इति अजारपार्श्वजिनस्तवनम् ॥

---

श्रीसद्गुरवे नमः ।

## अथ चतुर्विंशतिजिनस्तोत्रं स्तुतयश्च ।

श्रीजिनर्षभ! भवन्तमाश्रितो देव! भव्यनयनाभिनन्दन ।
भूरिवैभवभरो भवी भवेदेव भव्यनय! नाभिनन्दन! ॥ १ ॥
यस्तवाऽन्तरतमश्रयच्छिदे जायतेऽजित! मतेन राजितः ।
स्यादवाप्तविजयोऽयमश्रसाऽजाय! तेजितमते! नराजितः ॥२॥
भक्तिनुम्रमनसो नमन्ति ये पुण्डरीकबलदेवशम्भव ।
स श्रयन्तमव मर्मकुम्भिनां पुण्डरीकबल! देव! शम्भव! ॥३॥

---

॥ अवचूरिः ॥

अथ चतुर्विंशतिजिनस्तुतिव्याख्या ॥ श्रीजिनेषु ऋषभः प्रधानः तस्य सम्बोधनं हे जिनर्षभ!, भव्या मुक्तियोग्या जन्तवस्तेषां नयनाभिनन्दन लोचनप्रीतिद! भवेदेव भवत्येव । भव्याः प्रधाना नया न्याया यस्य तत्सम्बोधने हे भव्यनय! ॥ १ ॥ अजित! तव मतेन शासनेन यः पुमान् राजितो दीप्तिमान् जायते भवति, अयं स पुमान् राजितो नरेन्द्रसङ्ग्रामतोऽवाप्तविजयः प्राप्तविजयः स्यात् भवेत् । न विद्यते जाया भार्या यस्य तस्य सम्बोधनं हे अजाय!, तेजिता दीप्ता मतिर्यस्य तत्सम्बोधने हे तेजितमते! ॥ २ ॥ पुण्डरीको दिग्गजविशेषः, बलदेवो बलभद्रः, शम्भुरीश्वरः, एते ये त्वां नमन्ति स त्वं श्रयन्तं जनं अव रक्ष, पुण्डरीकः सिंहस्तद्वत् पराक्रमो यस्य तत्सम्बोधने हे पुण्डरीकबल!, केषां? कर्मकु-

दुःखदुःकृततमिस्रसूदने भास्वदाभ! विभवाऽभिनन्दन!।
भक्तिरभ्युदयिनी तवाऽस्तु मे भास्वदाभविभवाऽभिनन्दन! ॥४॥
देवदानवनरेन्द्रकिन्नरैरर्चितं सुमतिनाथ! ते मतम्।
मन्मनोऽविरहितं हितेच्छयाऽरं चितं सुमति नाथते मतम् ॥५॥
दर्शनेन जनयन् प्रजामितापद्मलां छितभवाहितामयः।
श्रीधराङ्कज! जिनेश! मे श्रिये पद्मलाञ्छित! भवाहितामयः ॥६॥
श्रीसुपार्श्व! विदुषां हिताप्तये देवगौरपरुषामृतायिता।
मां पुनातु तव कल्मषाविलं देव! गौरपरुषाऽमृतायिता ॥ ७॥
लक्ष्मणाङ्गज! जिनेश! ते सुधाधामगौरवपुषो महोदयम्।
संश्रितस्य तनुतां मतं सतां धाम गौरवपुषो महोदयम् ॥ ८॥
त्वां बभाज जिनराज यो जनोऽनेनसं गतममानसं पदम्।
तं विधेहि सुविधे! शुभोदयेनेन! सङ्गतममानसंपदम् ॥ ९॥

म्भिनां कर्मगजानाम् ॥ ३ ॥ हे भास्वदाभ सूर्यसमान!, विगतो भवो यस्य तस्य सम्बोधने हे विभव!, भास्वन्ती दीप्यन्ती आभा शोभा यस्य एवंविधो यो विभवो द्रव्यं तस्य अभिनन्दन! समृद्धितया ॥४॥ अर्चितं पूजितम्। हे सुमतिनाथ! ते तव। तत्किम्? शासनम्, अविरहितं निरन्तरं हितेच्छया हितवाञ्छया, अरमत्यर्थं चितं व्याप्तम्, नाथते इच्छति। किंभूतं मतम्? मतममीष्टम्, पुनः किंभूतम्? सुमति शोभना मतिर्यत्र यतो वा तत् सुमति ॥ ५ ॥ प्रजां किंभूताम्? इतो गत आपदेव मलो यस्याः तां इतापद्मलाम्। त्वं किंभूतः? छितः छिन्नो भवएवाऽहितो वैरी आमयश्च रोगो येन स छितभवाहितामयः। हे पद्मलाञ्छित! ये मम श्रिये, भवे आहितः स्थापितोऽमयोऽमारिर्येन स आहितामयः ॥ ६ ॥ देवगौः कामधेनुः, विदुषां किंभूतानाम्? अपगता रुट् रोषो येषां तेषामपरुषां, ऋतं सत्यं तत्राऽयिता प्राप्ता गौर्वाणी, अपरुषा सुकुमारा, अमृतायिताऽमृतवदाचरिता ॥ ७ ॥ सुधाधाम्ना मेन्दुस्तद्वद् गौरं वपुर्यस्य तस्य महोदयं मोक्षं श्रितस्य तव धाम तेजः गौरवं गुरुत्वं तस्य पुष्टतांगतं शासनम्। महान्तमुदयं तनुताम् ॥८॥ अनेनसं अनघम्, गतं प्राप्तम्, अमानसं मनोरहितं पदं स्थानं मोक्षरूपं तं नरं शुभोदयेन सङ्गतं

श्रीविलासललितं विनिर्मितापद्भयाऽमलमलं भिया चितम् ।
देव! शीतल! तव क्रमद्वयं पद्मयामलमलम्भि याचितम् ॥१०॥
खड्गिलाञ्छन! गुणव्रजद्रुमारामराजिघनसंवरागमे ।
प्राक्तनेन सुकृतेन ते मनोऽराम राजिघनसंवराऽऽगमे ॥ ११ ॥
स्वस्य यस्य हृदि वासमीशिताऽमानसम्मदवशोऽमनोऽभवः ।
वासुपूज्य! जिन! तस्य नाऽश्नुते मानसं मदवशो मनोभवः॥१२॥
यो भवन्तमभिनौति भावतोऽज्ञानवन्तमवदातविग्रहम् ।
तं कुरुष्व विमलेश वत्सलज्ञानवन्तमवदातविग्रहम् ॥ १३ ॥
यो जहाति वचनेन ते मुने! ऽमानवैरचितमानसं मदम् ।
विन्दते पदमनन्तस ध्रुवं मानवै रचितमानसंमदम् ॥ १४ ॥

---

सहितम् । हे इन स्वामिन्! अमानसम्पदं बहुसम्पदं विधेहि ॥ ९ ॥ विनिर्मित आपदां भयो विनाशो येन तस्य सम्बोधनं हे विनिर्मितापद्भय! क्रमद्वन्द्वं किंभूतम्? अमलं निर्मलम्, पुनः किंभूतम्? अलमत्यर्थं भिया भयेन चितं व्याप्तम्, पद्मयुग्मम्, अलम्भि लब्धम्, मया कर्त्रा, याचितम् प्रार्थितम् ॥ १० ॥ गुणव्रज एव द्रुमा वृक्षास्तेषामारामा वनानि तेषां राजिः श्रेणिस्तस्यां घनो मेघस्तस्य संवरं नीरं तस्यागमः सङ्गमस्तत्र राजी भ्राजनशीलः घनः प्रभूतः संवर आश्रवनिरोधो यस्य तस्य सम्बोधनं हे राजिघनसंवर! ते तव आगमे सिद्धान्तेऽराम वयं तत्र चेत इत्यर्थः ॥ ११ ॥ न विद्यन्ते मानोऽभिमानः संमदो हर्षः वशाः स्त्रियो यस्य सोऽमानसंमदवशः असनः कृतवान्, अभवः संसाररहितः तस्य मानसं मनो मदवशो मनोभवः कामो नाऽश्नुते व्याप्नोति ॥ १२ ॥ अज्ञान् मूर्खान् अवन्तं रक्षन्तं, अवदातो विशदो विग्रहो देहो यस्य स तमवदातविग्रहम्, तं नरं किंविशिष्टम्? ज्ञानवन्तं प्रबोधवन्तम् । अवदातः छिन्नो विग्रहः संग्रामो येन तथाभूतं कुरुष्व ॥ १३ ॥ अमानं निःसंख्यं यद्वैरं तेन चितं व्याप्तं मानसं मनो यत्र तममानवैरचितमानसं, मदं अहङ्कारं यस्ते तव वचनेन जहाति त्यजति स पुमान् ध्रुवं स्थिरं पदं स्थानं विन्दते प्राप्नोति, किंभूतं पदम्? मानवैर्नरै रचितः कृतः मानेन पूजनेन आनन्दो यत्र तत् ॥ १४ ॥

त्वां नमस्यति जिनेश! यः सुधीः कौमुदीशसमया यशोभया।
श्रीयते सपदि धर्म! धर्मधी कौ मुदीश! स मयाऽयशोभया॥१५॥
त्वां नतोऽस्मि तमनन्तऋद्धिदं विश्वसेननरराजनन्दनम्।
यं सुरद्रुमदपेक्ष्य तुच्छदं विश्वसेन! न रराज नन्दनम्॥१६॥
कुन्थुनाथमभिनाथते स्तुते यो जिनं जन! निरञ्जनाधिपम्।
मुक्तिरिच्छति पतिं तमीशतायोजिनं जननिरञ्जनाधिपम्॥१७॥
ज्ञापयन्नखिलतत्त्वपद्धतिं कम्पितार! परमारमारकः।
देहिनां ददददम्भसंपदं कं पिताऽरपरमारमारकः॥ १८॥
नौमि मल्लिमघवार्धिशोषणे कुम्भसम्भवमुनिं घनागमम्।
पुण्यवल्लिविपिनस्य लासने कुम्भसम्भवमुनिं घनागमम्॥१९॥

हे धर्मजिनेश! यस्त्वां नमस्यति स सुधीः कौमुदीशसमया चन्द्रसमानया यशोभया यशःकान्त्या श्रीयते सेव्यते, पुनः कया श्रीयते? मया लक्ष्म्या। किंभूतया? अयः शोभनं दैवं कर्म तेन शोभना स्वाप्रया (?), कौ पृथिव्यां मुद् आनन्दः ईर्लक्ष्मीस्तयोरीशः स्वामी तत्सम्बोधनं हे मुदीश!॥१५॥ यमपेक्ष्य यमाश्रित्य सुरद्रुमत् देवद्रुमयुतं नन्दनं नन्दनवनं तुच्छदं स्वल्पप्रदं न रराज न शुशुभे, हे विश्वसेन! विश्वा संपूर्णा सा लक्ष्मीस्तस्या इनः स्वामी तस्य सम्बोधनं हे विश्वसेन!, तं त्वां अनन्तऋद्धिदं नतोऽस्मि॥१६॥ हे जन! यः कुन्थुनाथं जिनम्, अभिनाथते वाञ्छति, स्तुते स्तौति च। कथंभूतम्? निर्गतमञ्जनं पापं येषां ते निरञ्जनाः साधवस्तेषामधिपं स्वामिनम्। मुक्तिः सिद्धिस्तं पुरुषं ईशीतायोजिनं स्वामित्वयोमवन्तं पतिं भर्तारमिच्छति, जननिर्जन्म रज्यते लिप्यते आत्माऽनेनेति रञ्जनं कर्माऽष्टप्रकारं कर्म आधिर्मानसी पीडा तान् पायति शोषयतीति जननिरञ्जनाधिपस्तम्॥ १७॥ हे अरतीर्थंकर! कम्पितं प्रेरितं आरं अरीणां रागादिरूपाणां समूहो येन तस्य सम्बोधनं हे कम्पितार! परो वैरी यो मारः कामस्तस्य मारकः प्राणापहारकः। देहिनामङ्गिनां अदम्भसम्पदम् कं सुखं च ददत् त्वं पिता भवसि। किंभूतः? अरमरा प्रधाना मा ज्ञानं रमा लक्ष्मीस्तयोरारकः प्रापकः। आगमा अनित्या इत्यत्र नमोऽन्तागमः॥ १८॥ मल्लिम् किंभूतम्? अघवार्धिशोषणे पापपयोनिधिपाने

त्वन्मतास्रमघविद्विषच्छिदे तेजयन्ति मुनिसुव्रताऽऽप्त! ये ।
नित्यसंश्रितभवन्मताः क्षितौ ते जयन्ति मुनिसुव्रताप्तये ॥२०॥
संश्रिते जिनमते जगत्पते! सत्तमे विधुतमेह ते नमे! ।
चित्तमन्यकुमतं घनैनसाऽसत्तमे विधुतमेहते न मे ॥ २१ ॥
राज्यऋद्धिमवधूय सन्निधिश्रीसमुद्रविजयाङ्गजोर्जिताम् ।
तेनिवान् शिवरमां सतां श्रिये श्रीसमुद्रविजयाङ्गजोर्जिताम्॥२२॥
पार्श्वदेव! तव मूर्तिमुत्तमः सन्महामहिमधामसन्निभाम् ।
कः श्रयेत न तमश्चयच्छिदे सन्महामहिमधाम सन्निभाम् ॥२३॥
भक्तितो मतिजुषो भजन्ति यं वर्धमानमहमानमामि तम् ।
जन्तुजाततमसो निशातनं वर्धमानमहमानमामितम् ॥ २४ ॥

---

कुम्भसम्भवमुनिं अगस्तिऋषिम् । पुनः किंभूतम्? घनः प्रभूत आगमः सिद्धान्तो यस्य तं घनागमम् । पुनः किंभूतम्? कुम्भसम्भवो मुनिर्ज्ञाततत्त्वः कुम्भसम्भवश्चासौ मुनिश्च कुम्भसम्भवमुनिस्तम् । पुण्यवल्लिविपिनस्य लासने वृद्धौ घनागमं मेघागमम् ॥ १९ ॥ हे मुनिसुव्रत! हे आप्त! ये जनाः त्वन्मतास्त्रं अघवैरिविच्छेदाय तेजयन्ति, किंभूताः? मुनीनां यतीनां शोभनानि यानि व्रतानि तेषामाप्तये प्राप्तये संश्रितभवन्मताः आश्रितभवदीयशासनाः ॥ २० ॥ हे जिन! हे नमे! तव मते संश्रिते सत्तमे प्रधाने विधुता क्षिप्ता माया लक्ष्म्या ईहा येन तत्संबोधने हे विधुतमेह! ते तव चित्तं मनः अन्यकुमतं न ईहते न वाञ्छति । हे विधुतम प्रकृष्टचन्द्र! कस्मिन् घनैनसाऽसम्भ्रमे घनं निबिडं यदेनसं पापसमूहस्तेद्धेतुरूपं यत्तमस्तमिस्तस्मिन् ॥ २१ ॥ राज्यऋद्धिं किंभूताम्? सन्निधौ श्रीर्लक्ष्मीः शोभा वा समुद्रः स प्रतिष्ठो विजयो यस्यास्ताम्, सन्निधिश्रीसमुद्रविजयाङ्गजैरूर्जितां सबलां गजोर्जितां तेनिवान् ॥ २२ ॥ मूर्तिं किंभूताम्? महान् प्रौढो यो महिमा तं दधातीति महामहिमधा ताम्, असद् अविद्यमानं निभं छद्म यस्यास्तामसन्निभां, तथा सन् प्रधानो महः पूजा महः तेजो वा यस्यास्तां सन्महाम् । अहिमधामा रविस्तस्य सन्निभां समानाम् ॥ २३ ॥ वर्धमानं किंभूतम्? वर्धमाना महा उत्सवा मानं ज्ञानं तद्रूपा मा लक्ष्मीस्तयाऽमितममेयम्

रागरोषरहिताऽर्हतां ततिः सर्वदैवतनुताऽमिता हिता ।
ईहितानि नमतां हताऽमता सर्वदैव तनुतामिताहिता ॥ २५ ॥
विश्ववर्तिजिननाथसंहतेः सन्नताऽमरसभाऽपराभवा ।
संपदो दिशतु वः पदद्वयी सन्नतामरसभा पराऽभवा ॥२६॥
श्रीजिनोक्तमततत्त्वपद्धतेर्बोधकंप्रवचनं सुरोचितम् ।
धुन्वदन्यमतमानतोऽन्वहं बोधकं प्रवचनं सुरोचितम् ॥ २७ ॥
मोहवारिणि गुणौघसङ्गिनीमङ्गिनी घनतमोहराऽजिता ।
भारती भवतु भूतयेऽङ्गिनामङ्गिनी घनतमोहराजिता ॥२८॥
इत्थं निर्निभभक्तिनुन्नमनसा नूता जिनानां तति-
र्नित्यैकान्तहिताप्यवाप्तविततत्रैलोक्यपूजोदया ।
संसारे सुविषीदतोऽतिविषमैर्दुःखैस्तदुच्छेदिनी
श्रेयोलक्ष्मिसखी निषीदतु सदानन्दप्रदा मे हृदि ॥२९॥

इति श्रीचतुर्विंशतिजिनस्तुतयः । श्रीतपागच्छाधिराजश्रीसोमसुन्दरसूरिशिष्य-
श्रीजिनसुन्दरसूरिविरचितम् ॥

॥ २४ ॥ अर्हतां ततिः किंभूता? सर्वदैवतनुता सकलदेवस्तुताऽमिताऽमाना हिता हितकर्त्री, हतानि क्षिप्तानि अमतानि अनिष्टानि यया सा हतामता, ईहितानि वाञ्छितानि सदैव सदा तनुतां विस्तारयतु । हता गता अहिता वैरिणो रागादयो यस्याः सा हताहिता ॥ २५ ॥ पदद्वयी किंभूता? सन्नता नता अमरसभा देवसमाजो यस्याः सा सन्नताऽमरसभा। पुनः किंभूता? न विद्यते पराभवो यस्याः साऽपराभवा, पुनः किंभूता? सन्ना छिन्ना तामरसानां पद्मानां भा कान्तिर्यया [illegible]मरसभा । प्रकृष्टाऽभवा सत्ररहिता ॥२६॥ सुराणां देवानां योग्यं, अन्यमतं किंभूतम्? कंप्राणि अफलानि वचनानि यत्र तत् । सुरोचितमभिप्रेतम् ॥ २७ ॥ इयमङ्गिनी । घनं निबिडं तमः अघं हरतीति घनतमोहरा श्वेङ्गिनी अङ्गागमवती, घनतमाः प्रचुरा ऊहा वितर्कास्तै राजिता घनतमोहराजिता । भारती वाग्देवता भूतये समृद्धये भवतु ॥ २८ ॥ इति अवचूरिः ॥

श्री

# अथ चतुर्विंशतिजिनस्तवनं स्तुतयश्च ।

... ... ... ... ... ... ...॥ ६ ॥

स्वामिन् सुपार्श्व! भगवन्! जितकोप ! मान-
प्रह्वाङ्गिमानसजले कतकोपमान! ।
स्तोता प्रयाति तव देव! न कोपमान-
मायः शिवं जगति यस्य हि कोपमा न ॥ ७ ॥

प्रौढिं परामधित चिन्महसेनराज-
जैत्र! त्वया तनुभुवा महसेनराजः ।
कीर्तिस्तवाऽस्तसितधामहसेनराज-
त्युर्वीतले नतमहामहसेनराज ॥ ८ ॥

कीर्तिप्रतापपरितर्जितपुष्पदन्तं
नम्रेप्सितप्रथनदैवतपुष्पदन्तम् ।

---

## अवचूरिः ।

......मानः पूजा तत्र प्रह्वाः प्रवणा येऽङ्गिनस्तेषां मानसजले तद्विशुद्धिहेतुत्वेन कतकचूर्णतुल्य!, यस्य शिवस्य कोपमा कं सुखं तस्योपमा सादृश्यं जगति नास्ति, तत् शिवं मोक्षं तव स्तोता प्रयातीति सम्बन्धः ॥ ७ ॥ चिन्महसा ज्ञानतेजसा इनराजजैत्र सूर्यचन्द्रजैत्र! त्वया तनुभुवा पुत्रेण महसेनराजः परां प्रौढिमधित दधार, अस्तः क्षिप्तः सितधामा चन्द्रो हसश्च हासो वैशद्येन यया, यद्वाऽस्तः सितधाम्नो हसो हासो यया विजितत्वात् सा तथा । तव कीदृशस्य ? नतमहा महान्तः प्रौढा महा उत्सवाः सेनाश्चतुरङ्गचम्वो येषां ते महामहसेनास्ते च ते राजश्च नृपाः प्रणता महामहसेनराजो यं तस्य ॥ ८ ॥ चन्द्रसूर्यासुरपादप, हिते एकाऽद्वितीय...

---

१ स्तोत्रस्यास्य प्रारम्भगताः षट्श्लोकास्त्रुटिताः सन्ति ।

विज्ञा हितैकमतयो जिन पुष्पदन्तं
भक्त्या स्तुवन्ति कति न स्मितपुष्पदन्तम् ॥ ९ ॥

अस्मान् कृपार्णव! भवार्ततमानवेन!
श्रीशीतल! प्रबलपापतमानवेन!।
त्रातं त्वया हि भजतेऽद्भुतमा नवेन
स्तुत्या सतां प्रणतदैवतमानवेन! ॥ १० ॥

वाचः प्रभो! तव तमश्छिदि भानवन्ति
श्रेयांस! विश्वकुमुदे हिमभानवन्ति ।
भव्यांश्च भावरिपुलूनशुभानवन्ति
यासां पुरः परवचांसि न भानवन्ति ॥ ११ ॥

श्रीवासुपूज्य! कृतविश्वसभाजनस्य
धर्मोपदेशरससिक्तसभाजनस्य ।
भक्तास्तव त्रिदशक्लृप्तसभाजनस्य
सिद्ध्यन्ति योगिजनमानसभाजनस्य ॥ १२ ॥

---

मतिर्येषां ते तथा ॥ ९ ॥ भवेन संसारेण ऋततमान् अन्यार्थं पीडितानस्मानव रक्ष, प्रबलपापमेव तमा रात्रिस्तस्यां नवेन नवसूर्य! हि यस्मात् त्वया त्रातं रक्षितुं अद्भुतमाऽद्भुतलक्ष्मीर्भजने । कीदृशी? सतामुत्तमानां नवेन स्तवेन स्तुत्या स्तोतुं योग्या पुण्यानुबन्धिनीत्यर्थः ॥ १० ॥ तमः पापं तदेव तमोऽन्धकारस्तस्य छिदि छेदे भानवन्ति भानुरिवाचरन्ति । हिमभानुश्चन्द्रस्तद्वदाचरन्ति, भावरिपवो रागाद्यास्तैर्लूनं छिन्नं शुभं येषां तान् भव्यान् अवन्ति रक्षन्ति । यासां वाचां पुरः परवचांसि परतीर्थिकवचनानि भानं शोभा तद्वन्ति न भवन्ति, असंबद्धार्थतया निःश्रीकाण्येव स्युरित्यर्थः ॥ ११ ॥ कृते विश्वस्य विश्वेषां वा सभाजनं प्रीतिर्येन, त्रिदशैः क्लृप्तं विहितं सभाजनं सेवनं यस्य तस्य । सिद्ध्यन्ति सिद्धिं यान्ति । योगिजनमानसानां भाजनस्याऽऽधारस्य तेषां त्वदेकलीनत्वात् ॥ १२ ॥

त्वत्कीर्तयो विमलतीर्थपतेऽज यन्ति
 याश्चन्द्रमण्डलरुचोऽप्यपतेजयन्ति ।
ये ताः स्तवैरभिनवैर्नहि तेजयन्ति
 दुर्मेधसः शुभगतिं किमु ते जयन्ति ? ॥ १३ ॥

निस्तुल्यकेवलरमाकमलोपमान !
 स्वामिन्ननन्त ! गतपङ्कमलोप मान ! ।
यस्ते तनोति सविवेकमलोपमान-
 मस्य श्रियः सुरपतेः कमलोपमा न ॥ १४ ॥

मुक्त्यर्थमुद्यतमतिर्जनकामदाय
 भक्त्या ननाम भवभञ्जन कामदाय ।
तुभ्यं प्रजा त्रिजगतीजनकाऽऽमदाय
 श्रीधर्मनाथ ! जिनराज न का मदाय ॥ १५ ॥

यैस्ते क्रमाब्जमसुमद्भिरमानि शान्ते !
 तेषां पदे कृतिमिराप्तिरमानिशान्ते ।

---

अपतेजसो निस्तेजसः कुर्वन्तीति णिचि अपतेजयन्ति दीपयन्ति, हे अज अजन्म ! यन्ति गच्छन्ति ॥ १३ ॥ निस्तुल्यकेवलरमाया निरुपमकेवलज्ञानलक्ष्म्याः कमलमुपमानं यस्य । हे अलोप अविनाश ! ते तव मानं पूजां सविवेकं निदानरहितया यस्तनोति । कीदृशाः सन्तः ? गतः पङ्कः पापं मलश्च यस्मात्स तथा बहिरन्तःशुचिरित्यर्थः । अस्य पुरुषस्य श्रियः समृद्धेः सुरपतेः कमला उपमा न स्यात् ॥ १४ ॥ जनकामान् ददातीति जनकामदस्तस्मै । कामं द्यति छिनत्तीति कामदस्तस्मै । हे त्रिजगतीजनक ! अमदाय मदरहिताय तुभ्यं का प्रजा न ननाम । अपितु सर्वाऽपि । आमा रोगास्तान् दाति लुनातीत्यामदस्तस्मै ॥ १५ ॥ अपूजि, तेषां असुमतां शान्ते पदे परमपदे आप्तिः प्राप्तिः कृतिभिरमावि । अमी कृतिनः । महनं पूजाम् । रमाया निशान्ते गृहे । तत्र क्रमाब्जे । निशान्ते

तस्मादमीमहनमीशरमानिशान्ते
तन्वन्ति तत्र सुकृतैः परमा निशान्ते ॥ १६ ॥

नम्राङ्गिनिर्मितदुरापरमागमेन
नानाभवक्रमभरोपरमागमेन ।
निन्ये सुखं त्रिभुवनं परमागमेन
श्रीकुन्थुनाथ! भवतापरमागमेन ॥ १७ ॥

ये दृष्टिगोचरमहोपरमादरेण
नीता दुरन्तदुरितोपरमादरेण ।
आसाद्य ते त्रिदशभूपरमा दरेण
धाम श्रयन्ति रहितं परमादरेण ॥ १८ ॥

मल्लिप्रभो! जनमनोम्बरवा स्तवेन
पादौ द्यतां मम शिवे वरवास्तवेन ।
यं त्वां स्तुवन्ति जगदीश्वर! वास्तवेन
स्वःस्वामिनः सरसपीवरवास्तवेन ॥ १९ ॥

---

प्रभाते ॥ १६ ॥ नम्राङ्गिनां निर्मिता दुरापाया दुर्लभाया रमाया आगमः समागमो येन तेन । नानाभवक्रमभरस्य उपरमे व्यपरमेऽगमो वृक्षस्तेन । त्वया परमागमेन परमेण सिद्धान्तेन कृत्वा त्रिभुवनं परं सुखं निन्ये । परमागमेन कीदृशेन? आसमन्तात् गमाः सदृशपाठा यस्मिंस्तेनाऽऽगमेन ॥ १७ ॥ अरेण अरतीर्थंकरेण, ते त्रिदशभूपरमा आसाद्य दरेण भयेन रहितं धाम परमपदं श्रयन्ति । दरेण कीदृशेन? परः प्रकृष्टो मादः । मदी हर्षग्लेपनयोरिति । मदनं मादो ग्लेपनं तं राति ददाति इति परमादरस्तेन, मद्वाऽरेण। कीदृशेन? परेषां यो मादो हर्षस्तं राति ददातीति तस्तेन ॥ १८ ॥ जनमनांस्येवाऽम्बराणि वस्त्राणि तेषां विशुद्धिहेतुत्वाद् वारिव वाः पानीयम् । शिवे मोक्षे वरं प्रधानं वास्तु निवासभूर्यस्य तस्य सम्बोधनं वरवाः । ते तव पादौ मम एनः पापं द्यतां छिन्ताम् । उत्तरार्धे यच्छब्दोपादानाद् पूर्वार्धे तस्येति भवेत्यस्य विशेषणं ज्ञेयम् । उत्तरार्धं स्पष्टम् ॥ १९ ॥

ये भाषितं श्रुतिषु ते परमानयन्ति
    ते सुव्रतेश! कुमतोपरमानयन्ति ।
ये त्वां त्रिलोकहिततत्पर मावयन्ति
    ते निर्वृतिं किमु गुणैः परमा न यन्ति ॥ २० ॥

चित्तं नमे! त्वयि जगज्जनकान्तिकाय-
    कामेन येन कनकोज्ज्वलकान्ति काय! ।
तस्मै श्रियः शुभदशाजनकान्तिकाय
    रज्यन्ति कीर्तिविजिता मृतकान्तिकाय ॥ २१ ॥

नेमे! भवानसितकीर्तिभृताऽम्बुराशि-
    नेमे भवानवरतं शिवसम्पदे मे ।
नेमे भवानणुनगच्छिदि मुक्तिकामै-
    र्नेमे भवानमरदानवमानवैर्ये ॥ २२ ॥

स्वामिंस्तवोद्यतमदं भवता नवाय
    येन प्रमोदसुभगीभवता नवाय ।

---

परं प्रकृष्टं अन्यवचनेभ्योऽतिशायित्वात् । कुमतेभ्य उपरमा निवृत्तयस्तान् अयन्ति गच्छन्ति प्राप्नुवन्तीत्यर्थः । मानयन्ति पूजयन्ति । न यन्ति न गच्छन्ति ॥२०॥ कं सुखं तस्यायो लाभस्तं कामयते इत्यणि कायः कामस्तेन कामेन न येन त्वयि चित्तं आन्ति अनुबन्धेनाऽबन्धि कृतमिति भावः । शुभदशाया जनकं संपादकमर्थात् परेषां अन्तिकं समीपं यस्य तस्मै रज्यन्ति रागं बध्नन्ति ॥ २१ ॥ भवः शम्भुस्तद्वदनसिता न सिताऽसिता नाऽसिताऽसिता विशदा या कीर्तिस्त्वया भृता पूरिताऽम्बुराशिनेमिः पृथिवी येन तत्सम्बोधनम् । भव एवाऽनणुर्महान् यो नगस्तरुस्तस्य छिदिच्छेदे नेमे! नेमिश्चक्रधारा । नेमे नमस्कृतः ॥ २२ ॥ येन नवाय नव्याय नवाय स्तवाय उद्यतमिति योगः । तस्य भवतानवाय संसारतनुत्वाय भवता भाव्यं

श्रीपार्श्व! तव भगवन् भवता नवाय-
निर्मुक्तभाव्यमचिरं भवतानवाय ॥ २३ ॥

श्रीवर्धमान नतमानसशोध यन्ति
स्वैरं यशांसि भुवनं तव शोधयन्ति ।
बुद्ध्या चकोरनिकराः शतशो धयन्ति
चन्द्रद्युतामपरदेवयशोधयन्ति ॥ २४ ॥

वाचस्तवेश! भुवनानि सभाजयन्ति
विद्योन्मदिष्णुपरवादिसभा जयन्ति ।
यैः संयमं सुमतिभिश्च सभाज! यन्ति
ते सिद्धिमाशु जिनराजसभा जयन्ति ॥ २५ ॥

यः सर्वकल्मषमलोपरमोदकेन
दृष्टो जिनौघ भवता परमोदकेन ।
तेनाऽऽप्यते सुखभरः परमोदकेन
धर्मद्रुमेऽद्भुतगुणैः परमोदकेन ॥ २६ ॥

---

भवितव्यम् । हे नवायनिर्मुक्त! अवायो ज्ञानं नाऽवासोऽनवायोऽज्ञानं तेन निर्मुक्त रहित! ॥ २३ ॥ नतानां मानसानि शोधयन्तीत्यणि नतमानसशोधस्तत्संबोधनम् । स्वैरं यन्ति प्रसरन्ति भुवनं, शोधयन्ति विमलयन्ति । अपरदेवयशो धयन्ति अधःकुर्वन्ति । एतानि सर्वाणि शतानि च यशांसि चकोरनिकराश्चन्द्रद्युतांबुद्ध्या धयन्ति पिबन्तीति संबन्धः ॥ २४ ॥ सभाजयन्ति प्रीणयन्ति, सुमतिभिः प्रयोज्यकर्तृभिः संयमं सभाजयन्ति सेवयन्ति । सह भया दीप्त्या यः स सभस्तस्य सम्बोधनं । हे अज अजन्म! यन्ति गच्छन्ति ॥ २५ ॥ सर्वकल्मषमेव मलस्तस्योपरम उदकमिवोदकं तेन, परः प्रकृष्टो मोदो हर्षः, कं च सुखं च यस्य तेन परमोदकेन । धर्मद्रुमे दकेन जलेन । परेषां मोदकेनाह्लादकेनाऽद्भुतगुणैः

मोहार्दितः सकलभावविभासमानं

प्राप्तं सतां नतवितीर्णशुभासमानम् ।

लब्धाजिनागममहानयभासमानं

त्वामद्य दुस्तमतमोहिमभासमानम् ॥ २७ ॥

या भाति नौः सकलशास्त्रसरस्वती व

क्रीडां तनोति जिनवक्त्रसरस्वतीव ।

विश्वं पुनाति च सुपर्वसरस्वतीव-

द्देयादियं सुखशतानि सरस्वती वः ॥ २८ ॥

इत्यस्तापरदेवसुन्दरमहःश्रीणां विलासालया

राकानिर्मलसोमसुन्दरयशःशुभ्रीकृताशाचयाः ।

नूताः श्रीऋषभादिवीरचरिमाः सार्वाश्चतुर्विंशति-

स्तन्यासुर्मम मुक्तिलम्भनचणां चारित्रलक्ष्मीं पराम् ॥२९॥

इति श्रीचतुर्विंशतिजिनस्तवनं स्तुतयश्च पं० चारित्ररत्नगणिकृताः ॥

---

कृत्वा ॥ २६ ॥ सकलभावान् विभासयन्तीति सकलभावविभासः तत्सम्बोधनम्, सतामुत्तमानां मानं पूजां प्राप्तम् । नतेभ्यो वितीर्णानि शुभानि येन तत्सम्बोधनम् । असमानं अतुल्यम् । दुस्तमानि अतिशयेन दुष्टानि यानि तमांसि तेषामहिमभासं सूर्यम् । मोहार्दितोऽहमद्य त्वां लब्ध्वा प्राप्य आनं अजीवं जीवितवानित्यर्थः ॥२७॥ सर्वशास्त्रसमुद्रे या नौरिव भाति । जिनवक्त्रसरस्सु अतीव क्रीडां तनोति । सुपर्वसरस्वती गङ्गा तद्वद्विश्वं पुनातीति योगः ॥ २८ ॥ इति अवचूरिः ॥

इति श्रीचतुर्विंशतिजिनस्तुतीनामवचूरिः ॥ पं० चारित्ररत्नगणिकृता ॥

श्रीमद्विजयानन्दसूरीन्द्रक्रमकमलाभ्यां नमः।

# अथ चतुर्विंशतिजिनस्तुतयः।

यत्राखिलश्रीः शिवपादपद्मयुगा दिदेव स्मरता नवेन।
सिद्धिर्मयाप्या जिन! तं भवन्तं युगादिदेव! स्मरतानवेन॥ १॥
समुद्भवो येन समूलदाहं देहे सदा भाविजयाङ्गजस्य।
शिवं दिशन्तामजितस्य तस्य देहे सदाभा विजयाङ्गजस्य॥ २॥
चेतस्त्यजार्तिं स्मरणैकतानंकल्याणरुच्या भव शम्भवस्य।
त्वं च प्रभो! मामनुकम्पयाऽऽशु कल्याणरुच्याभ वशं भवस्य॥३॥
श्रीसंवरक्ष्मापसुतस्य भव्यश्रीभा जनानाममिनन्दनस्य।
भक्तिप्रभावेन भवन्ति मुक्तिश्रीभाजनानाममिनन्दनस्य॥ ४॥

---

## अवचूरिः।

यत्राखिलेति। यत्र त्वयि अखिलश्रीः सुरासुरेन्द्रक्रियमाणसमवसरणादिसमग्रलक्ष्मीः, दिदेव क्रीडतीव पादावेव पद्मे कमले तयोर्युगं पादपद्मयुगं ततो बहुव्रीहिः। तं त्वां नवेन स्तोत्रेण स्मरता सिद्धिर्मुक्तिर्मयाऽऽप्या प्राप्या। हे युगा० स्मरतानवं कामकृशत्वं तेन उपलक्षणात्तत्क्षयेण हेतुना॥१॥ समुद्भवः समुत्पत्तिर्येन। देहे दग्धः। कस्य समुद्भवः। सदा० सदा भावी भविष्यत् उपलक्षणाद्भूतभवद्भूत(?)श्च हरिहरादिसेव्यत्वाज्जयो यस्य सचाऽसावङ्गजः कामश्च स तथा तस्य। कथम्? समूलदाहं भीमो भीमसेन इत्यादिवत् समूलवृक्षदाहं तस्याऽजितजिनस्य देहे वर्तमानाः सदाभाः सत्कान्तयः शिवं कल्याणं दिशन्तां ददतु ममेति गम्यते। अजितस्य किंभूतस्य? विजयादेवीपुत्रस्य॥२॥ हे चेतः! त्वं त्यज परिहर आर्तिं तिर्यग्गतिनिदानव्याकुलतां, ततः शम्भवस्य स्मरणैकतानं सुरनरतीर्थाधिपत्यप्राप्तिसौख्यानि तेषां रुचिः स्पृहा तया हेतुभूतया भव। चशब्दस्याप्यर्थत्वात् त्वमपि मामाशु शीघ्रं अनुकम्पय वाञ्छितवितरणेनेति गम्यते। कस्य? सुवर्णकान्तिवद् आभा दीप्तिर्यस्य स तथा, मां। किंभूतम्? भवस्य कर्मवेष्टितत्वात् संसारस्य वशवर्तिनम्॥ ३॥ अभिनन्दनस्य जिनस्य श्रीसंवरराजाङ्गजस्य भक्ति-

यः पावनो हंस इवोत्ततंस नालीककान्तं वरमङ्गलाङ्गम् ।
तं सिद्धिवध्वाः सुमतिं नमामो नाऽलीककान्तं वरमङ्गलाङ्गम् ॥५॥

त्वं येन मङ्गल्यरमालयेन पद्मप्रभावं दितवानेनेन ।
दृष्टेन लोकैः सकलं सुतीर्थं पद्मप्रभाऽवन्दि तवाऽऽननेन ॥ ६ ॥

धन्यः स मान्यो जिन! कस्य न स्यात् पृथ्वीप्रतिष्ठात्मज ! यस्तवेन ।
स्वभारतीं सारवतीं बभार पृथ्वीप्रतिष्ठात्मजयस्तवेन ! ॥ ७ ॥

---

माहात्म्येन जनानां मुक्तिश्रीभा भवन्तीति संटङ्कः । जिनविशेषमाह—भव्यानि कल्याणानि तेषां श्रीः, यद्वा भव्या मुक्तिगमनयोग्या जन्तवस्तेषां श्रीः संपत् भव्यत्वरूपा तस्या भाजनानां पात्राणां अभि० हर्षस्य ॥ ४ ॥ यो जिनः पावनः पवित्रः सन् हंस इव सुकुमारत्वादियुक्तत्वात् कमलमनोहरं । वर० सर्वलक्षण युक्तत्वात् वरमङ्गलादेव्यङ्गमुक्तं० विभूषयामास तं सुमतिं । सिद्धिवध्वाः नालीककान्तमननाचितत्वात् नाऽसत्यमुत्तरितम् । वरो वाञ्छितवितरणं मङ्गलानि च तेषामङ्गं कारणमभ्युपायमित्यर्थः ॥ ५ ॥ हे पद्मप्रभ! येनाऽऽननेन मुखेन त्वं पद्मप्रभावं पद्ममहिमानं दितवान् छिन्नवान् । किंभूतेन? "मङ्गल्यो रुचिरे स्वच्छे" इति वचनात् रुचिररमाप्रासादेन अनेन तवाननेन दृष्टेन लोकैः सर्वं स्थावर-जङ्गमात्मकं शोभनतीर्थमवन्दि । वदङ्स्तुत्यभिवादनयोरिति धातोः स्तुतं प्रणतं च । इह 'यस्य च भावेन भावलक्षणमि'त्यनेन सप्तमीप्राप्तावपि तृतीया हेतुविवक्षणाददुष्टैव । यद्वा सप्तम्येवाऽत्र व्याख्येया । तथाहि—येनाऽनेनाऽर्थात् स्ववदनेन त्वं पद्मप्रभा वंदितवान् । यत्तदोर्नित्याभिसम्बन्धात्तस्मिंस्तवानने दृष्टे सति ननाऽवन्दि । अपितु वन्दितमेवेति ॥६॥ हे जिन! स धन्यो धर्मधनार्हः कस्य मान्यो न स्यात्? अपितु सर्वस्यापि स्यादित्यर्थः । किंभूतः? पृथ्व्यां प्रतिष्ठा गौरवं स्थितिर्वा यस्य स तथा । आत्मनः समुत्थो जयः आत्मजयः पृथ्वीप्रतिष्ठ आत्मजयो यस्य स तथा । व्यत्यये लुग्वेति विसर्गलोपः । यो निजवाणीं फलवतीं स्तवेन बभार धारयामास कृतवानित्यर्थः, सारशब्दोऽत्र फलवाची, हे पृथ्वीप्रतिष्ठराजात्मज! अनेन प्रसिद्धविशेषणेन सुपार्श्व इति शेषं लभ्यते । तव भवतः । हे इन स्वामिन्! ॥७॥

यद्देहशोभाविजिता गुणेन चन्द्रप्रभा भासु रराज केन ! ।
जीया नत ! श्रीजिनचन्द्र ! स त्वं चन्द्रप्रभाभासुरराजकेन ॥ ८ ॥
भाव्यं यदाज्ञाविमुखेन खेलन्मुदा रमायामयशोधनेन ।
तेन त्वया श्रीसुविधे सुखी स्यामुदारमायामयशोधनेन ॥ ९ ॥
येनापि देहद्युतिडम्बरेण निष्कोपमा नन्दनशीतलस्य ।
तस्योज्ज्वलं क स्तवनेन वृत्तं निष्कोपमानन्द न शीतलस्य ॥ १० ॥
श्रेयांस ! यस्ते नमने समोदं मनोरमाभोगतमस्ततान ।
लब्धोदयं चुम्बति सद्गुणाली मनोरमा भोग तमस्तता न ॥ ११ ॥

---

चन्द्रप्रभा यद्देहनिष्कलङ्ककान्त्या सकलङ्कत्वाद्विजिता, केन? नैर्मल्यगुणेन, भासु शुशुभे? न केनापीत्यर्थः। हे चन्द्रप्रभ ! स त्वं जीयाः हे नत, केन? आसमन्तात् शरीराभरणभासुरनृपतिसमूहेन । यदुक्तं "राजा तु पार्थिवे निशाकरे प्रभौ शक्रे" इति, तेन । यद्वा आभाप्रधानाः सुरा आभासुरास्तेषां राजकेन ॥८॥ यदाज्ञापराङ्मुखेन नरेण सांसारिकसुखरमायां विलसन्ती चित्तप्रीतिर्यस्य तेन खेलन्मुदा भाव्यमवश्यं भूयते । कीदृशेन? न विद्यन्ते यशोधनानि यस्य तेन तथा । अथवा यशो माहात्म्यादिभेदात् षड्विधम् । यदुक्तमुणादिवृत्तौ "यशो माहात्म्यं सत्वं श्रीः ज्ञानं प्रतापः कीर्तिश्चेति" ततस्तदेव धनमस्य स तथा, तदभावादयशोधनः तेन त्वयाऽहं सुखी भवेयम् । कीदृशेन? उदारमायैव महाक्लेशहेतुत्वादामयस्तं शोधयत्यपनयति स उदार० तेन ॥ ९ ॥ येन देहरुच्याऽम्बरेण सुवर्णतुलाऽपि प्राप्ता तस्य शीतलस्य मेरुप्रथममेखलास्थितं नन्दनं वनम्, प्रशमपात्रत्वात्तद्वत् । शीतलस्याऽपगततापस्य । कः पुमान्, स्तोत्रेण वृत्तं चरित्रम् । कीदृशम्? निष्कोपं प्रभोर्नन्दनशीलत्वादपगतरोषदोषतापम् । अदुबन्धने इति वचनात् आनन्द बबन्ध न नैव ? अपि तु सर्वः कोऽपि ॥ १० ॥ यस्तव नमने मनो ननाम विस्तारयामास, किंभूतः? रामा लक्ष्मीः तस्याः भोगः पालनं रक्षणं, ततो न विद्यते प्रकृष्टरमाभोगो यस्य सोऽरमाभोगतमः, यद्वा सम्बोधनम् । "रमः कान्तौ रक्ताशोके मन्मथे च, रमा श्रिया" मिति वचनात् । रमः कामस्तस्याभोगः स्मरणं स एव तमो विवेकलोचनाच्छादकत्वात् । तमिस्तं न विद्यते तदस्य स तथा तस्यामन्त्रणम् । तं सद्गुणावली चुम्बत्याश्रयति । मनोहरा । हे अभोग त्यक्तवैषयिकसुख ! अस्तता धनस्वजनादिविहीनता नाऽऽश्रय-

यस्ते विधत्ते पदपद्मसेवां सदारुणश्रीप्रभ ! वासुपूज्य ! ।
भवार्तिगर्तासु बिभर्ति नाऽऽस्थां स दारुणश्रीप्रभवासु पूज्य ! ॥१२॥
भव्यं सदा यस्य नमस्यताऽसुमता पदावर्जितवैभवेन ।
दद्याः सुविद्या विमलेश ! स त्वमतापदा वर्जित वै भवेन ॥१३॥
मणीमिवाऽनन्त ! विलोक्य वृत्तोदारं भवन्तं जिनमीश्वरं च ।
श्रयेत कः काचमिवागुणत्वादारं भवन्तं जिनमीश्वरं च ॥ १४ ॥
अकारि कण्ठे गुणरत्नमाला धर्मस्य वर्यायतिना यकेन ।
लक्ष्मीः सदानन्दसुखाय तेन धर्मस्य वर्या यतिनायकेन ॥ १५ ॥
यस्ते यशः स्तौति नतामरेन्द्रमहीन ! शान्ते ! घनसारतारम् ।
स्वयंवरा तं वरयत्यपापमहीनशान्ते !ऽघन सारताऽरम् ॥ १६ ॥

---

तीत्यर्थः ॥११॥ यः पुमान् तव पदपद्मसेवां कुरुते इति संबन्धः । अरुणस्तरणि-सारथिर्वा तस्य या श्रीः प्रातस्त्यशोभा तद्वत्प्रभा यस्य तस्यामन्त्रणम् । नाऽऽस्थां चित्तस्थैर्यं न करोति, कासु ? इह भवशब्देनोपचारेण भवस्थवैषयिकसुखराशिस्त-स्यार्तयो लालसत्वात् चिन्ताविशेषास्ता एव दुःखहेतुत्वात् गर्ताः तासु । किंभूतासु ? दारुणश्रीप्रभवः कामो यासु ताः तथा तासु । हे प्रजामहनीयेति ॥ १२ ॥ यस्य तव पादौ नमस्यताऽसुमता प्राणिना भाव्यम्, कीदृशा ? उपार्जितचक्र्यादिश्री-केण, हे ईश ! स त्वं दद्याः प्रयच्छेः सुविद्या मतिज्ञानादिरूपाः । किंभूताः ? अता-पदाः न दुःखदाः, भवेन वर्जितेत्यामन्त्रणम् । वै पादपूरणे ॥ १३ ॥ चरित्रस्फारं त्वामवलोक्य मणिमिव । मणिरपि वृत्ताकारो द्युतिभिश्च स्फारः स्यात् । जिनं कृपणं, ईश्वरं रुद्रम् । गुणाभावात् काचसमं कः श्रयति ॥ १४ ॥ अकारि० यकेन पुंसा धर्मजिनस्य प्रशमादिगुणरत्नमालां कण्ठे स्तोतव्यतया चक्रे । किंभूतेन ? वर्योत्तर-कालेन तेन धर्मस्य पितृभूतस्य च लक्ष्मीः वर्या वरणीया, किंभूतेन गुणस्तवनार्थं तीर्थकृत् गणधरादिपदत्वात् यतिनायकेन मुनिराजेन । अन्योऽपि गुणवद्रत्नमालाल-लङ्कृतशरीरः सलक्षणस्त्रिया व्रियते ॥ १५ ॥ यः पुमान् घनसारः कर्पूरो दक्षिणावर्तपारदो वा तद्वत्सारमुज्ज्वलं यशः स्तौति, हे नतदेवेन्द्र महीन्द्र ! एतेन प्रभोस्तीर्थकृच्चक्रित्वे प्रादुर्भाविते । तं घनसारता वरतीति सम्बन्धः । अपापं पाप-

जनस्य दृष्टे त्वयि यत्र नाशं समक्षमापालनता पदेनः ।
गतागते स त्वमपास्य कुन्थो ! ऽसमक्षमापालन तापदेनः ॥१७॥
येनाऽर जज्ञे त्वयि विश्वभाना विलासमालम्बनदे नतेन ।
श्रेयस्तरूणां पदमापि स श्रीविलासमालं बनदेन तेन ॥ १८ ॥
विश्वत्रयीसौरभकारिकीर्तिमल्ले ! नमल्लेखपराजितेन ! ।
भक्तेन भाव्यं त्वयि धूतमोहसल्लेन मल्ले !ऽखपराजितेन ॥ १९ ॥
यस्ते वचः सुव्रत ! संप्रपेदे महामुने ! शासितमोहराज ! ।
कर्माष्टकं विष्टपनिर्मितोद्यन्महाऽमुने शासितमोहराऽज ! ॥ २० ॥
त्वद्भक्तिभाजा कुमतानि येन न मेनिरे ना भवतो यदस्य ।
समीर स स्यात् किमुपेक्षणीयो नमे ! निरेना भवतोऽयदस्य ॥२१॥

---

रहितम्, अहीनाऽनिन्द्या संपूर्णा वा शान्तिरशिवोपशमः क्षान्तिर्मुक्तिर्वा यस्मात् यस्य यस्मिन् वा तस्याऽऽमन्त्रणम् । घनं बहुलम् नवनिधानाद्यात्मकम् सारं द्रव्यम् तस्य मा लक्ष्मीः, यद्वा हेऽघन अशरीर! सारताऽनुरक्ताऽरं शीघ्रम् । तमन्यस्य विशेषणमाह–अरतं निवृत्तं आरं अरिवृन्दं यस्य स आरतारस्तम् ॥१६॥ जनस्य एनः पापं नाशमापत् प्रापेति सम्बन्धः । सर्वे च ते क्षमापालाश्च भूपाः शमिनश्च तैर्नतः प्राप्तचक्रितीर्थंकरपदत्वात् हे असमक्षमापालक ! संसारे गमनागमने स्य निराकुरु ॥ १७ ॥ हे अरजिन ! येन त्वयि विश्वभानौ नतेन नम्रेण जज्ञे जातम् । किंभूते ? इला पृथ्वी तस्याः सदुपदेशयष्टिदानादन्यायनिर्वाणाच्च सम्यगालम्बनं ददातीति स तथा तस्मिन्, तेन श्रेयस्तरूणां वनदेन जलदेन पदं साम्राज्यादि आपि प्राप्तम्, सह श्रीविलासस्य माल्या श्रेण्या वर्तते यत् तत् तथा ॥ १८ ॥ विश्वत्रय्यां सौरभकारिणी कीर्तिरेव मल्ली विचकिलो यस्य तस्यामन्त्रणम् । हे नमद्देवेन्द्रराजित ! हे इन हे स्वामिन् ! हे मल्लिजिन ! त्वयि भक्तेन पुंसा इन्द्रियपराजितेन न भाव्यम् । किंभूते ? धूतो निर्भर्त्सितो मोहमल्लो येन स तथा तस्मिन् ॥ १९ ॥ हे मुनिसुव्रत ! यस्तव वचः प्रपन्नवान् कर्माष्टकममुना हे ईश ! आसि क्षिप्तम् । विष्टपे निर्मिता उद्यन्महा येन तस्यामन्त्रणम् । दुर्भिक्षडमरविद्रावणप्रवणत्वाद्धमवतः । हे मिथ्यात्वादितमोहर ! न ज्ञायते दग्धबीजत्वात् भवाङ्कुरो इत्यजस्तस्यामन्त्रणम् ॥ २० ॥ येन त्वद्भक्तिभाजा कुत्सितशास्त्राणि न

नेमे ! यया सा रजसेपि मेने न यादवानां परमोदकः श्रीः ।
तमो मयानां मतिरस्तु तेऽस्तानया दवानां परमोदकश्रीः ॥ २२ ॥

ज्ञानोदये प्राप्य सुरासुरेभ्यः समुन्नतिं कामदमेन येन ।
मुक्तिः श्रिता पार्श्व ! विधेहि स त्वं समुन्नतिं कामद ! मे नयेन २३

मोहादतीतस्य तवेश ! वीर ! सुधीर ! सौभाग्यमुदग्रमायात् ।
मुक्त्यङ्गनालोभन ! यः स्तुते स्म सुधीरसौ भाग्यमुदग्रमायात् ॥२४॥

प्रासाद भो वः शिवसद्मपद्मपरागपूरा जितकाममायाः ।
वृद्धिं जिना यान्तु नितान्तकान्तापरागपूराजितका ममायाः ॥२५॥

---

मेनिरे नाऽमन्यत स ना पुमान् भवतस्तवाऽयंदस्य शुभदैवफलदातुः किं उपेक्षणीयः स्यादपि तु न स्यादेव । भववारिदस्य समीर वायो ! अज हे नमिजिन !, पुमान् किंभूतः निर्गतमेनः ? पापं यस्मात् स तथा ॥ २१ ॥ यथा तव मत्या हे नेमिजिन ! सा जगत्प्रसिद्धा परमोदकश्रीः परा प्रकृष्टाऽतएव सा चाऽसौ श्रीश्च सा० तथा । रजःकणायाऽपि न मेने न गणिता । केषां सत्का ? यादवानाम् । सा तव मतिरस्तानया क्षिप्तदुर्नया, तमोमयानां मिथ्यात्वादिजनितानां सुकृतवनदाहकत्वात् दवानलानां शमनायेति गम्यते, परमोदकश्रीरस्तु भवतु तत्र परमोदकस्येव श्रीः शोभा यस्याः सां तथा । यद्वा परमजलसंपत् ॥२२॥ हे पार्श्व ! येन त्वया ज्ञानोदये उपलक्षणाच्चयवनजन्मादिसमयेऽपि सुरासुरेभ्यः, आद्यन्तग्रहणे मध्यस्थस्यापि ग्रहणमिति न्यायान्मध्यलोकस्थव्यन्तरनरज्योतिष्केभ्योऽपि समुन्नतिं सहर्षनतिम् न तु बलात्कारजां प्राप्य मुक्तिः श्रिता, किंभूतेन ? कामदमनेन सत्वं समूहः, कामद वाञ्छितप्रद ! नयेन न्यायेन संसारिकसमुत्पत्तिर्विरसावसानत्वात्, समेकीभावेनोन्नतिं मुक्तिस्थितिरूपां विधेहि कुरुष्व ॥ २३ ॥ मोहात् उदग्रमायात्, अतीतस्यातिक्रान्तस्य न हे वीर हे सुधीर ! यः सौभाग्यं स्तुतेस्म तुष्टुवे "स्मे च वर्तमाने" त्यनेनाऽतीतेऽपि वर्तमाना । असौ सुधीः । भाग्यं च मुद्तयोरग्रं परमकोटिमायात् प्राप्तवानिति ॥ २४ ॥ हे जिनाः ! वो युष्माकं प्रसादतो ममाऽऽया ज्ञानादिरूपा लाभा वृद्धिं यान्त्विति । सम्बोधनान्याह–शिवसद्मैव पद्मं

यस्ते ननाम श्रुत मोहरेणुप्रभञ्जनस्य प्रभवेहितस्य ।
सदा प्रसादं तमसो गभस्तिप्रभं जनस्य प्रभवेहि तस्य ॥ २६ ॥
यस्तावकं भावयति प्रभावं पद्मासनास्ये ! श्रुतदेवि ! तारम् ।
भयादसौ मोहमयात् स्वमिन्दुपद्मासनास्ये श्रुतदेऽविताऽरम् ॥२७॥

॥ इति चतुर्विंशतिजिनस्तुतयः ॥

## चतुर्विंशतिजिनस्तुतयः ।

जयश्रीनेतारं प्रथमजिनपं नोनुवति ये
मुदा मामान्यन्ते त्रिदशवृषभैस्तेऽपि हरिवत् ।

---

अर्थात् सिताम्भोजं तस्मिन् परागपूरा इव । टादनेकार्थः । परागः सदने रेणौ गिरौ" इत्यादि । तथा नितां० नितान्तकान्ता चाऽसावपरागा निरुपलेपत्वादरजस्का । यद्वाऽन्तर्धातुस्वरूपमाश्रित्याऽपगतरागा सा, वपुश्च शरीरं तया राजिता एव राजितका ॥ २५ ॥ हे श्रुत श्रीजिनागम! यस्ते तव मोहरेणुवातस्य ननामाकर्माविवक्षायां षष्ठी । हे प्रभव उत्पत्तिस्थान! ईहितस्य वाञ्छितार्थस्य, तस्य जनस्य । प्रसादमेहि आगच्छ । हे प्रभो स्वामिन् ! न तमसोऽज्ञानस्य गभस्तिप्रभेव प्रभा यस्य तत्तथा ॥ २६ ॥ हे श्रुतदेवि हे पद्मपीठकृतस्थितिके! यस्त्वदीयं श्रुतदानप्रभावं ध्यायति, तारं वस्तु स्वरूपाविर्भावकत्वात् दीप्रम् । असौ अज्ञानादिभवात् भयात् स्वमात्मानं अविता रक्षिता, अरं शीघ्रम् । हे इन्दुलक्ष्मीतिरस्कारिमुखे! तथा हे श्रुतदायिके! ॥ २७ ॥

॥ इति श्रीचतुर्विंशतिजिनस्तुत्यवचूरिः ॥

### अवचूरिः

जयलक्ष्मीस्वामिनं, णूत स्तवने णू० व० अन्तेति यङ्लुबन्तेन नोनवीति नोनौति नोनुवति ॥ ५७ मानि पूजायाम्, मान्० व० अन्ते क्य० य यङ्लुतं०

प्रपे प्रीयन्ते ये वृषभजिननेत्रामृतरसैः
प्रपेप्रीयन्ते ते युवतिमिरहो विष्णुवितृवत् ॥ १ ॥
यज्जन्मैकविधौ चतुर्विधसुरैर्मोमुद्यते मेरुव-
च्छक्रैर्दिव्यविभूषणैर्जगति यो बोभूष्यते स्वाङ्गवत् ।
जेजीयादजितः समेन्द्रमहितः सर्वान् रिपून् सर्वतः
श्रीहस्त्यङ्कजिनः प्रशीर्णवृजिनः सिद्ध्यै प्रपोपोष्टु नः ॥ २ ॥
स्तोतुं यः सपनीपनीति नवनैः श्रीसंभवं श्रीभवं
माहात्म्यात् स पनीपदीति जिन ते पारं भवाम्भोनिधेः ।
रोदस्योरपनेनयीति दुरितध्वान्तानि मार्तण्डव-
न्मोक्षस्योपरि जेयीतु स धियं वो वाजिलक्ष्मा जिनः ॥३॥
द्वेधारीनभिदादयीति निजकांस्त्वभ्रामशस्त्रैस्त्रिधा
धूपाधानमिदादयीति यगुरून् यो धूपसारादिवत् ।
पूजायै परिदादयीति पुरतस्ते भोग्यभोगांश्च यः
स ब्रह्मोपरि दादयीतु खलु तान् श्रीसांवरेयः सुखैः ॥४॥

मामान्यन्ते २१ इन्द्रवत् प्र० पू० प्रीगृ्क्ष तृप्तिकान्त्योः प्री० कान्तिरभिलाषः प्र० पू० प्रीं० य० अन्ते यङ्लुबन्ते प्रेप्रयीति प्रेप्रेति, क्य० य, पेप्रीयन्ते ६२ वसुदेवतत् ॥ १ ॥ मुदि हर्षे, मुद् यङ्लुबं० ये व० ते २१ भूष अलङ्कारे, भूष् क्य० भवते यङ्लु० १९ जिञ्जि अभिभवे, जि यङ्लुबं० आशीः क्यात् जेजीयात् १० पुषव् पुष्टौ, पुष् यङ्लुबं० पं० तुव् पोपोष्टु ४५ ॥ २ ॥ पदिंब् गतौ ज्ञाने च, प्र० पद् यङ्लुबं० व० तिव् अटार्थे जानाति ४९ संसारसमुद्रस्य पारं गच्छति सः द्यावापृथिव्योः दुःखान्धकाराणि, अपपू० णींय् णप् णेपीं० यङ्लु० व० तिव् परि व० ॥ ३ ॥ उपरि······वृद्धिं हिंद् गतिवृद्धयोः, हि० पं० तुव् यङ्लु० जेजयीतु जेजेतु ५२ द्व बाह्यान्तरानभि० पू० दवि दान-भत्तिदानेषु, वयू० व० तिव् यङ्लु० दन्दयीति दादयीति २२ ॥ ४ ॥

सर्वे मोमुषतीश मेऽद्य रिपवो जात्याचलक्ष्मीं प्रभौ
प्राग् विज्ञापयितुं जगाम पदयोः कोष्ठोऽङ्कुदम्भात् किल
यस्य प्रोपुषतीह मामतिशयाश्रितप्राप्तिसम्पत्तिभिः
स श्रीमानमिदन्दयीत सुमतिः शैवं पदं मेघभूः ॥ ५ ॥

योग्यस्तेऽभिसरीस्मरीति यभिधां पद्मप्रभो स्वे मनः
पद्मान्तेऽभिसरीसरीति पदवीं शैवीं समश्रेयसीम् ।
सौसीमेय मरीमरीति महता कृत्यैः स ते भेकवत्
प्राणी सैष दरीधरीतु कमलां सौरीं विभोर्वैभवात् ॥ ६ ॥

यो यः श्रीजिन ! दन्दयीति मदनं ते दर्शनाच्छम्भुव-
च्छक्रत्वे स सदन्दयीतु विभवात्सीतादिवत्तैर्वनैः ।
विघ्नौघान् भुवि दन्दयीषि भविनां यस्त्वं फणाकैश्छिदन्
श्रीपृथ्वीभव दन्दरीतु भवतस्स श्रीसुपार्श्वेशवः ॥ ७ ॥

पराः शाशंस्यन्ते सुरसुरगणैस्ते गुणकणाः
पराः शाशंस्यन्ते द्विविधरिपवस्तैस्तव बलात् ।
वनीस्कन्दीत्यङ्गं विविधतपसा यो विरजसा
वनीस्कन्दीतिवन्दुध्वज जिनपते ! सोऽक्षयपदम् ॥ ८ ॥

---

मुषश् स्तेये, मुष्० व० तिव् यङ्लु० ६५ त्वयि प्रभौ सति । पू० पुषश् पुष्टौ, पुष् व० तिव् यङ्लु० ६५ दयि दानगतिर्हिंसादानेषु, दय्० पं० तुव्० यङ्लु० २२ ॥ ५ ॥ अभिस्मृ चिन्तायाम्, स्मृ० व० तिव् यङ्लु० ११ अभिसृं गतौ, सृ० व० तिव् यङ्लु० ११ मृंत् प्राणत्यागे, मृ० व० तिव् यङ्लु० १५ धृग् धरणे, धृ० व० तिव्० यङ्लु० २३ सुरसम्बन्धिनी लक्ष्मी ॥ ६ ॥ दयि दानादि० दय्, व० तिव्० यङ्लुबं० २२ ॥ ७ ॥ शंसू स्तुतौ चाहिंसायाम्, परा पू० शंस्० व० अन्ते यङ्लु० क्य० य ॥ १४ ॥ स्कन्दं गतिविशोषणयोः, स्कन्द्० व० तिव्० यङ्लु० १५, द्वितीये मोक्षे

वरीवृह्यन्ते यैर्नुतिकृति तवाग्रे नरगजै-
वरीवृह्यन्ते ते हरिहरिरसैर्दीपशिखवत् ।
परीप्रीयन्ते यैः सुचरणगुणास्ते शिवसुखैः
परीप्रीयन्ते श्रीसुविधिजिनपः सोऽस्तु शिवदः ॥ ९ ॥
प्रणेनिन्द्यन्ते यैः खलु तव पुरः स्वा अघभराः
प्रणानन्द्यन्ते ते सुरवरसुखैर्निर्वृतिपुषैः ।
वितन्तन्यन्ते यैः सुनवनवनै( )शक्तवगुणाः
प्रसेषिध्यन्ते ते जिनवदचले शीतलपदे ॥ १० ॥
श्रीश्रेयांस जिनेन्द्रचन्द्रविभवः शेश्रीयते यैर्मुदा
श्रेयोऽन्तन्तकला दरिध्रति हि ते निश्रेयसस्सम्भवाः ।
यां ते पञ्चपदीं सरिस्मृति तु ते शैवीं रमां यान्ति ते
स श्रीविष्णुभवो विदाददतु नस्ते सम्पदामास्पदम् ॥ ११ ॥
सम्मामान्य सुमैः प्रणोनुवति ये श्रीवासुपूज्यं जिनं
रोहिण्यादियवत् प्रबाभजति ते शैवाः श्रियोऽर्चाबलात् ।

---

गच्छतु स जनः ॥ ८ ॥ वृहु शब्दे चाद् वृद्धौ, वृह् यङ्लु० क्य० य० व० अन्ते १५ स्तुतिकृतौ नरगजैः चक्रेन्द्रैः हर्षैः दीपशिखवत् राज्यवृद्ध्येति । प्रृंक् पालनपूरणयोः, ए० व० अन्ते यङ्० लु० क्य० य० ४१ यैर्नरैश्चारित्र-गुणास्ते शिवसुखैः पूर्यन्ते ॥ ९ ॥ णिदु कुत्सायाम्, प्र० प्रणिद्–यङ्लु० क्य० य० व० अन्ते पापभरार्थैर्निन्द्यन्ते १५ वट्णद् समृद्धौ, नन्द् प्र० पू० क्य० य० यङ्लु० १५ वि० पू० तनूयी विस्तारे, यङ्लु० १६ षिध् गत्याम्, प्र० षिध् यङ्लु० क्य० य० व० अन्ते गच्छन्तीति मोक्षे पदे १५ ॥ १० ॥ श्रिग् सेवायाम्, श्रि० यङ्लु० क्य० य० ते २३ कल्याणाऽनन्तकलाः धृग् धारणे, धृ० व० अन्ति, यङ्लु०, नि निश्चितम् । पञ्चावस्थाम् स्मृ चिन्तायाम्, स्मृ० व० अन्ति यङ्लु० ११ ज्ञाने डुदांग्क् दाने, दा० पं० तुव् ४१ ॥ ११ ॥ संमान पूजायाम्—, भजी सेवायाम्, भज यङ्

पर्जन्या इव दाददत्यतिरसैर्धान्यानि सर्वाणि ते
मार्तण्डा इव विश्वभव्यकमलान् बोबोधयन्त्यन्वहम् ॥१२
ये नैर्ग्रन्थ्यपदं सरीसृपति ते जैनेन्द्रशुद्धव्रतैः
स्वर्गं सेषिधतीश ! पुण्यविभवैस्त्वप्राग्भवा मर्त्यवत् ।
देवेन्द्रैः कृतवर्मपुत्र नवनैर्वावन्द्यते यस्त्रिधा
स श्रेयो विमलो ददातु विमलो मुक्तैः श्रियो नोऽनिशम् ॥१३
तातक्षीति तपोबहुप्रहरणैर्दैधामितारातिकान्
स श्रीविष्णुकुमारवच्छिवपदं जागेति ते ध्यानतः ।
यो वानन्तवदादधाति सुमनःपूजां विभो भिल्लव-
ल्लालम्भीति सुवैभवं स समयादल्पादनन्तेशितः ॥ १४ ।
त्वन्नामाविरतं बरिभ्रति मनःपद्मेषु ये पद्मव-
त्तेषां कीर्तिसुकेसरैश्च सुरभीचक्रेऽब्जवद्विष्टपम् ।
ये लालम्भति मूर्तये सुमहनं श्रीसुव्रतेयोत्सुमैः
शक्राद्याश्च सदैव मामहति ताँस्तान् धर्मनाथोऽवतात् ॥१५

---

लु० व० अन्ति, २५ दयि दानगतिहिंसादानेषु, दय्० व० अन्ति यङ्लु
२२ बुधिं मनिच् ज्ञाने, बुध् यङ्लु० णिग् ५० ॥ १२ ॥ साधुत्वपद
सृप्लृ गतौ, सृप्० यङ् लु० १५ षिध् गत्याम् । षिध् यङ्लु० १५ धातकी
खण्डे विदेहभरताह्वे विजये महापुरीनगर्यां प्रजासेनो नृपः सर्वगुरोः पार्श्वे दीक्ष
लात्वा सहस्रारकल्पे देवः २ वदुंङ् स्तुत्यभिवादनयोः, स्तुतिर्गुणप्रशंसा, अभि
अभिसृ दनं पादयोः प्रणिपातः । वद् क्य० य० यङ्लु० २० स्तवनैर्मनोवाक्कायैः
लु० १५ गक् दाने, दा० पं० तुव्० ह० व० ४२ अस्माकम् ॥ १३ ॥ तक्षौ तन
॥ ६ ॥ तक्ष् यङ्लु० १९ यो नर इति ज्ञेयम् । गाङ् गतौ, गा० यङ्लु० १
स्तुतो चार्हं धारणे, चाह्वाने । धाङ् पू० ह्वे० ४२ विष्णुवत् जिनस्य भिल्लवत्
स्कन्दं गतिविशो पत्तनईहि जलुतो हन छूड हत्थ" इति । (?) डुलभिंष् प्राप्तौ, का
१ हे अनन्त! हे ईशितः! ॥ १४ ॥ डुभृंगक् पोषणे । चा

दुष्टानिष्टभरानिहाजरिहरीयः सौवजन्मक्षणे
हित्वा चाक्रिकसम्पदोऽप्यजरिगर्हीदिद्रुसंविद्वयः ।
निःश्रेयःसुखमाश्रियो वरिवृतीयश्चाचिरेयः प्रभुः
स श्रीशान्तिजिनस्तुतः परिपरीत्विष्टार्थकान् शाश्वतान् १६
यैः श्वेतातपवारणोरुचमरैर्मामन्यते यः प्रभु-
र्भव्याः पापरतीशिताः पदमहो आरामशोभादिवत् ।
ये वा मोमुदति प्रवीक्ष्य भगवंस्ते तीर्थकृद्वैभवान्
स श्रीकुन्थुविभुर्नतामरविभुर्मामातु सौवाः श्रियः ॥ १७ ॥
त्वद्ध्यानासिलतायुधैः शमशितैर्योऽजङ्घनीद्विद्विषो
निष्पापं मुनिमार्गकं त्वमिव वा योऽजङ्घनीत्सद्यमैः ।
द्वेधारातिगणोऽपि येन भवता नानाथ्यते लक्षधा
नन्द्यावर्तसुलाञ्छनोऽक्षरघनो नानातु नोऽरो जिनः ॥१८॥

धारणे । भृ० यङ्लु० अन्ति ४२ । धातकीखण्डप्राच्यविदेहे ऐरावताख्ये विजये पद्मरथनामा राजा चित्रसंज्ञगुर्वन्तिके व्रतमादाय पुष्पोत्तरविमाने सुर इति सप्टङ्कः । सुरभी पू० कृ० डुकृंग् करणे, कृ० असुरभी सुरभीचक्रे २३ डुलभिष् प्राप्तौ, लभ्० यङ्लु० व० अन्ति २१ अर्ह मह पूजायाम्, मह यङ्लु० व० ति १९ धर्मनाथोऽवतात् १५ हृग्ङ् हरणे, हृ० यङ् लु० २३ ग्रहींश् उपादाने, ग्रह् यङ्लु० अद्य० तिव्० गृह इत्यत्र लुप्ततिव्निर्देशान्न दीर्घः ६२ दीप् ज्ञाने, हे,(?)वृतुङ् वर्तने, वृत् यङ्लु० अवरि ११ वृवर्त व्रती, वृत्ताम्, वृतुः वृतीः, वृत्तम्, वृत्त, २७ पृंक् पालनपूरणयोः, पृ० पं० तुव् यङ्लु० ४१ अभीष्टान् । पृश् पालनपूरणयोः, पृ० यङ्लु० अन्ति ६४ मुदि हर्षे, मुद् यङ्लु० १५ मेंङ् प्रणिदाने । मा० यङ्लु० १९ मोक्षलक्षणाः ॥ १७ ॥ हनंक् हिंसागत्योः, हन्० यङ्लु० द्य० दिव्० अ०. अजङ्घ ६ त्, नीत्, प्रताम्, नुत्, तं ३७ नाधृङ् उपतापैश्वर्ययोः, नाथ् यङ्लु० क्येति सिद्धम्, २०

येऽताभ्रासिषुराशु भाविभविका याञ्ञां शिरश्छेखरां
ते ढोढौकतु तान् प्रतीन्द्रनिकरांस्त्वन्मित्रवत् स्वःश्रियः ।
श्रीमल्लीजिनपादपद्मयुगली यैरर्च्यते यस्य ते
स श्रीकुम्भभवो भवोदधिरजोमीभ्योऽपि पापेतु नः ॥१९॥

कर्मैधांसि निदन्दहीति जिन ! ते जापाग्निना दाववत्
सेन्द्रादीनपि जाहसीति विभवैर्वर्धिष्णुभी रामवत् ।
यस्यांह्रिद्वितयी मुदं सुमनसां लालेति सीतेन्द्रवत्
स श्रीमान्मुनिसुव्रतो जनिततेर्नो जोगुणीत्वार्तितः ॥ २० ॥

ये शाशक्ति धर्मतत्त्वकृतये शैवर्द्धये ते विभो !
प्रालोलोकति तेऽङ्गिनो हि नरकात् सप्तापि चार्वाकवत् ।
ये शाशंसति यं नमिं नवनवैः स्तोत्रैः सुरेन्द्रादिवत्
ते शाशंसतु किंनु नो अतिशयाः सर्वेऽपि तेषां रिपून् ॥२१॥

व्यक्षेषु प्रभुता शिरोवहनता मे बोभवीद्दक्षिणा-
वर्ताख्याऽपि वरीवरीति विभवाच्छङ्खोऽपि बाभक्ति ताम् ।

---

तीर्थंकरोऽरोऽस्माकम्, मोक्ष एव धनं यस्य ॥ १८ ॥ दैङ् त्रैङ् पालने, त्रै यङ्लु० अद्य सिवियमिनम्येति इट् सोऽन्तश्च अताभ्रासीत्, सिष्टाम्, सिषुः, सीः, २० ढौकृङ् त्रौकृङ् टीकृङ् लघुङ् गतौ, ढौक्, यङ्लु० व० अन्ति, २० पांक् रक्षणे, पा० यङ्लु० पं० तुव् ३३ अस्माकम् ॥१९॥ दहं भस्मीकरणे, नि० पू० दह् यङ्लु० १९ हसे हसने, हस् यङ्लु० १९ लांक् आदाने, ला० यङ्लु० ३३ अस्माकम् गुपौ रक्षणे, गुप् यङलु० १६ पीडातः ॥ २० ॥ रकृङ् शकङ् शङ्कायाम् । शक् यङ्लु० २० प्राङ् पू० लोकृङ् दर्शने, लोक् यङ्लु० ॥ २१ ॥ शंस् स्तुतौ, चाद्धिसायाम्, शंस् यङ्लु० १९ ते त्रिजगतीप्रसिद्धाऽतिशयाः हिंसन्तु द्विष इति सम्बन्धः २१ । द्वीन्द्रियाद्येषु नाथता भू । सत्तायाम्, भू यङ्लु० ८ वृतुङ् वर्तने, वृत् यङ्लु० २७ ता भुवनविख्याता

यस्यां किं किल याचितुं तव पुरः शक्रश्रियः शाश्वतीः
  स श्रीनेमिजिनः प्रणम्रभुवनस्त्रात्रेतु तात्रेतु नः ॥ २२ ॥
मूर्तिं यायजतीश ! ते सुमनसां भक्त्यैव ये सच्छ्रिये
  नूनं यायजतीह राज्यविभवैर्देपालवत् तेऽङ्गिनः ।
ये वा जाजपतीद्धमन्त्रमणिवत्ते यस्य नामान्यहो
  पापूर्याच्छिबिनो गुणांश्च सकलान् श्रीपार्श्वनाथः स नः २३
मूर्तिं मामदति स्म वीक्ष्य जिन ! ते देवाधिदेव ! प्रभा-
  वत्याद्या इव ये परीप्रति हि तान् देवर्द्धयः सिद्धयः ।
येनाजायि हरिर्बलादिह महावीरो वरीवर्त्यसौ
  यं सिंहोऽङ्कमिषान्नृसिंहमभजत् श्रीवर्धमानः श्रिये ॥ २४ ॥
एवं ये वृषभादयो जिनचतुर्विंशाः प्रवावन्दिता
  लक्ष्मीसागरसूरिराजपनिता रत्नत्रयीनन्दिताः ।

---

भर्जी सेवायाम्, भज् यङ्लु० सुखविज्ञानाऽनन्तलक्षणाः दैङ् त्रैङ् पालने, त्रै यङ्लु० षष्मु चा० द्विलम् १९ अस्माकम् ॥ २२ ॥ यजीं देवपूजायाम्, संग० यज् यङ्लु० व० अन्ति, हर्षश्रियै त्रिष्वप्यर्थेषु पृथग् ज्ञेयः जप मानमेव, जप् यङ्लु० व अन्ति, दीप्रमणिवत् नामानि ते तव पृश् पालन-पूरणयोः पृ० यङ्लु० स० यात् ६४ अस्माकम् सिद्धिवतो गुणान् ॥ २३ ॥ मदेव् हर्षे, मद् यङ्लुबन्त० व० अन्ति, अन्तो न् लोपः दृष्ट्वा हे सर्वज्ञ ! तव देवतानामधिदेव ! श्रीवर्धमान ! प्रभावत्याद्या राज्ञाद्या इव, येन भवता जिजृ अभिभवे, जि० अद्य० दिव् । प्र० अङ् घा० अङ् हरिः सिंहः वृतूङ् वर्तने, वृत् यङ्लु० यङ् तु० ईत् रि रौरी राग० व० ति० त्रिभुवनप्रत्यक्षः, भजी सेवायाम्, भज् अद्यत० दिव्, स जगत्प्रसिद्धः स्तुविति प्राग्वम् ॥ २४ ॥ प्र पू० वदङ् स्तुत्यभिवादनयोः, वद् यङ्लु० क्त० प्र० श्रीसमुद्रा ये सूरयः सूर्या राजानश्चन्द्रास्तैः पनि स्तुतौ, क्तप्र० ज्ञानादित्रयीनन्दिताः भुवनत्रयविख्याताः

ते देदीपतु सार्वनिर्वृतिसुखैः सर्वायसंवित्श्रियः
श्रीमन्तो जिनमण्डनाः शिवपुरः पोपूरतूवैः श्रियः ॥२५॥

इति चतुर्विंशतिजिनस्तवनं नमस्काराश्च ।

प्रागैरावतभारतैकजनुषोऽसाम्नायिषुर्वासवैः
स्वर्णाद्रौ त्वपरीपरुस्त्रिजगतीदानैः स्वसांवत्सरैः ।
लब्ध्वा ज्ञानमजङ्गमुः शिवपुरीयेऽनन्तसौख्यां मुनीन्
श्रीसङ्घानभिपप्रतुः स्वविभवैः पुण्योद्भवैस्ते जिनाः ॥ २६ ॥

या मध्येसदसं जिनैस्त्रिपदिकादीपी स्म राराज्यते
भास्यन्ते स्म ततोऽपि पूर्वसमयोद्दीपा गणीन्द्रैः परैः ।
देदीपीति ततोऽपि भासितजगत्सिद्धान्तदीपोऽर्कव-
द्विश्वान्धंकरणं तमोऽप्यपहरन् भूयात् स सङ्घः श्रिये ॥२७॥

सङ्घो यः परिपर्ति यां प्रमहितुं सम्यक्त्ववैशारदां
ध्यातुं वा दरिदर्ति हृत्सरसिजे श्रीतीर्थकृच्छारदाम् ।

---

दीपैव् दीप्तौ, दीप्, यङ्लुबन्त० व० अन्ति पूरैव् आप्यायने पू० यङ्लुबन्त० पं अन्त० अन्तु नो लोपः अतिशयेन क्रिया० ज्ञानयशोमहत्त्वाद्याः ॥ २५ ॥ ... ... ...दशक्षेत्रेषु अद्वितीयजन्मानः । ष्णांक् शौचे, यङन्त० यांक्० वत्० इन्द्रैः, मेरौ पुनरर्थे, पृंक् पालनपूरणयोः पृ० यङ्लुबन्त० अद्य० अन् प्राप्य केवलम्, अम गम्लृं गतौ, गम० द्य० अन् यङ्लुबन्त० इव, शिवनगरीं अभि पू० पृंक् पालनपूरणयोः, पृ० पं० अन्तु, यङ्लुबन्त० पूर्ववत् समवसरणादिसंपत्तिः ॥ २६ ॥ मध्ये समवसृतिं, तीर्थङ्करैः "उपन्नए वा विगमे वा धुवे वा" इति त्रिपदिकादीपिका राजृंग् टुभ्राजि दीप्तौ, राज् यङ्लु० क्वे अश् य० व० ते० । भासि दीप्तौ, भास् व० अन्ते, क्य० श० य० चतुर्दशपूर्वादिसमयोद्दीपाः गणभृद्भिः प्रकृष्टैः, दीपैव् दीप्तौ, दीप्० यङ्लु० व०

रक्षायै परिपर्त्वसौ जिनमतं तं क्षीणकष्टारकं
विघ्नेष्टैः परिपर्तु सा भगवती श्रीसङ्घभट्टारकम् ॥ २८ ॥

एभिस्त्रिभिः काव्यैश्चतुर्विंशतिजिनानां स्तुतयो भवन्ति ।
( संवत् १५२७ वर्षे का. व. ६ )

---

श्रीः ।

## स्तुतयः ।

सकलभट्टारकसभाशचीशचीहृदयेश्वरभट्टारक श्रीश्रीश्री
५ श्रीश्री विजयानन्दसूरीश्वरगुरुभ्यो नमः ।

### श्रीआदिदेवस्तुतिः ॥ १ ॥

श्रीनाभिसूनो वस सिद्धिपुर्यां निःशेषशर्मावलिपूरितायाम् ।
दुष्टाष्टकर्मावनिभृद्विनाशसुधाशनाधीश्वरसिद्धिदाता ॥ १ ॥
समस्ततीर्थप्रभवः प्रकृष्टं प्रभावयुक्ता ददतां सतां शम् ।
मुखप्रभावाधितशीतपादाः समर्त्यशक्रालिनिषेव्यमाणाः ॥ २ ॥
राद्धान्त एष प्रकरोतु सिद्धिं क्षीणाष्टकर्माननपद्मजातः ।
निर्देशतस्तीर्थकृतां गणेशाः सूत्रं यदीयं रचयाम्बभूवुः ॥ ३ ॥

---

तिव् । दृशृं प्रेक्षणे, दृश् यङ्लुबन्त० व० तिब्० अडागमे मेजेति श्चष पृंक् पालने, द्वं क्रिये पूर्ववत् ॥ २८ ॥

इति श्रीचतुर्विंशतिस्तुत्यवचूरिः ॥

---

चक्रेश्वरी सा मम मङ्गलालीमहर्निशं मङ्क्षु सुरी तनोतु ।
सूरीश्वरानन्दगुरोर्गणे या समीहितं राति सुहंसवाणी ॥ ४ ॥

इति श्रीऋषभदेवस्तुतिः ॥ १ ॥

---

## अथ श्रीअजितजिनस्तुतिः ॥ २ ॥

नमाम्यहं श्रीविजयाङ्गजातं समीहितोत्सर्जनपारिजातम् ।
उभिद्रहेमाम्बुजचारुकान्तिं सौवाननश्रीजितशुभ्रकान्तिम् ॥१॥
तमाप्तसङ्घातमहं वहामि श्रीखण्डकाश्मीरजपुष्पमुख्यैः ।
प्रचण्डमार्तण्डविमानकान्ति यद्धर्मचक्रं गगने चचाल ॥ २ ॥
श्रीद्वादशाङ्गीत्रिदशापगा या सर्वज्ञगौरीजनके प्रशस्ता ।
मुखाब्जशोणात् प्रससार विश्वे निःसृत्य सा कर्ममलं जहातु ॥३॥
श्रीरोहिणी सा विदधातु भद्रं शरीररोचिर्जितरोहिणीशा ।
सद्रोहिणीनन्दनगौरकीर्तिः संरोहिणी सर्वतमोभरेषु ॥ ४ ॥

इति श्रीअजितजिनस्तुतिः ॥ २ ॥

---

## अथ श्रीशम्भवजिनस्तुतिः ॥ ३ ॥

अभिष्टुमः शम्भवतीर्थराजं नमन्नरामर्त्यसुराधिराजम् ।
जितारिसन्ताननभोनभोगं सम्प्राप्तकैवल्यवशोपभोगम् ॥ १ ॥
जिनोत्तमास्ते सततं समग्रा रक्षन्तु संसारभयान्मनुष्यान् ।
यद्दर्शनात् कल्कगणाः प्रणाशं प्रयान्ति मेघादिव वेणुवाराः ॥२॥

श्रीवीतरागागमवीचिमालिपुत्रीहृदीशाग्रज एष नित्यम् ।
अज्ञानभूमीधरमाशु सप्तनयस्फुरद्वज्रधरो निहन्तु ॥ ३ ॥
हर्षप्रकर्षं मम मानसीयं दद्याद् सुरी राजमरालयाना ।
वज्रं करे वारिजनेत्रयुग्मा विद्युल्लतागात्ररुचिर्दधाना ॥ ४ ॥

इति शम्भवजिनस्तुतिः ॥ ३ ॥

## अथाऽभिनन्दनजिनस्तुतिः ॥ ४ ॥

वन्देऽभिनन्दनजिनं जनरञ्जनं तं
श्रीसंवरान्वयसुरालयवज्रपाणिम् ।
सावद्ययोगविरतं रततोयवाह-
प्रोज्ज्वासनोद्धतसमं रणमाप्तसातम् ॥ १ ॥
भव्या जिनेश्वरगणं श्रयत प्रकामं
यूयं क्षमारसपयःसरिदीशचन्द्रम् ।
श्रेयस्करं सुकृतिनां नतकन्धराणां
यं देवताधिपतयः प्रणमन्ति शश्वत् ॥ २ ॥
सम्यग्दृशां जिनवरागमसत्कुमारो
हर्षं चिनोतु सुतरां प्रियवाक्यसारः ।
रम्यस्वरः सुगतिदर्शनदायिदेहः
स्फूर्जद्गुणावलियुतो जगति प्रतिष्ठः ॥ ३ ॥
वज्राङ्कुशी सकलशर्मविधायिनी सा
पुंसां सुखं प्रवितनोतुतरां मृगाक्षी ।
याऽनेकपं श्रितवती दधती कराभ्यां
दम्भोलिमङ्कुशमलं च मरालभासम् ॥ ४ ॥

इत्यभिनन्दनजिनस्तुतिः ॥ ४ ॥

## अथ श्रीसुमतिजिनस्तुतिः ॥ ५ ॥

सुमते सुमतेऽसुमतां सुतरां सुगतिप्रद ! मेघमहीशसुत ! ।
तव दर्शनमत्र मनोज्ञमपाकुरुताद्दुरितं चिरकालभवम् ॥ १ ॥
वितताम यदीयजनुःसुमहं शिखरे तपनीयगिरेः प्रमदात् ।
शतयज्ञततिस्तपनीयघटैस्तमहं प्रणमामि जिनेशगणम् ॥ २ ॥
भगवन्भवताद् भवतो वचनं भवतो भवतो भवमीतिहरम् ।
कुमतोत्कटहस्तिमृगेन्द्रसमं दुरितव्रततिक्षयसामभवम् ॥ ३ ॥
समवाम्बुददेहरुचिर्भयतो मनुजान् बत कालि सदा सदया ।
अवनीधरभृद्वरदया सहिता सहिता महिताऽमलदन्वततिः ॥ ४ ॥

इति सुमतिजिनस्तुतिः ॥ ५ ॥

## अथ पद्मप्रभजिनस्तुतिः ॥ ६ ॥

पद्मप्रभः प्रतिदिनं प्रददातु पद्मां
प्रौढप्रमादपवनाशनपन्नगारिः ।
श्रीमद्धरक्षितिपतेः कुलमेरुकल्पो
रक्ताङ्कभूघनरुची रुचिरप्रभावः ॥ १ ॥
संसारनीरनिधिपीतसरिद्धदीशा-
स्तीर्थङ्कराः शुभभरं मम ते दिशन्तु ।
सन्त्यज्य ये नृपरमां गजवाजियुक्तां
मुक्तिश्रिये तृणमिवाददिरे तपस्याम् ॥ २ ॥

मूर्ध्ना वहे जिनवरागमपुण्डरीकं
सद्भङ्गजालदलसञ्चयपूरिताङ्गम् ।
सप्तप्रधाननयनालविराजमानं
विद्वत्षडङ्घ्रिसुखदं पदवारिसंस्थम् ॥ ३ ॥
गौरी सुरी मम सदा विदधातु भद्रं
कुन्देन्दुशङ्खरजताचलचारुकान्तिः ।
प्रध्वस्तदोषनिचया निचिता गुणौघैः
सारङ्गशावनयना जयदायिनीयम् ॥ ४ ॥

इति पद्मप्रभजिनस्तुतिः ॥ ६ ॥

## अथ सुपार्श्वजिनस्तुतिः ॥ ७ ॥

सुपार्श्व! तीर्थनायक! कुरुष्व मे मनोगृहे ।
निरन्तरं मुदास्पदं शिलीमुखो यथाम्बुजे ॥ १ ॥
स्वयंभुवां व्रजं सदा नमामि नम्रनाकिपम् ।
समस्तसौख्यदायकं निरस्तपञ्चसायकम् ॥ २ ॥
जिनेन्द्र! राजते तवाऽऽगमो गमावलीयुतः ।
स्फुरन्नयाब्जभास्करः कुवादिदन्तिकेसरी ॥ ३ ॥
ममाश्वकल्पनायकः करोतु मङ्गलावलीम् ।
त्रिकालवित् सुपार्श्वपत्सरोजहंससन्निभः ॥ ४ ॥

इति श्रीसुपार्श्वजिनस्तुतिः ॥ ७ ॥

## अथ चन्द्रप्रभजिनस्तुतिः ।

महसेनमहीपुरन्दरकुलकोटीरलसन्मणिप्रभम् ।
प्रणुमो वयमत्रिनेत्रजानुकृतिश्लोकमघापहं जिनम् ॥ १ ॥
जिनराजततिस्तनोतु वः सततं निर्वृतिनिर्वृतिप्रदम् ।
प्रतिबोध्य जनानदर्शयद् वृषमार्गं खलु या कृपास्पदम् ॥२॥
शरणीक्रियतां जिनागमो हृदये भव्यजन! त्वयाऽनिशम् ।
कुनयोद्धतशैलवज्रभृद्भगवद्वक्त्रसरोजसम्भवः ॥ ३ ॥
विनताङ्गजमाश्रिता सदा प्रतिचक्राऽस्तु सतां विभूतये ।
विफलीकृतशत्रुमण्डलं दधती चक्रमयोमयं शये ॥ ४ ॥

इति श्रीचन्द्रप्रभजिनस्तुतिः ।

## अथ श्रीवर्धमानजिनस्तुतिः ।

श्रीवर्धमानाप्तगणप्रशस्यराद्धान्त! भक्त्यामरनाथपूज्य! ।
सूरीश्वरानन्दगुरोगणेशं मनोज्ञवाचः कुरुतामुदारः ॥ २४ ॥

इति श्रीवर्धमानजिनस्तुतिः ।

## अथ गौतमस्तुतिः ।

पृथ्वीतनूजार्च्यजिनेन्द्रसङ्घस्तुतागमज्ञः सुरसेव्यमानः ।
सूरीश्वरानन्दगुरोः सुसङ्घे दीपोत्सवे पर्वणि शङ्करस्तात् ॥ १ ।

इति श्रीगौतमस्वामिस्तुतिः ।

## अथ श्रीऋषभजिनस्तुतिः ।

युगादिपुरुषेन्द्राय युगादिस्थितिहेतवे ।
युगादिशुद्धधर्माय युगादिमुनये नमः ॥ १ ॥
ऋषभाद्वर्धमानान्ता जिनेन्द्रा दशपञ्च च ।
त्रिकवर्गसमायुक्ता दिशन्तु परमां गतिम् ॥ २ ॥
जयति जिनोक्तो धर्मः षड्जीवनिकायवत्सलो नित्यम् ।
चूडामणिरिव लोके विभाति यः सर्वधर्माणाम् ॥ ३ ॥
सा नो भवतु सुप्रीता निर्धौतकनकप्रभा ।
मृगेन्द्रवाहना नित्यं कूष्माण्डी कमलेक्षणा ॥ ४ ॥

इति श्रीऋषभजिनस्तुतिः ।

## अथ श्रीनेमिजिनस्तुतिः (पञ्चमीस्तुतिः) ।

समुद्रभूपालकुलप्रदीपः संसारवार्धौ विपुलान्तरीपः ।
श्रीपञ्चमीपुण्यतपोनिलीनं शिवाङ्गजोऽव्याज्जनमात्मनीनम् ॥१॥
वितेनिरे मेरुगिरौ वितन्द्रा येषां मुदा जन्ममहं महेन्द्राः ।
रक्षन्तु ते पञ्चमिकातपस्यां विघ्नं कृतस्तीर्थकृतो भवस्थाः ॥२॥
चकार यं पञ्चमगच्छनेता यः पापभारस्य सदापनेता ।
स आगमः पञ्चमिकातपस्यां विघ्नौ कृतस्तीर्थकृतो भवस्थ्याम् ॥३॥
प्रयाति या नेमिजिनं विनन्तुं सिंहाधिरूढाऽस्य तमो निहन्तुम् ।
श्रीपञ्चमीपुण्यतपोनिलीनं शिवाङ्गजोऽव्याज्जनमात्मनीनम् ॥४॥

इति श्रीनेमिजिनस्तुतिः ।

## अथ श्रीसिद्धचक्रास्तुतिः ।

जे भत्तिजुत्ता जिणसिद्धसूरि वज्झायसाहूण कमे नमन्ति ।
सुदंसणझाणतवोचरित्तं पूयन्तु पावेइ सुहं अणंतं ॥ १ ॥
नामाइभेएण जिणिंदचंदा निच्चं नया जेसि सुरिंदवंदा ।
ते सिद्धचक्कस्स तवे रयाणं कुणंतु भव्वाण पसत्थनाणं ॥ २ ॥
जो अत्थओ वीरजिणेण पुव्विं पच्छा गणिंदेहिं सुभासिओ य
एयस्स आराहणतप्पराणं सो आगमो सिद्धिसुहं कुणेउ ॥ ३ ।
सव्वत्थ सव्वे विमलप्पदाई देवा तहा सासणदेवया वा ।
जे सिद्धिचक्कम्मि सया विभत्ता पूरेउ भव्वाण मणोरहं ते ॥४।

इति सिद्धचक्रास्तुतिः ।

---

## अथ श्रीनेमिजिनस्तुतिः ।

नेमिं नाथं वन्दे बाढम् ॥ १ ॥ सर्वे सर्वाः सिद्धिं दद्युः ॥ २ ।
जैनी वाणी सिद्ध्यै भूयात् ॥३॥ वाणी विद्यां दद्याद् हृद्याम् ॥४।

इति श्रीनेमिस्तुतिः ।

---

## अथ शान्तिजिनस्तुतिः ।

दद्यादर्हन् शान्तिः शान्तिम् ॥१॥ सार्वस्तोमं स्तौम्यस्ताद्यम् ॥२।
सिद्धान्तः स्ताज्जैनो मुक्त्यै ॥३॥ निर्वाणी वो विघ्नं हन्यात् ॥४।

इति शान्तिजिनस्तुतिः ।

---

## अथ ऋषभजिनस्तवनम् ।

स्वयंभुवा भूतहितेन भूतले
समञ्जसज्ञानविभूतिचक्षुषा ।
विराजितं येन विधुन्वता तमः
क्षपाकरेणेव गुणोत्करैः करैः ॥ १ ॥

प्रजापतिर्यः प्रथमं जिजीविषुः
शशास कृष्यादिषु कर्मसु प्रजाः ।

### अवचूरिः ।

स्वयं परोपदेशमन्तरेण मोक्षमार्गमवबुध्याऽनुष्ठाय चाऽनन्तचतुष्टयरूपतया भवतीति स्वयंभूस्तेन स्वयंभुवा विराजितं शोभितम्, क? भूतले भूमौ, कथंभूतेन? भूतहितेन, पुनः कथं०? समञ्जसज्ञान० सं संपूर्णं अञ्जसं सम्यक् ज्ञानं च । विशिष्टा परमाऽतिशयप्राप्ता भूतिरुत्पत्तिः विभूतिः सकलपदार्थसाक्षात्कारित्वश्रीः सैव चक्षुर्यस्य तेन । किं कुर्वता? विधुन्वता तमः । तमो ज्ञानावरणादिकर्म तद् विशेषेण निराकुर्वता । कैः? करैः, करा रश्मयः सम्यग्दर्शनादयः अत्र गृह्यन्ते तैः । किं०? गुणोत्करैः गुणाः स्वर्गापवर्गप्राप्तिहेतुत्वादयस्तेषामुत्करः समूहो येषां तैः । केनेव? तमोविधुन्वता? क्षपाकरेणेव क्षपाकरश्चन्द्रस्तेनेव ॥ १ ॥ प्रजापतिर्यः०, प्रजानां लोकानां पतिः स्वामी प्रथमं तत्पतीनामादौ पश्चात् शशास सृष्टवान्, काः? प्रजाः, कथंभूताः? जिजीविषुः जीवयितुमिच्छुः, क? कर्मसु, केषु? कृष्यादिषु, कृषिरादिर्येषां कर्मणां सेवादीनां तानि तथोक्तानि तेषु, कथंभूतः सन्नसौ ताः शशासेत्याह–प्रबुद्धतत्त्वः प्रबुद्धं ज्ञातं प्रजानां तत्त्वं स्वरूपं येन, सहजविशिष्टमतिश्रुतावधिज्ञानेन प्रज्ञाततदद्दष्टं तत्फलमन्यच्च सर्वं ज्ञात्वा, इदमनेनेत्थं कर्तव्यमिदं वा नेति योजयति, ताश्च योजयित्वा पुनः पश्चात् प्रबुद्धतत्त्वो ज्ञातहेयोपादेयस्वरूपः, अद्भुतोदयः अद्भुतोऽचिन्त्य उदयः शक्रादितोपि विभूतिविशेषो यस्य सः, इत्थंभूतो भगवान् निर्विवेद निर्विण्णवान्, कस्मात्? मम-

प्रबुद्धतत्त्वः पुनरद्भुतोदयो
ममत्वतो निर्विविदे विदां वरः ॥ २ ॥
विहाय यः सागरवारिवाससं
वधूमिवेमां वसुधां वधूं सतीम् ।
मुमुक्षुरिक्ष्वाकुकुलादिरात्मवान्
प्रभुः प्रवव्राज सहिष्णुरच्युतः ॥ ३ ॥
स्वदोषमूलं स्वसमाधितेजसा
निनाय यो निर्दयभस्मसात्क्रियाम् ।
जगाद तत्त्वं जगतेऽर्थिनेऽञ्जसा
बभूव च ब्रह्मपदामृतेश्वरः ॥ ४ ॥

---

त्वतः, ममेति षष्ठ्यन्तप्रतिरूपको निपातः, ममेत्यस्य भावो ममत्वं तस्मात् तत
इत्थंभूतो भगवान् । अत एवाऽसौ विदां वरः वेदिनां विपश्चितां वरः प्रधानः ॥
स किं कृतवानित्याह—विहाय यः०, यो निर्विण्णो नाभिनन्दनः स प्रवव्राज,
कृत्वा? विहाय त्यक्त्वा, काम्? वसुधावधूम् । वसुधा पृथ्वी सैव वधूः
तामरकादिवसुधा तेन त्यक्ता भविष्यतीत्याह—इमां दृश्यमानां, किं वि
सागरः समुद्रस्तस्य वारि जलं तदेव वासः परिधानं यस्यास्ताम्, पुनरपि कथं सत
अनेनाभुक्तां, कामिव? वधूमिव, यथा निर्विण्णेन भगवता सती वधूः अन्त
पुरस्त्री त्यक्ता तथा साऽपि इत्याह—किंविशिष्टोऽसौ तां विहाय प्रवव्राजेत्या
मुमुक्षुर्मोक्षमिच्छुः, पुनः कथम्? इक्ष्वाकुकुलादिः, पुनः क०? आत्मवान् व
न्द्रियः, अत एव प्रभुः स्वतः प्रभुः । सहिष्णुः परीषहैरपराजितः, अत एव
च्युतः परीषहेऽपि नियमव्रतादनपसृतत्वात् ॥ ३ ॥ प्रव्रज्यामादाय भगवान्
कृतवान् इत्याह—स्वदोषमूलं०, स्वस्य दोषा रागादयस्तेषां मूलं कारणं घातिक
चतुष्टयं तत् निनाय नीतवान्, निर्दयभस्म०, कार्त्स्न्येन भस्मकरणं भस्मस
क्रिया । केन? स्वसमाधि०, समाधिः शुक्लध्यानम् स एव तेजोऽग्निस्त
जगाद तत्त्वं कथितवान्, किं? तत्त्वं जीवादिस्वरूपं, कस्मै? जगते प्राणिगण
कथंभूताय? अर्थिने तत्त्वज्ञानाभिलाषेण भगवत्प्रतारकत्वेनाऽसौ तत्त्वं कथि

स विश्वचक्षुर्वृषभोऽर्चितः सतां
समग्रविद्यात्मवपुर्निरञ्जनः ।
पुनातु चेतो मम नाभिनन्दनो
जिनो जितक्षुल्लकवादिशासनः ॥ ५ ॥

इति ऋषभजिनस्तवनम् ।

## अथाऽजितजिनस्तवनम् ।

यस्य प्रभावात्त्रिदिवच्युतस्य क्रीडास्वपि क्षीबमुखारविन्दः ।
अजेयशक्तिर्भुवि बन्धुवर्गश्चकार नामाऽजित इत्यवन्ध्यम् ॥१॥

---

वान् इत्याह–अञ्जसा परमार्थेन बभूव च ब्रह्मपदामृते०, ब्रह्मपदं मोक्षस्थानं तस्याऽमृतमनन्तसुखं तस्येश्वरः स्वामी ॥ ४ ॥ स विश्वचक्षु०, प्रागुक्तविशेषणविशिष्टो भगवान् विश्वचक्षुः चक्षुरिव चक्षुः केवलज्ञानं तस्य । किंनामाऽसौ ? वृषभः ? वृषो धर्मः तेन भाति शोभते स चाऽऽभाति प्रकटीभवति यस्मादसौ वृषभः । कथंभूतः ? अर्चितः पूजितः । केषाम् ? सताम्, सकलकर्मक्षयात्पूर्वमसौ जडो भविष्यतीति बुद्ध्यादिविशेषेण गुणानामत्यन्तोच्छेदादिति योगः, चैतन्यमात्ररूप इति सांख्याः, अत्राऽऽह–समग्रविद्यात्मवपुर्निरञ्जनः०, अञ्जनं ज्ञानावरणीयादिकर्म तस्मान्निःक्रान्तः सन् सकलविद्यात्मवपुर्भवति न जडोऽपि चैतन्यमात्रस्वरूपः, स इत्थंभूतः किं करोतु ? पुनातु चेतः । कस्य ? मे मम, नाभेर्नन्दनः कथंभूतः ? जितक्षुल्लकवादिशासनः । क्षुल्लकानि लघूनि परवादिशासनानि तानि जितानि येन ॥ ५ ॥

इति श्रीआदिनाथजिनस्तवनावचूरिः ।

### अवचूरिः ।

वृत्तिः–यस्य प्रभावात्० बन्धुवर्गः अजेयशक्तिः भुवि चकार कृतवान् । यस्य, किंविशिष्टस्य, त्रिदिवच्युतस्य, पुनः क० ? क्षीबमुखारविन्दः क्षीबं समदं मुखार-

अद्यापि यस्याऽजितशासनस्य सतां प्रणेतुः प्रतिमङ्गलार्थम् ।
प्रगृह्यते नाम परं पवित्रः स्वसिद्धिकामेन जनेन लोके ॥ २ ।
यः प्रादुरासीत् प्रभुशक्तिभूम्ना भव्याशयालीनकलङ्कशान्त्यै ।
महामुनिर्मुक्तघनोपदेहो यथारविन्दाभ्युदयाय भास्वान् ॥ ३ ।
येन प्रणीतं पृथुधर्मतीर्थं ज्येष्ठं जनाः प्राप्य जयन्ति दुःखम्
माङ्गं ह्रदं चन्दनपङ्कशीतं जगप्रवेका इव घर्मतप्ताः ॥ ४ ॥
स ब्रह्मनिष्ठः सममित्रशत्रुर्विद्याविनिर्वान्तकषायदोषः ।
लब्धात्मलक्ष्मीरजितो जितात्मा जिनः श्रियं मे भगवान्विधत्ताम

इति अजितजिनस्तवनम् ।

---

विन्दं यस्य इत्थंभूतो बन्धुवर्गः, किं? नाम। कथम्? अवन्ध्य चकार ॥१॥ अद्यापि
यस्याजित० अद्यापि अधुनैव । तस्य किंवि० अजितशासनस्य, सतां प्रणेतुः सत
भव्यानां प्रणेतुः सन्मार्गप्रवर्तकस्य नाम प्रगृह्यते उच्चार्यते, प्रतिमं० मङ्गलं मङ्ग
प्रति प्रतिमङ्गलार्थं परं पवित्रं, केन? जनेन । किंविशिष्टेन? स्वसिद्धिकामेन स्वर
सिद्धिर्वाञ्छितार्थः तेन। कस्मिन्? लोके ॥ २ ॥ यः प्रादुरासीत्०, प्रादुरासी
प्रादुर्भूतवान्, किमर्थम्? भव्याशयालीन० भव्यानामाशयश्चित्तं तत्र लीनो लग्नः
चाऽसौ कलङ्कश्चाज्ञानं तस्य शान्त्यै नव्यबोधार्थम्, केन? प्रभुशक्ति० उपक
कर्तुं समर्थो भवतीति प्रभुः तस्य शक्तिर्वाणी यया तेषामुपकारं कर्तुं शक्नोति तस
भूमिर्जीवाच स्वरूपाणां माहात्म्यविशेषः, कथंभूतः । महामुनिः? प्रत्यक्षज्ञानी।
इव कस्मै? यथाऽरविन्दाभ्युदयाय भास्वान् सूर्यः ॥ ३ ॥ येन प्रणीतं०, धर
तीर्थं प्राप्य जना दुःखं जयन्ति, कथंभूतं? प्रणीतम्, केन? येन, पुनः पृ
पुनर्ज्येष्ठं। यथा गाङ्गं ह्रदम्० घर्मतप्ता! गजप्रवेका जयन्ति ॥ ४ ॥ स ब्रह्मनिष्ठ
स भगवान् ब्रह्मनिष्ठः ब्रह्मणि ज्ञाने निष्ठा परिसमाप्तिर्यस्य०, तथा सममित्रश
समाना मित्रशत्रवो यस्य सः, विद्याविनिर्वा० विद्यया परमागमज्ञानं विशेषे
निर्वान्ताः प्रोक्ताः कषायदोषा येन सः, अत एव ब्रह्मनिष्ठः समशत्रुमित्रः,
कथंभूतः? लब्धात्मलक्ष्मीः लब्धा आत्मलक्ष्मीर्ज्ञानं येन सः, पुनः जितात्मा जि
आत्मा येन स जिनः श्रियं मे विधत्तां देयात् ॥ ५ ॥

इति अजितजिनस्तवावचूरिः ।

## अथ सम्भवजिनस्तवनम् ।

त्वं शम्भवः संभवतर्षरोगैः सन्तप्यमानस्य जनस्य लोके ।
आसीरिहाकस्मिक एव वैद्यो वैद्यो यथा नाथ! रुजां प्रशान्त्यै ॥१॥
अनित्यमत्राणमहंक्रियाभिः प्रसक्तमिथ्याध्यवसायदोषः ।
इदं जगज्जन्मजरान्तकार्तं निरञ्जनां शान्तिमजीगमस्त्वम् ॥ २ ॥
शतह्रदोन्मेषचलं हि सौख्यं तृष्णामयाप्यायनमात्रहेतुः ।
तृष्णाभिवृद्धिश्च तपत्यजस्रं तापस्तदायासयतीत्यवादीः ॥ ३ ॥
बन्धश्च मोक्षश्च तयोश्च हेतुर्बद्धश्च मुक्तश्च फलं च मुक्तेः ।
स्याद्वादिनो नाथ तवैव युक्तं नैकान्तदृष्टेस्त्वमतोऽसि शास्ता ॥ ४ ॥

---

### अवचूरिः ।

त्वं शम्भवः० शं भवति अस्मात् स त्वं आसीः, इहलोके सम्भवः संसारः तत्र तर्षा तृष्णा स एव रोगा दुःखहेतुत्वात् तैः सन्तप्यमानस्य, तस्य कथं भूतस्य? आकस्मिक एव तत्फलनिरपेक्ष एव । अत्र दृष्टान्तमाह–यथा वैद्यः अनाथरुजां प्रशान्त्यै ॥ १ ॥ अनित्यमित्यादि, इदं जगत् प्राणिसङ्घातः, कथंभूतम् ? अनित्यं विनश्वरम्, अनेन साङ्ख्यमतं प्रत्युक्तम् । पुनः अत्राणं न विद्यते त्राणमस्य । अनेनेश्वरो विष्णुर्वा तस्य त्रातेति योगमीमांसकमतं निरस्तम् । कथं तदत्राणमित्याह–अहंक्रियाभिः अहङ्कृतिः अहङ्कारस्तैः, अत एव जन्मजरान्तकार्तम् । पुनः प्रसक्तमिथ्याऽध्यवसायदोषम्, प्रसक्ता मिथ्याध्यवसायदोषा यत्र तम् इह त्वं निरञ्जनां शान्तिं अजीगमः ॥ २ ॥ शतह्रदोन्मेषचलं०, शतह्रदा विद्युत् तस्या उन्मेष उन्मीलनं स इव चलमस्थिरं सौख्यमिन्द्रियसुखम्, कथंभूतम्? तृष्णेत्यादि, तृष्णा संसारसुखाभिलाषः सैव आमयो व्याधिस्तस्याप्यायनं पुष्टिमात्रं तस्य हेतुः, तत्पुष्टिश्च किं करोतीत्याह–तृष्णाभिवृ० तृष्णाया अभिवृद्धिः पुष्टिः, तपति सन्तापयति अजस्रमनवरतम्, तज्जनितस्तापो जगतः किं करोतीत्याह –तापस्तज्जगद् आयासयति अनेकदुःखपरम्परया क्लेशयति, सेवादिक्रियासु प्रवर्तत इत्येवं जगतः बोधनार्थं त्वमेवावादीः ॥ ३ ॥ ननु सुगतादिभिरपि तत्सम्बोधनार्थं

शक्रोऽप्यशक्तस्तव पुण्यकीर्तेः स्तुत्यां प्रवृत्तः किमु मादृशोऽज्ञः ।
तथापि भक्त्या स्तुतपादपद्मो ममार्य! देयाः शिवतातिमुच्चैः ॥ ५

इति संभवजिनस्तवनम् ।

---

## अथाऽभिनन्दनस्तवः ।

गुणाभिनन्दादभिनन्दनो भवान् दयावधूं क्षान्तिसखीमशिश्रियत्
समाधितन्त्रस्तदुपोपपत्तये द्वयेन नैर्ग्रन्थ्यगुणेन चाऽयुजत् ॥ १
अचेतने तत्कृतबन्धुजेऽपि वा ममेदमित्याभिनिवेशिकाग्रहात् ।
प्रभङ्गुरे स्थावरनिश्चयेन च क्षतं जगत्तत्त्वमजिग्रहद्भवान् ॥ २
क्षुदादिदुःखप्रतिकारतः स्थितिर्नचेन्द्रियार्थप्रभवाल्पसौख्यतः ।
ततो गुणो नास्ति च देहदेहिनोरितीदमित्थं भगवानजिज्ञपत् ॥ ३
जनोऽतिलोलोऽप्यनुबन्धदोषतो भयादकार्येष्विह न प्रवर्तते ।
इहाऽप्यमुत्राप्यनुबन्धदोषवित् कथं सुखे संसृजतीति चाऽब्रवीत्॥
स चानुबन्धोऽस्य जनस्य तापकस्तृषोभिवृद्धिः सुखतो न च स्थिति
इति प्रभो लोकहितं यतो मतं ततो भवानेव गतिः सतां मतः॥

इति अभिनन्दनस्तवः ।

---

बन्धाद्युपदेशः कुतोऽतस्त्वमेवाऽवादीरित्यादिकथमुक्तमिति चेत्, तत्र मते बन्ध
क्षादेरेवाऽसम्भवात् । एतदेवाह–बन्धश्च मो० जीवस्य कर्मणा संश्लेषो बन्धः
श्लेषो मोक्षः । चकारः परस्परसमुच्चये, तयोर्बन्धमोक्षयोः हेतुः, कः बन्धस्य व
हेतुर्मिथ्यात्वादि, मोक्षस्य तु सम्यग्दर्शन... ... ... ... ...

---

१ स्तवनान्येतानि समन्तभद्राचार्यविहितानि मूलमात्राणि चतुर्विंशतिः
ण्यप्युपलभ्यन्ते, किन्तु तेषां वृत्तिरेतावत्येव प्राप्ता तेन नाऽन्यानि स्तव
लिखितानि ।

## प्रथमस्वरनिबद्धं साधारणजिनस्तवनम् ।

जय जय जयजणवच्छल! नवजलहरपवणवणयसमणयण! ।
नयणमणपमयवद्धण! घणकणयलक्खणयसमण! ॥ १ ॥
समणमणभसलजलसय! सयत्थसत्थत्थपयडणसमत्थ! ।
मत्थयनमंतनरवर! वरवरयवरंग गयसंग! ॥ २ ॥
संगरगररससयगय! गयमच्छर! रयणमयणदढजलण! ।
जलणजलसप्पभयहर! हरहसधवलयरजसपसर! ॥ ३ ॥
सरणपवन्नसरन्नय नयसयगभरम्मसम्ममयसमय !।
मयमयगलनहपहरण! रणरणयभयब्भमसवत्त! ॥ ४ ॥
वत्तसयवत्तगहवर! वरकलसलसंतसंखचक्कंक! ।
कंकफलसरलनयण! नयपमयअसत्तअपमत्त! ॥ ५ ॥
मत्तगयगमण! गयमण मणगयसंसयसहस्सतमतवण! ।
तवणप्पहपहयर! हयतमपरमपयनयरस्स ॥ ६ ॥
इय पढमसरनिबद्धं घणक्खरं गहिय मुक्कयपयडुं ।
भत्तीए संथवणं रइयं मुणिचंदमुणिवइणा ॥ ७ ॥

इति साधारणजिनस्तवनम् ।

---

## प्रथमस्वरमयं प्रथमजिनस्तवनम् ।

सकलकमलदलकरपदनयन! प्रहतमदनमद! भवभयहरण! ।
सततममरनरनतपदकमल! जय जय गतमद! मदकलगमन !॥१॥
अमलकनकनगवर! गतरमण! क्षतजननमरण! शमरससदन! ।
भमणकमलवनतपन! गतभव! भवभयमपहर मम जनमहन!॥२॥

अभयद! भवदरजलधरपवन! सबलमदनवनदहनजलधर! ।
व्यपगतमद! शशधरवरवदन! जगदघहर! जय ततनयसमय!॥३॥
तरलकरणहयवरदमनकर! कनककजनवकगमन! वरवचः! ।
प्रथय परमपदमपदर धवलध्वज! घनघनवररव! जनशरण! ॥४॥
परमपदरमण! कमनकजरद! शशधरकरहरनगधवलयशः! ।
परमतकजगज! सकलजनमनःफलकरलसदमरनग! रचय शम् ५॥

इत्येवं प्रथमस्वरेण सकलाभीष्टार्थकल्पद्रुमः
सद्भक्त्या प्रथमो जिनः स्तुतिपथं नीतो युगादिप्रभुः ।
दोषान् मेऽवगणय्य विश्वजनतात्राता गुणस्थानकं
दुर्भेद्यं प्रथमं भिनत्तु सपदि श्रेयःश्रियं यच्छतात् ॥ ६ ॥

इति प्रथमजिनस्तवनम् ।

## अथ कुरुकुल्लादेवीस्तवनम् ।



प्रणवहृदि यदीयं नाम मायासमिद्धं
वहसि षडरलीनामातृकोपान्तरौद्रे! ।
भगवति कुरुकुल्ले! तं गलद्रोगराजं
निरुदयमपि भूता नैव लुम्पन्ति लूताः ॥ १ ॥

---

१ प्राचीनमुत्कलपत्रादेतत्स्तुतिसमुत्पत्तिकारणं त्वेवम्—

अन्यदा भृगुकच्छे श्रीदेवसूरिपार्श्वे कान्हडड नाम योगी ८४ सर्पकरण्डिकाः समादाय शालायामागतः । मया सह वादं कुरुत । आसनं वा त्यज्यताम् । गुरुः—केन सह?, स प्राह—मम सर्पाः सन्ति । प्रभुभिरासनोपविष्टैः सप्त रेखाः कृताः खटिकया । तेन सर्पो मुक्तः । एक एकां रेखां यावत् । एवं द्वितीयोऽपि द्वितीयां यावत् । बहवोऽपि मुक्ताः परे । षष्ठी रेखा केनापि नाक्रमिता ।

कमलति कपिकच्छुर्मालति व्यालपाली
तुहिनति बनवह्निर्माघति ग्रीष्मकालः ।
शिशिरकरति सूरः क्षीरति क्षारनीरं
विषममृतति मातस्त्वत्प्रभावेन पुंसाम् ॥ २ ॥
ज्वरभरपरितापोद्रिक्तपित्तातिवात-
क्षतधुततनुनिर्यद्बुद्बुदच्छिद्ररौद्राः ।
अपि घनरसपूतिक्लिन्नतिन्नास्थिमांसा-
स्त्वदभिमुखमुपेता नैव सीदन्ति सन्तः ॥ ३ ॥

---

ततो योगी विषण्णः प्राह—एकवेलं भूमौ उपविशन्तु । प्रभुभिरुक्तं—तव यः कोऽप्यतिचण्डस्तं मुञ्च । ततस्तेन कदलीपत्रमानाय्य कटेर्नलिका कृष्टा । सर्पेण सम्मुखमवलोकितं पत्रं भस्मसाज्जातम् । एष साक्षात् कालः सिन्दूरिकनामा । गुरुभिरुक्तम्—मुञ्च । तेन मुक्तः । एकस्तस्य वाहने जातः । वाहनसर्पो रेखां नोल्लङ्घते । सिन्दूरिकेणोत्तीर्य जिह्वया रेखा भग्ना । अधस्तन उपरितनप्रेरणया आसनपादे चटितुं प्रवृत्तः । लोको हाहारवं कुरुते । प्रभवो ध्यानमालम्ब्य तस्थुः । इतश्चैकया शकुनिकया सर्पद्वयमुत्पाट्य क्वापि दूरतरं क्षिप्तम् । योगी दीनवदनो जातः । तस्य तदेव बलम् । तोडरमुत्तार्य गुरुचरणेषु प्रणामं कृतवान् प्रभो! मम स एव जीवितं तत् कथय क्वास्ते तत् सर्पद्वयम्? प्रभवः प्राहुः—नर्मदातीरेऽस्ति क्रीडत् । रात्रौ गुरूणां कुरुकुल्ला आगत्योवाच मामुपलक्षयथ? गुरुभिरुक्तं—त्वं कुरुकुल्ला । साऽऽह—मया सर्पोऽपाकृतः । मास ४ सम्मुखवटाधिरूढया मया युष्माकं व्याख्यानं श्रुतम् । मया चिन्तितम्–अस्य करण्डिकाः सर्वा अपि रिक्तीकरिष्यामि । परं भवतु जनकौतुकम् । जनोपद्रवं द्रष्टुं न शक्नोमि । गुरुभिः स्तुतिरूपं काव्यमेकं जगदे । देव्योक्तम्—इदं भाण्डागारेऽस्तु । प्रातर्द्वारे लिखितं काव्यत्रयं मम स्तुतिरूपं यः पठिष्यति तस्य सर्पोपद्रवो न भावी इति विज्ञप्य स्वस्थानं गता । एवं कान्हडो जितः । इति ॥ एतदेव वर्णनं पण्डितप्रवरश्रीमत्सोमधर्मगणिविरचितायामुपदेशसप्ततिकायाम् आरासणतीर्थवृत्तान्ते ।

आत्मानन्दसभामुद्रापितप्रतेः पत्र ३८

श्रुतिपथगतमुच्चैर्नाम यस्याः पवित्रं
विषमतमविषार्तिं नाशयत्येव सद्यः ।
त्रिभुवनमहिता सा सम्मुखीभूतदेवी
वितरतु कुरुकुल्ला सम्पदं मे विशालाम् ॥ ४ ॥
ज्वलनजलमृगेन्द्रोद्दामसङ्ग्रामशत्रु-
प्रभृतिकमपयाति त्वद्गतध्यानमात्रात् ।
धनतनयशरीरारोग्यसौभाग्यभाग्या-
दिकमुपचयमेत्यभ्यर्चनात् तावकीनात् ॥ ५ ॥
कियति महति दूरे त्वन्नतानां श्रुतश्रीः
कथमिव दुरवापा तैर्जगज्जैत्रलक्ष्मीः ।
असुलभमिह किंवा वस्तु तेषां समस्तं
त्रिभुवनजननि ! त्वं वीक्षसे यान् प्रसन्ना ॥ ६ ॥
सुभटकरतले त्वं शस्त्ररूपाऽसि शक्ति-
स्त्वमवनिपतिषूच्चैर्देवि ! मन्त्रादिशक्तिः ।
किमपरमनिलादौ त्वं महाप्राणशक्तिः
सकलभुवनपूज्या त्वं च जैनेन्द्रशक्तिः ॥ ७ ॥
प्रतिविषयमजस्रं स्वेच्छया गच्छदेतत्
पवनविजययोगात् सन्निरुध्य स्वचित्तम् ।
यदिह किमपि सन्तः सन्ततं धाम पश्य-
न्त्यवितथमयमुच्चैर्देवि ! युष्मत्प्रसादः ॥ ८ ॥
सकलकरणरोधाद् ध्यानलीनस्य पुंसः
स्फुरसि मनसि यस्य त्वं महोद्योतरूपा ।
सपदि विदलयन्ती तस्य जाड्यान्धकारं
समुदयति समन्तात् केवलज्ञानलक्ष्मीः ॥ ९ ॥
इति वादिचक्रवर्ति श्रीदेवाचार्यविरचिता श्रीकुरुकुल्लादेवीस्तुतिः ।

# श्रीपार्श्वधरणोरगेन्द्रस्तवनम् ।

धरणोरगेन्द्रसुरपतिविद्याधरपूजितं जिनं नत्वा ।
क्षुद्रोपद्रवशमनं तस्यैव महास्तवं वक्ष्ये ॥ १ ॥
सुरलोकनाथपूजित! हर हर हर हाररोषदुष्टमपि ।
पन्नगविषं महाबल! शुक्लध्यानानलाक्षेपात् ॥ २ ॥
विद्यासहस्रषोडशगणनायकवीर! वर्धितानन्द! ।
पन्नगकुलं कुलोत्तम! निर्विषतां नय नयाभिगमात् ॥ ३ ॥
सर्वेऽपि महानागा नागाधिपकृतफणातपच्छादः ।
कलिकुण्डदण्डनिहता नश्यन्ति विषापहारेण ॥ ४ ॥
ॐकारसम्पुटगतं वामकरे दण्डरूपकं ध्यातम् ।
ज्वालापरिस्फुरन्तं कलिकुण्डाज्ञामिवाऽमोघम् ॥ ५ ॥
नाशयति सर्वनागान् भूतान् व्यालग्रहांश्च विस्फोटान् ।
ज्वालागर्दभशाकिनिविषवेगांश्चापि रोगांश्च ॥ ६ ॥
मारणं स्तम्भनं चैव शत्रोरुच्चाटनं तथा ।
मोहनं द्वेषणं चापि क्रियाभेदात् करोति तत् ॥ ७ ॥
दैत्यामरेन्द्रपूजित! निर्नाशितदुष्टकर्ममलपटल! ।
क्षिपय जिन! हुं फुट् त्वं पन्नगकुलविषमविषदर्पम् ॥ ८ ॥
निर्मथितभवभयोल्बणषोडशविद्याधिपत्वमुपपन्नः ।
श्रीपार्श्वनाथ! विषहरहिलिहिलिमातङ्गिनी स्वाहा ॥ ९ ॥
आगच्छन्तु महानागाः पन्नगाश्च महाविषाः ।
गरुडस्येमां विद्यां हिलि हिलि मातङ्गिनी स्वाहा ॥ १० ॥

ॐ हरहरहर हुतभुक् पवनेरितज्वलनमङ्कुशं ध्यायेत् ।
उत्थापयति सरोषं पुनरुच्चैर्भोगहस्तोऽयम् ॥ ११ ॥
श्रीपार्श्वनाथ! सुरपतिमुकुटतटोद्घृष्टपादनलिनयुग! ।
नागाष्टकुलविषापह ह्रां ह्रां ह्रे ह्रै ह्रो ह्रौ ह्रुं ह्रः ॥ १२ ॥
सकलभुवनाभिवन्दित! गरुडस्त्वं पन्नगेन्द्रकृतपूजः ।
विषमविषानलशमनो जलद इव जलप्लुतालोकः ॥ १३ ॥
दैत्योपसर्गभीषणजलधरधारानिपातधौतमल! ।
सर्वज्ञ! नागवन्दित! सर्वविषाक्षेपण! नमस्ते ॥ १४ ॥

ॐ हन हन दह दह पच पच मथ मथ
संहर संहर क्षिप हुं च चाल कलिकुण्ड! ।
धम धम पूरय पूरय
विषोल्बणं हुं फुट् स्वाहा ॥ १५ ॥
ॐ चुरु चुरु कुरु कुरु मुरु मुरु
फुरु फुरु फार फार फलदस्त्वम् ।
किलि किलि कलकल कलितैः
कलिकुण्ड कला कलापज्ञ! ॥ १६ ॥
ॐ यः यः सः सः हः हः वः वः
उरुरिज्ञयरुहरुद्दान्तशान्तस्त्वम् ।
विषवह्नेर्विध्यपनं
कुरु शीघ्रमुरुप्लवाख्यानात् ॥ १७ ॥

दंष्ट्राकरालभीषणकुपितासुरजलदजलधरापातैः ।
अभ्यस्ततपोनलजाज्ज्वलन्त दह दुष्टनागविषम् ॥ १८ ॥

कमलदलस्थितदिक्पतिमध्ये भुजगावृतं जिनं नत्वा ।
षोडशदेव्योपगतं बीजाक्षरसंयुतं तद्धि ॥ १९ ॥
वन्ध्यानां सुतजननं म्रियमाणे यत्परक्षणं परमम् ।
पद्ममिदं रोगहरं ग्रहशाकिनिंभूतनिर्नाशम् ॥ २० ॥
दष्टकसर्वाङ्गगतं पद्ममिदं ध्यायतोऽमृतप्लवहम् ।
कुर्याद्विषापहारं प्रणवाद्यैः पञ्चभिर्वर्णैः ॥ २१ ॥
व्यस्तसमस्तं विपर्तिं बहुधा परिकल्प्य पञ्चभिर्वर्णैः ।
जिननामाक्षरसहितैः पदं पदं सर्वविषमथनम् ॥ २२ ॥
क्षिप ॐ स्वाहा पञ्चकमनिन्दितं पञ्चभूतकृतकल्पम् ।
नागाष्टकुलोपेतं सत्वरजस्तमःकलानुगतम् ॥ २३ ॥

रेफसम्पुटमध्यस्थं हकारं वह्निमण्डले ।
आक्रान्तिदीप्तिवर्णाभं स्तम्भयेत् त्रिदशानपि ॥ २४ ॥
नीलोत्पलदलश्यामं ककारं योपरि स्थितम् ।
वकारावेष्टितं शुद्धं पर्वतानपि चालयेत् ॥ २५ ॥
लसद्वज्रद्वयाक्रान्तमिन्द्रगोपरमध्यगम् ।
पद्मकिञ्जल्कसङ्काशं स्तम्भयेत् त्रिपुरान्तकम् ॥ २६ ॥
कुन्देन्दुशङ्खवर्णाभं निर्वाहं यस्तु चिन्तयेत् ।
निर्विषं कुरुते क्षिप्रं विषं स्थावरजङ्गमम् ॥ २७ ॥
हरहारशङ्खधवलं ठकारं कलसाकृतिम् ।
हकारावेष्टितं शुद्धं प्लवन्तं विषनाशनम् ॥ २८ ॥

हस्ताङ्गुलीषु विन्यस्तं वामकरे भूतपञ्चकं सकलम् ।
अपहरति समस्तविषं साधुकमुष्टिक्रमाबन्धात् ॥ २९ ॥

धरणोरगेन्द्रसुरपतिविद्याधरदैत्यदेवताभिनतम् ।
जिनगरुडमप्रमेयं चतुर्वर्णविभूषितं स्मरेत् ॥ ३० ॥
आजानु कनकगौरं आनाभेः शङ्खकुन्दहरधवलम् ।
आकण्ठतो नवदिवाकरकान्तितुल्यमामूर्धतोऽर्जुननिभं ॥ ३१ ॥

गरुडस्वरूपम् (?)

ॐ स्वर्णपक्षं [ गरुत्मन्तं ] वैनतेयं महाबलम् ।
नागान्तकं जितारिं च अजितं विश्वरूपिणम् ॥ ३२ ॥
विनतायाः सुतं दैत्यं विहगं पन्नगोत्तमम् ।
गुरूत्तमं खगेशं च तार्क्ष्यं काश्यपनन्दनम् ॥ ३३ ॥
द्वादशैतानि नामानि गरुडस्य महात्मनः ।
यः स्मरेत् प्रातरुत्थाय स्नातो वा यदि वाऽशुचिः ॥ ३४ ॥
विषं नाक्रमते तस्य न च हिंसन्ति पन्नगाः ।
न दुष्टा द्रावयन्त्येव सर्वकार्याणि साधयेत् ॥ ३५ ॥
एवंभूतैः स्मरेद् यस्तु श्रीपार्श्वं नामभिर्जिनम् ।
तस्य रोगाः प्रणश्यन्ति विषं च प्रलयं व्रजेत् ॥ ३६ ॥

ग्रहदुस्थसुस्थजननं सर्वविषोच्छेदनं प्रशान्तिकरम् ।
प्रध्वस्तदुरितनिचयं पार्श्वं योगीश्वरं वन्दे ॥ ३७ ॥
इति मालामन्त्रपदैरभिष्टुतं यः स्मरेत् त्रिसन्ध्यमपि ।
स करोति नागक्रीडां शिव इव विषवेदनातीतः ॥ ३८ ॥

भक्तिर्जिनेश्वरे यस्य गन्धमाल्यानुलेपनैः ।
संपूजयति यश्चैनं तस्यैतत् सफलं भवेत् ॥ ३९ ॥

इति श्रीपार्श्वनाथधरणोरगेन्द्रस्तवनम् ।

# श्रीचतुर्विंशतिजिनभवोत्कीर्तनस्तवनम् ।

यः प्राक् सार्थपतिर्धन (१) स्त्वमभवो
युग्मी (२) च सौधर्मगः
स्वर्गी (३) भूपमहाबलो (४) द्युसदनः (५)
श्रीवज्रजङ्घो नृपः (६) ।
युग्मी (७) सत्रिदशो (८) भिषक् (९) सुरवरः
कल्पेऽच्युते (१०) चक्रिराट् (११)
सर्वार्थे सुमनाः (१२) त्रयोदश भवै-
र्नूतोऽव मां नाभिभूः (१३) ॥ १ ॥
प्रथममत्र विदेहमहीतले
विमल वाहनभूपतिपुङ्गवः (१) ।

ε: ।

आद्ये भवे श्रीऋषभो विदेहे घनसार्थवाहः (१)। ततो देवकुरूत्तरकुरुषु युगली (२), सौधर्मकल्पे सुरः (३) विदेहे महाबलराजा (४) तत ईशाने ललिताङ्गनामा देवः तत्र स्वयंप्रभादेवी पट्टराज्ञी तज्जीवोऽग्रे श्रेयांसो भावी (५) विदेहे वज्रजङ्घो राजा (६) देवकुरुषु युग्मी (७) सौधर्मे सुरः (८) विदेहे जीवानन्दनामा वैद्यराजस्तत्र चत्वारः सुहृदो राजपुत्रः १, श्रेष्ठिपुत्रः २, अमात्यपुत्रः ३, सार्थवाहपुत्रश्चेति ४, साधुं पट्टकृत्य व्रतं लेभिरे (९) अच्युते देवाः (१०) विदेहे वज्रसेनतीर्थङ्करगृहे वज्रनाभचक्री, अन्ये तत्रैव पीठबाहुपीठादयः सुताः (११) सर्वार्थविमाने पञ्चाऽपि सुराः (१२) हे नाभिभूः (१३) ऋषभो गार्हस्थ्ये देवोपनीतं देवकुरूत्तरकुरुकल्पवृक्ष–फलाद्याहारं कृतवान्, क्षीराब्धिनीरं पीतवान् नचाऽन्ये आहारपानीये । धनभवे वज्रजङ्घभवे च दीक्षां नाऽलात्, शेषेषु चतुर्षु भवेषु दीक्षामलात् इति ऋषभभवस्वरूपम् ॥ १ ॥ जम्बूद्वीपे विदेहे वत्साभिधे विजये सुसीमापुर्यां विमलवाहनराजा, अरविन्दमुनिपार्श्वे दीक्षां लात्वा (१) विजये विमाने

द्युसद्नो विजयाह्वविमानगो (२)
जय यतीश! तृतीयभवेऽजितः (३) ॥ २ ॥
आद्ये भवे विपुलवाहन एव धातकी
षण्डान्तरैरवतवर्षवरे नरेश्वरः (१)।
ग्रैवेयके सुरवरस्त्वमभूश्च सप्तमे (२)
श्रीशम्भवस्त्वमभवः प्रभुरीप्सितप्रदः (३) ॥ ३ ॥
जम्बूद्वीपमहाविदेहविजये प्रौढप्रतापान्वितो
यस्त्वं पूर्वभवे महाबलमहीजानि(१)र्जिनेन्द्राऽभवः।
तत्वा तीव्रतपो विराजिविजयाह्वाने विमाने द्युसत् (२)
स श्रीमानभिनन्दनो(३)ऽस्तमदनो जीयास्तृतीये भवे॥४॥
पूर्वे भवे पुरुषसिंहनृपोऽत्र जम्बू-
द्वीपे विदेहविजयावनिमण्डले त्वम् (१)।
लात्वा व्रतं विनयनन्दनसद्गुरोर्यः
श्रीवैजयन्तसुमनाः (२) सुमतिर्जिनोऽभूः (३) ॥ ५ ॥
प्राग् धातकीषण्डविदेहमण्डने
वत्साऽभिधाने विजयेऽपराजितः (१)।

---

सुरः (३३ सागरायुः (२) श्रीअजितः (३) ॥ २ ॥ धातकीषण्डैरवते क्षेमापुर्यां विपुलवाहनराजा स्वयंप्रभुगुर्वन्तिके व्रतं लात्वा (१) सप्तमग्रैवेयके सुरः (२) श्रीशम्भवः (३) ॥ ३ ॥ अत्रैव विदेहे मङ्गलावतीविजये रत्नसञ्चयानगर्यां महाबलनृपो विमलसूरिपार्श्वे दीक्षां लात्वा (१) विजयविमाने सुरः (२) ततः श्रीअभिनन्दनः (३) ॥ ४ ॥ जम्बूद्वीपे पुष्कलावतीविजये शङ्खपुरे पुरे विजयसेननामा राजा तज्जाया सुदर्शना तयोः सुतः पुरुषसिंहराजा विनयनन्दनगुर्वन्तिके व्रतं लात्वा (१) वैजयन्ते सुरः (२) ततः श्रीसुमतिजिनः (३) ॥ ५ ॥ धातकीखण्डे पूर्वविदेहे वत्साऽभिधे विजये सुसीमानगर्यां अपराजिताख्यो राजा,

ग्रैवेयके त्वं नवमे सुरोऽभव- (२)
स्ततश्च पद्मप्रभतीर्थनायकः (३) ॥ ६ ॥
त्वं धातकीषण्डगते विदेहे
श्रीक्षेमपुर्यां नृपनन्दिषेणः (१) ।
ग्रैवेयकेऽभूस्त्रिदशश्च षष्ठे (२)
पाया अपायाज्जिन! मां सुपार्श्व! (३) ॥ ७ ॥

यस्त्वं पूर्वभवे विदेहविजये सद्धातकीषण्डजे
पद्मो नाम धराधवो (१) ऽथ विबुधः श्रीवैजयन्ते (२) ततः ।
च्युत्वा श्रीमहसेनवंशकुमुदप्रोज्जृम्भने चन्द्रमाः
श्रीचन्द्रप्रभ! (३) देहि मे निजपदोपास्तिं समस्तां सदा ॥ ८ ॥

पूर्वं पद्मनृपो हि पुष्करवरद्वीपार्धगे पुष्कला-
वत्याह्वे विजयेऽभवः (१) सुरवरः श्रीआनते ताविषे (२) ।
श्रीसुग्रीवनरेशवंशविशद श्रीमौक्तिकाभ! प्रभो!
स्वामिंस्त्वं सुविधे! (३) विधेहि सुविधौ लीनं मदीयं मनः॥९॥

यः पुष्करद्वीपविदेहभूषणे
वत्साभिधेऽभूर्विजये धराधवः ।

---

पिहिताश्रमसूरिपार्श्वे दीक्षां लात्वा (१) ग्रैवेयके सुरः (२) ततः श्रीपद्मप्रभजिनः (३) ॥ ६ ॥ धातकीषण्डे पूर्वविदेहे रमणीयाह्वये विजये क्षेमपुर्यां नन्दिषेण-नृपोऽरिदमनाचार्यान्ते व्रती (१) षष्ठे ग्रैवेयके सुरः (२) श्रीसुपार्श्वः (३) ॥ ७ ॥ धातकीषण्डे प्राग्विदेहे मङ्गलावतीविजये पुण्डरीकिण्यां नगर्यां पद्मनामा राजा युगन्धराचार्यान्ते व्रती भूत्वा (१) वैजयन्ते देवः (२) ततः श्रीचन्द्रप्रभजिनः (३) ॥ ८ ॥ श्रीपुष्करद्वीपे पूर्वविदेहे पुष्कलावतीविजये पुण्डरीकिण्यां नगर्यां पद्मनामा राजा राज्यं त्यक्त्वा जगन्नन्दनगुर्वन्तिके व्रती भूत्वा (१) आनते सुरः (२) ततः श्रीसुविधिजिनः (३) ॥ ९ ॥ पुष्करवरद्वीपे पूर्वविदेहे वत्साभिधे

पद्मोत्तरो नाम (१) सुरोऽच्युते (२) ततो
भवे तृतीये जय शीतलः (३) प्रभो! ॥ १० ॥

आदौ पूर्वभवे हि पुष्करवरद्वीपे विदेहोद्भवे
श्रीकच्छे विजये विभो! नलिनगुल्माह्वोऽजनिष्ठा नृपः (१)।
श्रीपुष्पोत्तरसद्विमानकवरे यो निर्जरो भासुरः (२)
श्रीश्रेयांस! (३) भवे भवे मम भवत्सेवां प्रदेयाः प्रभो!॥११॥

यः पुष्करद्वीपगते विदेहे
पद्मोत्तरः प्राक् नृपतिः प्रभोऽभूः (१)।
लात्वा व्रतं सप्तमकल्पनाकी (२)
श्रीवासुपूज्यश्च (३) भवे तृतीये ॥ १२ ॥

यो धातकीषण्डगते विदेहे
पूर्वं प्रजासेननृपोऽजनिष्ठाः (१)।
स्वामिन्! सहस्रारगतः सुपर्वा (२)
विभो! भवे त्वं विमलस्तृतीये (३) ॥ १३ ॥

यः प्राग्भवे पद्मरथो महीपति-
स्त्वं धातकीषण्डविदेहमण्डले (१)।

---

विजये सुसीमानगर्यां पद्मोत्तरो राजा अस्ताघगुरुसमीपे व्रतमादाय (१) अच्युते सुरः (२) ततः श्रीशीतलजिनः (३) ॥ १० ॥ पुष्करद्वीपे प्राच्यविदेहे कच्छाख्ये विजये क्षेमपुर्यां नलिनगुल्मो नृपो वज्रदत्तर्षिपार्श्वे व्रतं लात्वा (१) प्राणतगे पुष्पोत्तरविमाने सुरः (२) ततः श्रीश्रेयांसः ( ३ ) ॥ ११ ॥ पुष्करार्धप्राच्यविदेहे पुष्कलावतीविजये रत्नसञ्चयानगर्यां पद्मोत्तरो राजा वज्रनाभर्षिपार्श्वे व्रतं लात्वा (१) महाशुक्रे सुरः (२) ततः श्रीवासुपूज्यः (३) ॥ १२ ॥ पूर्वं धातकीषण्डे विदेहे भरताह्वे विजये महापुरीनाम्न्यां नगर्यां प्रजासेनो नृपः सर्वगुप्तगुरोः पार्श्वे व्रतं लात्वा (१) सहस्रारकल्पे देवः (२) ततो विमलजिनः (३) ॥ १३ ॥ धातकीषण्डे प्राच्यविदेहे ऐरावताख्ये विजये पद्मरथनामा राजा

पुष्पोत्तरे प्राणतकल्पके सुसत् (२)
स्वामिन्ननन्त(३)जिभवैः स्तुतोऽव माम् ॥ १४ ॥

प्राग् यो भवे दृढरथो नृपतिश्च घातकी-
षण्डे विदेहविजये भरताभिधेऽभवः (१) ।
लात्वा व्रतं विमलवाहनसंयतान्तिके
सर्वार्थसिद्धिविबुधोऽव जिनेन्द्र! धर्म! माम्(३)॥१५॥

त्वं श्रीषेणनृपोऽभवः प्रथमतो (१)
युग्मी (२) च सौधर्मगो (३)
यो नाम्नाऽमिततेजसा खचरराट् (४)
श्रीप्राणते निर्जरः (५) ।
सीरी श्रीअपराजितो (६) ऽच्युतपति (७)
र्वज्रायुधश्चक्रभृत् (८)

---

चित्तरक्षगुर्वन्ते व्रतं लात्वा (१) प्राणतगे पुष्पोत्तरविमाने सुरः (२) ततः श्रीअनन्तजिनः (३) ॥ १४ ॥ घातकीखण्डद्वीपे प्राच्यविदेहे भरताह्वे विजये भद्दिलपुरे पुरे दृढरथराजा विमलवाहनगुर्वन्ते व्रतमादाय (१) सर्वार्थसिद्धविमाने सुरः (२) ततो रत्नपुरे श्रीधर्मनाथः (३) ॥ १५ ॥ जम्बूद्वीपे भरते रत्नपुरे पुरे श्रीषेणराजा पुत्रयुद्धं वीक्ष्य विरक्तः संसारे, विषमिश्रकमलमाघ्राय मृतः (१) देवकुरुषु युग्मी (२) सौधर्मे सुरः (३) जम्बूद्वीपेऽत्र भरते वैताढ्ये रथनूपुरचक्रवालपुरेऽर्ककीर्तिराजा, ज्योतिर्माला राज्ञी, तयोः सुतोऽमिततेजा राजा, आयुःप्रान्ते दीक्षाऽनशने च सार्धमादाय २६ दिनानि प्रपाल्य (४) प्राणतकल्पे मणिचूलनामा सुरः (५) जम्बूद्वीपे विदेहे रमणीयाख्ये विजये शुभापुर्यां स्तिमितसागरराजा, वसुन्धरा राज्ञी, तयोः पुत्र अपराजितनामा हली ८४ पूर्वलक्षायुः, प्रान्ते च १६ सहस्रनृपैः सह प्रव्रज्य (६) अच्युतेन्द्रः (७) ततो जम्बूद्वीपे विदेहे मङ्गलावतीविजये रत्नसञ्चयानगर्यां क्षेमङ्करतीर्थङ्करराजा, रत्नमाला राज्ञी, तयोः पुत्रो वज्रायुधनामा चक्री व्रतमादाय प्रान्ते चाऽनशनं विधाय

सग्रैवेयकगो (९) ऽव मेघरथराट् (१०)
सर्वार्थगः (११) शान्तिराट् (१२) ॥ १६ ॥

जम्बूद्वीपमहाविदेहविजये
यः खड्गिपुर्यामभूः
प्राक् सिंहावहभूपति (१) र्वरतरा-
मुत्सृज्य राज्यश्रियम् ।
दीक्षां वत्सरसूरिराजसविधे
लात्वा च सर्वार्थगो
गीर्वाणो (२) जिन! कुन्थुनाथ! (३) भवभी-
मीतं प्रभो! पाहि माम् ॥ १७ ॥

जम्बूद्वीपे विपुलविजये वत्ससंज्ञेऽजनिष्ठा
यस्त्वं पूर्वं धनपतिनृपः श्रीसुसीमानगर्याम् (१) ।
लात्वा दीक्षां यतिपतिवरात् संवरात् श्रीजयन्ते
देव (२) श्च्युत्वा त्वमर! जिनपोऽभूः (३) प्रणम्रामरेन्द्रः ॥१८॥

द्वीपेऽत्र वर्यविजये हि विदेहमण्डने
यः प्राग्भे नृपमहाबलसंज्ञकोऽभवः (१) ।

---

(८) तृतीये ग्रैवेयके सुरः (९) ततो जम्बूद्वीपविदेहे पुष्कलावतीविजये पुण्ड-रीकिणीनगर्यां घनरथतीर्थङ्करराजा, प्रियमती राज्ञी तयोः पुत्रो मेघरथनामा पारापतहोलाहिकक्रुतसत्वपरीक्षः ८३ पूर्वलक्षायुः राज्यं कृत्वा १ पूर्वलक्षं दीक्षा-माराध्य (१०) सर्वार्थसिद्धविमाने सुरः (११) ततः श्रीशान्तिजिनः (१२) ॥ १६ ॥ जम्बूद्वीपे प्राच्यविदेहे आवर्तनाम्नि विजये खड्गिपुर्यां सिंहावहराजा, वत्सराचार्यपार्श्वे व्रतं लात्वा (१) सर्वार्थविमाने सुरः (२) ततः कुन्थुजिनः (३) ॥ १७ ॥ जम्बूद्वीपे पूर्वविदेहे वत्सविजये सुसीमानगर्यां धनपतिनामा नृपः, श्रीसंवरमुनिपार्श्वे व्रतमादाय (१) जयन्तविमाने सुरः (२) ततो नागपुरे सुदर्श-नराजसुतोऽरनाथः (३) ॥ १८ ॥ जम्बूद्वीपे विदेहे सलिलावतीविजये वीतशोका-

तत्वा तपश्चतुरशीतिसमासहस्रकं
श्रीमान् जयन्तद्युमना (२)अव मल्लिनाथ ! (३)माम् १९

पूर्वं त्वं शिवकेतुभूपतिरभूः
(१) सौधर्मवृन्दारक (२)
च्युत्वा नाम कुबेरदत्तनृपति (३)
र्नाके तृतीये मरुत् (४) ।
तस्मात् त्वं भुवि वज्रकुण्डलनृपः
(५) श्रीब्रह्मलोके द्युसत् (६)
श्रीश्रीवर्मनृपो (७) ऽपराजितसुरः (८)
सोऽव्याः सतः सुव्रतः (९) ॥ २० ॥

जम्बूद्वीपे भरतविजये श्रीविदेहान्तरस्थे
कौशाम्ब्यां त्वं प्रथममभवः क्ष्मापसिद्धार्थनामा (१) ।

---

ऽभिधायां नगर्यां बलो राजा, धारणी राज्ञी, तयोः सुतो महाबलनामा कमलश्रीप्रमुखराजकन्यापञ्चशतीं न्युवाह, पितुराज्ञया स्वर्णकोटी रत्नकोटी पृथक् पृथक् पञ्चशती धवलगृहादि वस्तु दत्तं महाबलस्य विवाहे । तस्य षट् बालमित्राणि—अचल १, धरण २, पूरण ३, वसु ४, वैश्रमण ५, अभिचन्द्र ६, इति नामानः । सर्वं ८४ पूर्वलक्षायुः । सप्ताऽपि दीक्षां लात्वा सप्ताऽपि चतुरशीतिवर्षसहस्राणि सिंहविक्रीडितादितीव्रतपस्तप्त्वा (१) जयन्तविमाने सप्ताऽपि सुराः (२) ततः षट् राजपुत्रा जाताः, महाबलनामा शिरोऽर्तिव्याजादधिकतपश्चिकीर्षया मायया तपस्तप्त्वा श्रीमल्लितीर्थङ्करः (३) ॥ १९ ॥ पूर्वे भवे सुप्रतिष्ठपुरे शिवकेतुराजा (१) सौधर्मकल्पे गीर्वाणः (२) वरपुरे कुबेरदत्तः (३) ततः सनत्कुमारकल्पे देवः (४) पौराणनाम्नि नगरे वज्रकुण्डलनामा राजा (५) पञ्चमकल्पे सुरः (६) चम्पानगर्यां श्रीवर्मनामा राजा (७) अपराजितविमाने गीर्वाणः (८) ततः त्रिंशद्वर्षसहस्रायुर्विंशतिचापोच्चाङ्गः श्रीमुनिसुव्रतो जिनपतिरभूत् (९) ॥ २० ॥ जम्बूद्वीपे प्रत्यग्विदेहे भरतसंज्ञे विजये कौशाम्ब्यां नगर्यां सिद्धार्थनामा राजा सुदर्श-

प्राप्य प्रौढं चरणममरोऽनुत्तराह्वे विमाने (२)
वप्रापुत्र! त्रिदिवशिवदो देहि मे शं नमीश! (३) ॥२१॥
पूर्वं यस्त्वमभूर्भवे धननृपः (१) सौधर्मदेवस्तत (२)
श्च्युत्वा चित्रगतिर्नभश्चरवरो (३) माहेन्द्रकल्पे सुरः (४)।
भूपालो ह्यपराजितो (५) ऽथ सुमनाः श्रीआरणे (६) शङ्खराड् (७)
गीर्वाणस्त्वपराजिते (८) नवभवैर्नूतः स नेमे (९) ऽव माम्॥२२॥
पूर्वं त्वं मरुभूतिरत्र (१) समभू-
र्हस्ती (२) सहस्रारगो
लेखः (३) खेचरपुङ्गवः किरणवे-
गाह्वो (४) ऽच्युते निर्जरः (५)।

---

नमुनिपार्श्वे दीक्षां लात्वा (१) अपराजितविमाने सुरः (२) ततोऽत्र भरते मिथिलापुर्यां विजयराजा, वप्राराज्ञी, तयोः पुत्रः श्रीनमिनाथः (३) ॥ २१ ॥ अत्र भरते अचलपुरे पुरे विक्रमधनराजा, धारणी राज्ञी, तयोः सुतो धननामा राजा तपस्यामादाय (१) सौधर्मकल्पे सुरः (२) वैताढ्ये सूरतेजःपुरे पुरे सूर-विद्याधरराजा, विद्युन्मती राज्ञी, तयोः सुतश्चित्रगतिनामा विद्याधरराजाऽन्ते दीक्षामादाय (३) माहेन्द्रकल्पे देवः (४) विदेहे सिंहपुरे हरिनन्दी राजा, प्रियदर्शना राज्ञी, तयोः पुत्रोऽपराजितनामा राजा, अन्ते दीक्षावान् (५) आरणकल्पे सुरः (६) भरतेऽत्र हास्तिनपुरे पुरे श्रीषेणराजा, श्रीमती राज्ञी, तयोः सुतः शङ्खनामा राजा (७) अन्ते व्रती। अपराजिते विमाने सुरः (८) ततश्च्युत्वा अत्र मगधदेशे सूर्यपुरे श्रीनेमिनाथः (९) ॥ २२ ॥ जम्बूद्वीपे भरते पोतनपुरे अरविन्दराजा, तस्य पुरोधा विश्वभूतिनामा, तत्सुतो मरुभूतिः श्राद्धधर्ममाराध्य प्रान्ते आर्त्या मृत्वा (१) हस्ती कमठभार्या वरुणा करिणी चाऽभूत्। करिणीप्रमुखसहस्रयूथनायकोऽरविन्दराजर्षिं वीक्ष्य जातिस्मृतिमान् प्रत्यहं षष्ठतपःकारी आयुःप्रान्ते कुक्कुटाहिदष्टोऽनशनं कृत्वा (२) सहस्रारकल्पे देवः, साऽपि करिणी हस्त्यनुरागादनशनं कृत्वा सहस्रारे तद्देवदेवी जाता (३) विदेहे विद्युद्गतिराजा, तिलकावली राज्ञी, तयोः सुतः किरणवेगो राजा, अन्ते दीक्षावान् (४) अच्युते सुरः

यश्च्युत्वा भुवि वज्रनाभनृपति-
(६) ग्रैवेयकान्तः सुरः (७)
चक्री नाम सुपर्णबाहु (८) रमरः
कल्पे (९) ऽव पार्श्वेश! (१०) माम् ॥ २३ ॥
पूर्वं त्वं नयसारभूपति (१)
रभूः सौधर्मवृन्दारक (२)
श्च्युत्वा नाम मरीचि (३) रत्र सुमनाः
स्वेपञ्चमे (४) कौशिकः (५)।
देवः प्राग्दिवि (६) पुष्पमित्र (७) इति यः
सौधर्मकल्पे सुरो (८)
ऽग्नि द्योत (९) स्त्रिदशो द्वितीयतविषे
(१०) विप्रोऽग्निभूत्याह्वयः (११) ॥ २४ ॥
गीर्वाणस्तु सनत्कुमारतविषे
(१२) विप्राग्रणीर्नामतो

---

(५) विदेहे वज्रराजा, लक्ष्मीवती राज्ञी, तयोः सुतो वज्रनाभराजा, राज्यं भुक्त्वा प्रान्ते दीक्षामनशनं चाऽऽधाय (६) मध्यमग्रैवेयके सुरः (७) विदेहे वज्रबाहु-राजा, सुदर्शना राज्ञी तयोः सुतः स्वर्णबाहुनामा चक्री प्रान्ते दीक्षाऽनशनं च (८) प्राणतकल्पे सुरः (९) ततः श्रीपार्श्वनाथः (१०) ॥ २३ ॥ जम्बूद्वीपान्तर-विदेहे महावप्राभिधे विजये जयन्तीपुर्यां शत्रुमर्दनराजा, तस्य सेवको ग्रामाधिपो नयसारनामा नृपः श्राद्धधर्ममाराध्य (१) सौधर्मकल्पे महर्द्धिकः पल्योपमायुष्कः सुरः (२) ततोऽत्र भरतसुतो मरीचिनामा ८४ पूर्वलक्षायुः, सर्वं व्रतं लात्वा त्रिदण्डी जातः (३) पञ्चमकल्पे सुरः (४) कौशिकनामा विप्रोऽशीतिपूर्वलक्षायुः सर्व० (५) सौधर्मकल्पे सुरः (६) पुष्पमित्रनामा विप्रः ७२ पूर्वलक्षायुः (७) सौधर्मकल्पे सुरः (८) अग्निद्योतनामा द्विजः (९) ५४ पूर्वलक्षायुः। ईशाने गीर्वाणः (१०) अग्निभूतिनामा विप्रः षट् पञ्चाशत्पूर्वलक्षायुः (११) सनत्कुमार-

भारद्वाजगृही (१३) चतुर्थतविषे
लेखो (१४) द्विजः स्थावरः (१५) ।
नाकी पञ्चमके सुरालयवरे
(१६) श्रीविश्वभूतिर्नृपः (१७)
शुक्रे निर्जरकुञ्जरो (१८) ऽत्र भरते
विष्णुस्त्रिपृष्ठोऽभवः (१९) ॥ २५ ॥
सप्तम्यां भुवि नारको (२०) मृगपति-
(२१) स्तुर्यावनौ नारकी (२२)
चक्री च प्रियमित्रकः (२३) सुरवरः
शुक्रे (२४) नृपो नन्दनः (२५) ।

---

कल्पे देवः (१२) भारद्वाजनामा विप्रः ४४ पूर्वलक्षायुः (१३) माहेन्द्रकल्पे सुरः (१४) ततो भवभ्रमः, [१] राजगृहे नगरे स्थावरनामा द्विजः ३४ पूर्वलक्षायुः सर्वम् (१५) एतेषु षट्सु भवेषु देवलोकान्तरितेषु विप्रत्वं प्राप्तः, आयुःप्रान्ते च त्रिदण्डीव्रतं चाऽङ्गीचकार श्रीवीरः, ततः ब्रह्मलोककल्पे सुरः (१६) ततो वीरभवभ्रमः, [२] राजगृहनगरे युवराजपुत्रो विश्वभूतिनामा राजा, वर्षसहस्रं व्रतं प्रपाल्य सर्वायुः वर्षकोटीप्रमाणं च निदानं कृत्वा (१७) महाशुक्रे देवः (१८) ततः पोतनपुरे प्रजापतिनामा राजा, मृगावती राज्ञी, तयोः सुतस्त्रिपृष्ठनामा वासुदेवः, अशीतिधनुर्देहश्चतुरशीतिवर्षलक्षायुः सर्वं (१९) सप्तमनरके गतः (२०) सिंहस्तिर्यक्षु (२१) चतुर्थनरके गतः (२२) तिर्यङ्मर्त्यभवभ्रमः [३] विदेहे धनञ्जयराजा, धारणी राज्ञी, तयोः पुत्रः प्रियमित्रनामा चक्री वर्षकोटिं यावदुत्कृष्टं तपस्तप्त्वा चतुरशीतिपूर्वलक्षायुः सर्वं च प्रपाल्य (२३) शुक्रकल्पगे सर्वार्थसंज्ञे विमाने सुरः (२४) अत्र भरते छत्रापुर्यां जितशत्रुराजा, भद्रा राज्ञी, तयोः सुतो नन्दननामा राजा, चतुर्विंशतिवर्षलक्षीं राज्यं कृत्वा पोट्टिलाचार्यपार्श्वे व्रतमादाय वर्षलक्षं यावत् मासक्षपणं विना पारणकं न चकार एवं सर्वाग्रेण ११ लक्षान् मासक्षपणानां कृतवान्, सर्वायुः पञ्चविंशतिवर्षलक्षान् भुक्त्वा प्रान्ते

श्रीपुष्पोत्तरके विमानकवरे
श्रीप्राणतस्वर्गगे
नाकी (२६) कीर्तितसप्तविंशतिभवो
भूयाः स वीर! (२७) श्रिये ॥ २६ ॥

त्रिभिर्विशेषकम् ॥

## अथ पारसीभाषया श्रीऋषभजिनस्तवनम् ।



अल्ला ल्लाहि तुराहं, कीम्ब रुसहिआ नु तूं मराष्वांद ।
दुनीपकसमे दानइ बुस्सारइ बुध चिरा नम्हं ॥ १ ॥
येके दो सि जिहारि पंच्यश सह छपूहस्त नोय दह ।
दानिसि मंद हकीकत आकिलु तेयसु तुरा दोस्ती ॥ २ ॥

( गाथाद्वयम् )

---

षष्टिदिनान्यनशनं प्रपाल्य विंशति–स्थानकक्रुतपूर्वी कालं कृत्वा (२५) प्राणत-कल्पगे पुष्पोत्तरनाम्नि विमाने विंशतिसागरोपमस्थितिर्गीर्वाणः (२६) ततः कुण्डपुरे नगरे श्रीसिद्धार्थपुत्रः श्रीवीरः समजायत (२७) ॥

इति श्रीऋषदेवप्रमुखचतुर्विंशतिजिननायकसंक्षिप्तभववर्णनस्वरूपावचूर्णिः ॥

इति श्रीचतुर्विंशतिजिनधर्मावाप्तिभवाद्यथानुक्रमे भवोत्कीर्तनसम्बद्धं स्तवनम् । लिखितं रत्नसागरगणिना । शोधितं विबुधशिरःशेखर पं० सत्यशेखर०

।

हे पूज्य! तवाऽहं कर्मकरः, त्वं पृथिवीपतिर्मम स्वामी वसुधालोकान् हे देव! चिरा कस्मादस्मान् न सम्भालयसि?, यतस्त्वं मे 'दानीं' सर्वमपि वेत्सि ततो मां दुःखितं कथं न वेत्सि? इत्यर्थः ॥ १ ॥ एको द्वौ त्रयश्चत्वारः पञ्च षट् सप्त अष्टौ नव दश वा त एव नरा गुणिनो मध्यस्थाः साधवो, येषां त्वदीया मैत्री । कोऽर्थः?

आनिमान खतमथु खुदा विलामि किंचि विवीनि ।
माहु रोजसि ओजा मुमुरा येकुय दिलु बिनसीनि ॥ ३ ॥
तूं मादर तूं फिदर बुध तूं ब्रादर तूं आ मु ।
नेसि विहेलिय तइं अवरि चीजे मोरइ कामु ॥ ४ ॥
महमद मालिम तंमरा ईब्राहिम रहमाणु ।
इहं तुरा कुवाबीआ मेदिहि मुरुय छफरमाणु ॥ ५ ॥
फरमुदूतुरा जु मेकुनइ मेचीनइ न सधंग ।
खोसु शलामथ आदं तु अर्जेदि छोडियंग ॥ ६ ॥

---

एको वा द्वौ वा यावद् दश वा त एव गुणिनो येषां लय्यनुरागो नाऽपरे ॥ गाथाद्वयम् ॥ २ ॥ हे स्वामिन्! अस्मदीयां 'खतमथुः' भक्तिं, यत उक्तम्—"आलोचाम सुआरथुः खतमथुर्भक्तिः सुरोद्गायनं (वृ) नृत्तं स्याद् रसकुर्नयश्च हवसुः रूढिस्तथा काइदा । अन्यायोऽपि हरामु सोग निरथो दिव्यादिकं जुमूमला सङ्घातश्च सपातनि होरक इति स्याद् विक्रयः ...पोश्वुती ॥ १ ॥" किञ्चिदल्पमात्रां शृणु, आलोकयच, विज्ञप्तिकां शृणु विनयं चाऽऽलोकय इत्यर्थः । माहुः दिवसं रात्रिं यामं एकमपि मम 'दिलु' हृदये 'बिनसीनि' उपविश, तिष्ठ इत्यर्थः ॥ ३ ॥ त्वं माता, त्वं पिता, त्वं भ्राता 'पु'त्ति पितृव्यः, त्वां विमुच्य अपरेण 'चीजे' किमपि मम कार्यं 'नेसि' नास्ति इत्यर्थः ॥ ४ ॥ त्वं 'महिमदो' विष्णुः, 'ईब्राहिमो' ब्रह्मा, 'रहमाणो' महेश्वरस्त्वमेव अथ 'रह त्यागे' इति चौरादिको विकल्पेन धातुः, रहति रागद्वेषौ त्यजतीत्येवं शकः । 'शक्तिवयस्ताच्छिल्ये' इति शानङ्, आत्मोऽन्त आते मोतः णत्वे कृते रहमाण इति रूपं । सर्वेऽपि देवास्त्वमेव 'मालिमः' पण्डितो मम त्वं 'ई' एषोऽहं 'तुरा' तव 'कुता बिया' लेखशालिकः मेदिहि' दे महिम '...फुरमाणु' आदेशः । किं करवाणि अहं, पण्डितो हि, शिष्यस्यादेशं ददातीति भावः ॥ ५ ॥ 'फरमुदतुरा' तवा (?) दिष्टयो 'मेकुनइ' करोति, 'सधंग' दुःखादि न 'मेचीनइ' न चुणयते, 'खोसु' सुखं, 'शलामथ' कुशलं, 'दंत' साहाय्यं, 'तु' नव्यम् । 'अर्जेदि' लभते, कथंभूतः? 'छोडियंग'

सादि नखम्मि नवां अगर तं कुय तुरा सलामु ।
चंदि खलात सुमेदिहइ वासइ न हर हरामु ॥ ७ ॥
जानूयरु यो मेकुसइ मिदिहदि सो न विहस्ति ।
बुचिरुक् बिल्लइ दोजुषीधंग बहुत तसु हस्ति ॥ ८ ॥
(दूहकषट्कम्)
आ स्तारां तेरिषु ब दानु साले साते दीग सरा नु ।
चिस्म दीद यं बुध रू तुरा बूदी कार सरु बस मरा ॥ ९ ॥
(चतुष्पदीच्छन्दः)
माही-उस्तुरु-गाउ-गाउनर-खूगु-पलंगो
आहू-गुरवा-मुरगु-सेरु-गामेसि-कलागो ।

---

मुफ्तकलह इति सम्बोधने गतद्वेषेति भावः ॥ ६ ॥ 'सादि'त्ति तुष्टो 'नखम्मि' रुष्टो 'नवां' नेति, 'अगर' यद्यपि, 'तं कुय' त्वं क्वापि। 'तुरासलामु' तव नमस्कारः। 'चन्दि'त्ति ईदृशः, किञ्च 'खलात' राजप्रसादं 'स मेदिहइ' ददाति। 'हर' इति प्रत्यर्थे, त्वां प्रति नमस्कारो 'हरामु' रुच्यते। 'न वासइ' न भवति, कोऽर्थः? यदि त्वं न तुष्टो न रुष्टोऽसि ततस्तव नमस्कारो राजप्रसादं कथं न ददाति? कथं व्यर्थो न स्यादित्यर्थः ॥ ७॥ 'जानूउर'त्ति जीवान् यो 'मेकुसइ' हन्ति स 'विहस्ति' स्वर्गं 'न मिदिहदि' न प्राप्स्यति। किम्? 'बिल्लइ' निश्चितं, 'बुचिरुक्' स्थूलानि, 'दोजषीधंग' नरकदुःखानि प्रभूतानि तस्य 'हस्ति' भवन्ति। अतस्तव सेवको जन्तून् न हन्तीति ॥ ८ ॥ 'आस्तारां' नक्षत्रम्, 'तेरिषु' तिथिः, 'व' इति भाषाविशेषे, 'दानुः' शरीरं, 'साले' संवत्सरः, 'साते' घटिका, 'दीग' प्रभातम्, 'नु' वाक्यालङ्कारे, 'सरा' भव्यम्। एतानि स्थानानि भव्यानि अद्य मे मम यातानि। यतः 'चिस्म' नेत्रद्वयेन 'तुरा' तव 'रू' मुखम् 'दीद' दृष्टम्। 'कार' प्रयोजनानि 'सरू' सर्वाणि 'मरा' मम 'बुदी' जाता 'बस' पूर्णताम्, मम सर्वाणि कार्याणि सम्पूर्णानि बभूवुरिति भावार्थः (चतुष्पदीच्छन्दः) 'दीद' इति विलोकितम्, तथा चोक्तम्—"दिष्टं फरमूद निविस्तु लिखितं गृ... फं गृहीतं गतं रत्... फं दीद विलोकितं परिहृतं हिस्तिजुंदा योजितम्। दत्तं दाद च षीद मध्यघटितं जद् यदन्याहतं प्रोक्तं गुपतुतं कृतं च कर्दु तदहो भग्नं च इस्किस्तयं ॥ १ ॥" इति ज्ञेयम् ॥ ९ ॥ 'मही' मत्स्यः, 'उस्तुरः' उष्ट्रः, 'गाउ' गौः, 'गाउनर'

मगस-सितारक-मारु-बाजु-गावसु-ताऊसग-
ऊयजकु-मखलु-कुतानु-षइष-सगु-बत-बुज-मूसग ।
दूज-खउसार-नकासु-जनि-दरिजिउ-जरी-हजामु
ते वासइ जि न मेकुनइ सिरि जिन! तुरा सलामु ॥१०॥
( षट्पदछन्दः )

शहर दिह उलातुंच्छत्तुखाफूरअदु-
मिसकि जरि न बातु ष्वांद! रोजी दरास ।

---

बलवर्दः, 'खुगुः' शूकरः, पलंगश्चित्रकः, 'आहूः' कृष्णसारः, 'गुरबा' मार्जारः, 'मुरगु' कुर्कुटः, 'सेरुः' व्याघ्रः, 'गामेसि' महिषी, 'कलागु' काकः, 'मगस' मक्षिकाः, 'सितारक' काबरिः, 'मारु' पन्नगः, 'बाजु' श्येनः, 'गावसु' ऋक्षः, 'ताउसग' मयूरः, 'ऊयजकु' गृहगोधिका, 'मखलु' तीडः, 'कुतानु' मत्कुणः, 'षइष' चम्बडः, 'सगु' श्वा, 'बत' हंसः, 'बुज' अजा, 'मूसग' मूषकाः, एतैः शब्दैस्तिर्यञ्चः प्रतिपादिताः । साम्प्रतं कुमनुजयोनयः—'दुज' चौरः, 'खउसार' चर्मकारः, 'नकासु' चित्रकारः, 'जनि' महिला, 'दरिजीउ' सूचिकः, 'जरी' सुवर्णकारः, 'हजामु' नापितः, इत्यादि अन्या अपि विकृतजातयो ग्राह्याः । जातिग्रहणेन तज्जातीयस्यापि ग्रहणमिति वचनात्, हे जिन! ते 'वासइं भवन्ति, ये तव नमस्कारं न कुर्वन्ति । कोऽर्थः? तव नमस्कारमकृत्वा तिर्यग्योनौ पूर्वोक्तस्वरूपेषु सत्वेषु कुमानुषत्वे च जीवा उत्पद्यन्ते इति भावः । (षट्पदच्छन्दः) ॥ १० ॥ 'शहरु' पत्तनं, 'दिह' ग्रामः, उलातु देः, 'च्छत्तु' छत्रम्, छत्रग्रहणाद् राज्यं ज्ञेयम् । 'खाफूरु' कर्पूरं, 'अदुः' अगुरुः, 'मिसकिः' कस्तूरिः, 'जरुः' सुवर्णं, 'नवात' शर्करा, 'ष्वांद! 'स्वामिन्! 'रोजी' विभूतिः, 'दरास' विस्तीर्णा- 'कसब' इक्षुः, 'पिसि' पार्श्वे, 'तुरा' तव 'इ' एष मल्लक्षणो जनः 'नो' नैव, 'सरा' भव्यम् २ पूर्वोक्तं वस्तुजातं 'प्रेषुहाई' याचते । किन्तु हे ऋषभ! 'हथमु' न्यायं, 'दोस्ती' सर्वस्याऽपि मैत्री 'चंदिने इय' देव! त्वं मे 'देहीति' देयाः । कोऽर्थः? अहं अन्यत् किमपि न याचे किन्तु त्वं मम न्यायं मैत्रीमेव देया इति भावार्थः

कसव पिसि तुरा इं नो सरा मेषुहाई
रिसह! हथमु दोस्ती चंदिने मे दिहीति ॥ ११ ॥

इति पारसीभाषया श्रीऋषभजिनस्तवनम् ।

## सिद्धविंशिकास्तोत्रम् ।

मुनीनां दुस्तर्क्यः खलु दुरधिगम्योऽमृतभुजां
गुणानां ते राशिः कलयति नरस्तत् कथममुम्? ।
विवक्षुः प्रौत्सुक्यात् स्वधियमविजानन् जडमति-
र्निधातुं कुम्भान्तर्निधिममिलषामीह पयसाम् ॥ १ ॥

त्वमीशानोऽस्माकं वयमपि च भृत्यास्तव विभो!
तदुच्चैर्भृत्यानां भवसि न कथं हन्त वरदः? ।
यदा मादृक्षेण स्फुरति तव लज्जा जडधिया
धियः स्वस्या दाने वद किमिति कार्पण्यमतुलम्? ॥ २ ॥

न रोधो नाऽवज्ञा न च खलभयं नाऽनवसरो
न चाऽसिद्धिर्नास्था चिरपरिचये नो चटुवचः ।

---

(मालिनीछन्दः) ॥ ११ ॥ अस्मिन् स्तवने क्वचित् पारसी, क्वचित् आर्बी, क्वचिदपभ्रंशो ज्ञेयः, 'तुरामरा' इति सर्वत्र सम्बन्धे सम्प्रदाने च ज्ञातव्यम् । तथा च कुरानकारः—"अज इत्यन्वपादान्तं सम्बन्धे सम्प्रदानयोः । राः सर्वत्र प्रयुज्येत ताऽन्यत्रवाच्यस्वरूपतः' आनिमानसदीयं, किंचि कियत्, चन्दिरी । दृशम् । चुनीइ मचुनीत् तादृक् चदिनेद्र यदेव च । ची जी किमपि" इत्यादि कुराणोक्तं लक्षणं सर्वत्र विज्ञेयम् सम्प्रदायाच्च ॥

॥ इति पारसीभाषया ऋषभजिनस्तवनं समाप्तम् ॥

विभो! त्वत्सेवायामिह यदपि सौकर्यमखिलं
तथाप्यस्मच्चेतो हतमितरसेवां स्पृहयति ॥ ३ ॥

श्रुते न व्यासङ्गो नच सततसङ्गोऽपि विदुषा-
मभङ्गो नोत्साहस्तपसि नच दानं न विरतिः ।
गुणैरस्पृष्टं नो बत जनममुं तारयसि चे-
ज्जडानामुद्धारे बत वरद! काऽऽहोपुरुषिका ॥ ४ ॥

भजन्तेऽमी मामप्यहह विषयारूढमनस-
स्तदुद्धारे मा भूः श्लथितविनियोगो जडधियाम् ।
त्यजामो व्यासङ्गं विषमविषयाणां यदि तदा
स्वयं तूर्णं तीर्णास्त्वयि किमिति दैन्येन भगवन्? ॥ ५ ॥

त्वमुद्धर्ता नृणामपि भवपयोधौ निपततां
विदित्वेत्यागां ते दुरितभरभुग्नोऽपि शरणम् ।
कुरूद्धारं नो चेत् सममिह मदीयैश्च दुरितैः
पराभूतिं गन्ता बत बत विवादव्यतिकरे ॥ ६ ॥

ममाङ्गीचक्रे त्वं परमपदलाभाहितधिया
त्वमीशौदासिन्यं भजसि यदि वाच्यं किमु पुनः? ।
विदूरेऽभीष्टार्थप्रवितरणकीर्तिः किमुत मे
कृताङ्गीकारस्त्वं परमनृणभावं न भजसि ॥ ७ ॥

त्वमीश! स्मर्तॄणां बहुलभवभावं निरसय-
न्नतर्क्यां माहक्षैः श्रियमनुपमेयां वितनुषे ।
जनस्त्वामाख्याति श्रुतविदिह नीराग इति यत्
तदाश्चर्यं यद्वाऽद्भुतचरितलक्ष्या हि विभवः ॥ ८ ॥

उदासीनो नाथ! त्वमिह भजतामप्यभजतां
सुखं वा दुःखं वा न खलु समदृश्वा स्पृहयसि।
परं त्वन्नामैवाऽवति जनममुं विघ्नभरतो-
ऽभिधैव श्लाघ्या तत् त्वयि किमिति मोघं बत यशः॥९॥
त्रिलोकी त्वामेवावसति जगदीशेति महिमा
तव श्लाघ्यो लोकेऽखिलजनचमत्कारजननः।
मम त्वामप्यन्तर्हृदि निवहतः किञ्च न यशो
विना पुण्यैः कीर्तिं जगति किल कश्चिन्न लभते ॥ १० ॥
समाच्छन्ना या श्रीः कृतकलुषकर्मोभ्रपटलैः
प्रदेया सैवाऽऽशु स्वयमिह समुद्घाट्य सहसा।
अये कीर्तिं सौधाकरकिरणकान्त्या सहचरीं
मदीयां तां मह्यं श्रियमवितरन् किं न भजसे? ॥ ११ ॥
प्रकुर्वन्तः पापान्यपि भयमुपैमो नहि मनाक्
तवैवार्थेऽस्माभिर्व्यरचि दुरितानां व्यतिकरः।
विना मादृक्षैस्ते विषमभवपाथोधिपतितैः
कथंकारं लभ्या वरद! पतितोद्धारपदवी॥ १२ ॥
त्वमुद्धर्तुं दीनान् दुरितभरभुग्नानपि विभो!
भवाब्धौ निक्षेप्तुं मम दुरितमत्याग्रहपरम्।
दिदृक्षामो श्रद्धामिह विततवादव्यतिकरे
प्रतिज्ञायां कस्योल्लसति दृढभूमिः खलु हठः ॥ १३ ॥
समक्षस्त्वं नाऽक्ष्णोर्न च वरद! चित्तानुकृतिभाग्
न वा लक्ष्यः स्वप्ने कथमपि न सेव्योऽसि वपुषा।

---

१ द्वा–शा–

तथाऽप्यसमेतस्त्वयि भजति रागाद्वशगतां
न जाने तद् ब्रह्मन्! कतममभिचारं प्रथयसि ॥ १४ ॥
भवश्वभ्रापातः स्फुरति बत रागप्रभव इ-
त्युपास्ते त्वां लोको बत नियतरागं च विमृशन् ।
अये चित्रं चित्रं चरितमविचिन्त्यं वरद! ते
श्रुतोऽप्यन्तर्नृणामतुलमनुरागं जनयसि ॥ १५ ॥
निशम्य स्वं दासं क्वचिदपि विपद्विघ्नितततनुं
त्वरन्ते स्वां व्रीडां हृदि निदधतो हन्त विभवः ।
अये मामाक्रान्तं दृढदुरितलुण्ठाकनिकरै-
र्मुहुः पश्यन् पश्यन् बत बत न लज्जां कलयसि ॥ १६
पयोधेर्गाम्भीर्यं विषमतिमिनक्रैरुपहृतं
हृतः काठिन्येन ध्रुवमचलराजस्य महिमा ।
विनिर्मुक्ते दोषैरगणितगुणौघं श्रितवति
त्वयि ब्रह्मन्! धत्ते सततसुषमां तद् द्वयमपि ॥ १७ ॥
पशुर्धेनुः शैलो मणिरवनिजन्मा तरुरथ
स्फुटं याच्ञ्वा दैन्ये ददति मितमर्थं कथमपि ।
तव ब्रह्मन्! स्वैरं श्रियमपरिमेयां वितरतो
न जाने त्रैलोक्ये कतरदुपमानं विलसति ॥ १८ ॥
इत्थं भक्तिचरातुरेण मनसा वाचामगम्योऽपि यन्
नूनं नाथ! नुतोऽसि नव्यचरितैरत्युग्रकाव्यैर्मया ।
तुष्टो यद्यपि साम्प्रतं भवभयक्लेशाकुलं हन्त मा-
मङ्गीकुर्वनुकम्पया जिनपते! नो चेदनङ्गीकुरु ॥ १९ ॥
त्वमनङ्गोऽसि भगवन्नङ्ग मय्यनुकम्पताम् ।
यथाऽयं नाङ्गसंसर्गैः कर्हिचित् परिभूयते ॥ २० ॥

श्रमणोपासकश्रीदलपतिरायविरचितं सिद्धविंशिकास्तोत्रं समाप्तम् ।

# अथ गिरिनारचैत्यपरिपाटीस्तवनम्।

आनन्दकन्दं प्रणिपत्य भक्त्या श्रीनेमिनाथस्य पदारविन्दम् ।
तीर्थेषु विख्यातमहाप्रभावं स्तवीम्यहं श्रीगिरिनारतीर्थम् ॥ १ ॥
यस्मिन् सहस्राम्रवणे नराणां सार्धं सहस्रेण व्रतं प्रपद्य ।
तपांसि भूयांसि चकार नेमिर्वन्दे सदा तं गिरिमुज्जयन्तम् ॥ २ ॥
कर्माणि चत्वारि निहत्य यत्र श्रीयादवाधीश्वरनेमिनाथः ।
ज्ञानं प्रपेदे किल केवलाख्यं वन्दे सदा तं गिरिमुज्जयन्तम् ॥ ३ ॥
त्यक्त्वा पवित्रामपि भोजपुत्रीं यत्रोपयेमे वरसिद्धिकन्याम् ।
शिवातनूजः शिवतातिरत्र वन्दे सदा तं गिरिमुज्जयन्तम् ॥ ४ ॥
जीर्णाख्यकोट्टे यदुपत्यकायां वामेयवीरादिजिनान् भजन्तः ।
लुनन्ति लोका निजपापजालं वन्दे सदा तं गिरिमुज्जयन्तम् ॥ ५ ॥
आरुह्य यं नेमिजिनं नमन्तो भव्या भवाम्भोनिधियानपात्रम् ।
भवन्ति पापेन विमुक्तकाया वन्दे सदा तं गिरिमुज्जयन्तम् ॥ ६ ॥
प्रासादगर्भे शिवताति यत्र निरीक्ष्य नेमीश्वरदेवबिम्बम् ।
कृतार्थमात्मानममंस्त लोको वन्दे सदा तं गिरिमुज्जयन्तम् ॥ ७ ॥
यस्मिन्नपापाख्यमठे प्रभूताश्चिरन्तनीश्च प्रतिमाः प्रणम्य ।
छिन्दन्ति पापानि निजानि लोका वन्दे सदा तं गिरिमुज्जयन्तम् ॥८॥
श्रीमूलदेवालयदेवकुल्यो जिनेन्द्रबिम्बैः परितः परीताः ।
यत्रार्चकेभ्यो ददते प्रसादं वन्दे सदा तं गिरिमुज्जयन्तम् ॥ ९ ॥
सम्मेतकाऽष्टापदतीर्थयुक्तं दृष्ट्वा विहारं वृषभेश्वरस्य ।
स्युर्हर्षभाजो भविकाश्च यत्र वन्दे सदा तं गिरिमुज्जयन्तम् ॥ १० ॥
कल्याणकाख्ये भवने विशाले यस्मिन्नवस्थात्रयरूपधारी ।
शिवातनूजो वितनोति भद्रं वन्दे सदा तं गिरिमुज्जयन्तम् ॥ ११ ॥

मनोहरे खारतरे विहारे महोज्ज्वला वीरजिनस्य मूर्तिः ।
अभ्यर्चिता यत्र हिनस्ति दौस्थ्यं वन्दे सदा तं गिरिमुज्जयन्तम् ॥१२॥
जीरादियल्लीप्रमुपार्श्वनाथं चैत्ये नवीने विमलादिदेवान् ।
दृष्ट्वा जनो यत्र भवेत् पवित्रो वन्दे सदा तं गिरिमुज्जयन्तम् ॥१३॥
गजाधिरूढा मरुदेवमूर्ती राजीमतीश्रीरथनेमिमूर्ती ।
यत्राऽर्चकेभ्यो ददते प्रमोदं वन्दे सदा तं गिरिमुज्जयन्तम् ॥ १४ ॥
यत्राऽम्बिका शासनदेवता तु कपर्दियक्षेण समं समन्तात् ।
सङ्घस्य रक्षां कुरुते नितान्तं वन्दे सदा तं गिरिमुज्जयन्तम् ॥ १५ ॥
गजेन्द्रकुण्डेन्दुगुहा प्रधानावलोकना शाम्बमुखानि यत्र ।
स्थानानि पश्यन्ति जनाः सहर्षं वन्दे सदा तं गिरिमुज्जयन्तम् ॥१६॥
चक्रे नवो नेमिजिनस्तवोऽयं यात्रागतैर्यत्र विशालतीर्थे ।
श्रीकीर्तिरत्नाभिधसूरिराजैर्वन्दे सदा तं गिरिमुज्जयन्तम् ॥ १७ ॥

इत्थं गरिष्ठगिरिनारगिरीन्द्रतीर्थं
स्मृत्वा हृदि स्फुटमदः स्तवनं पठेद् यः ।
यात्राफलं स लभते गृहसंस्थितोऽपि,
प्राप्नोति सिद्धिमचिरादपि सौख्यसाराम् ॥ १८ ॥

इति श्रीगिरिनारपरिपाटीस्तवनम् ।

---

## श्रीकरहेटकपार्श्वजिनस्तवनम् ।

आनन्दमन्दकुमुदाकरपूर्णचन्द्रं
विश्वत्रयीनयनशीतलभावचन्द्रम् ।
उद्दण्डचण्डमहिमा रमया सनाथं
नित्यं नमामि करहेटकपार्श्वनाथम् ॥ १ ॥

नाथ! त्वदीयमुखमण्डलमीक्षमाणो
नाऽयं जनो लवणिमापरपारमेति ।
पोतप्रयत्नचलितोऽपि कदापि किंवा
लङ्घ्यते चरमसागरपुष्करान्तम्? ॥ २ ॥

कान्तं तवेश! नयनद्वितयं विलोक्य
कारुण्यपुण्यपयसा भरितं सरोवत् ।
मल्लोचने हरिणवत्सपले चिराय
सन्तोषपोषमयितां भवदाहृतस्तैः ॥ ३ ॥

कल्पद्रुमो मम गृहाङ्गणमागतोऽद्य
चिन्तामणिः करतले चटितोऽद्य सद्यः ।
अद्याश्रिता मम पदो सुरधेनुरेव
यद्भेटितोऽसि करहेटकपार्श्वदेव! ॥ ४ ॥

सिद्धानि मेऽद्य सकलानि मनोगतानि
पापानि पार्श्वजिन! मे विलयं गतानि ।
याचे न किञ्चिदपरं भवतो गभीरं
ध्यानं तवास्ति यदि मे हृदि मेरुधीरम् ॥ ५ ॥

इति श्रीकरहेटकपार्श्वजिनस्तवनम् ।

श्रीदलपतिरायविरचितं

## प्रभाष्टकम् ।

अनाद्येयं मुक्तिर्ध्रुवमुपगताख्यां पुनरित-
स्ताथाऽप्येषा रिक्ता नहि खलु कदाचित् समभवत् ।

तदेवं दुस्तर्क्यैर्व्यतिकरनिराशाक्षमधिया-
मचिन्त्यस्ते वाचां वहति महिमाऽऽश्वासनविधिम् ॥ १ ॥

वहत्यध्वा मुक्तेरविरतमयं भव्यनिकरा-
नन्तोऽसौ कालस्तदपि न च ते यान्ति विरतिम् ।
तदेवं दुस्तर्क्यैर्व्यतिकरनिरासाक्षमधिया-
मचिन्त्यस्ते वाचां वहति महिमाऽऽश्वासनविधिम् ॥ २ ॥

अवश्यं सेत्स्यन्ति स्फुटमिह हि भव्यास्तदपि भो
अमी सिद्धेभ्यः स्युः खलु यदि कदाऽनन्तगुणिताः ।
तदेवं दुस्तर्क्यैर्व्यतिकरनिरासाक्षमधिया-
मचिन्त्यस्ते वाचां वहति महिमाऽऽश्वासनविधिम् ॥ ३ ॥

अभाज्ये क्षेत्राणौ स्थितिमुपगतः पुद्गलगणः
पृथग्रूपेणाऽऽस्ते न च भजति सङ्घातनिचयम् ।
तदेवं दुस्तर्क्यैर्व्यतिकरनिरासाक्षमधिया-
मचिन्त्यस्ते वाचां वहति महिमाऽऽश्वासनविधिम् ॥ ४ ॥

प्रदेशः स्वस्यैकः स्पृशति खलु दिक्स्थानपि परान्
पृथग्देशैः स्वस्याऽप्यवयवविहीनस्तदपि सः ।
तदेवं दुस्तर्क्यैर्व्यतिकरनिरासाक्षमधिया-
मचिन्त्यस्ते वाचां वहति महिमाऽऽश्वासनविधिम् ॥ ५ ॥

दिगन्तं जीवोऽयं व्रजति समयैकेन घटयन्
नभोऽणून् निःसङ्ख्यास्तदपि च निरांशो हि समयः ।
तदेवं दुस्तर्क्यैर्व्यतिकरनिरासाक्षमधिया-
मचिन्त्यस्ते वाचां वहति महिमाऽऽश्वासनविधिम् ॥ ६ ॥

अणौ शीतादीनां द्वयमिह चतुर्णां निगदितं
कुतः स्कन्धे चाऽष्टौ कथमिह च शब्दाविघटना ।
तदेवं दुस्तर्क्यव्यतिकरनिरासाक्षमधिया-
मचिन्त्यस्ते वाचां वहति महिमाऽऽश्वासनविधिम् ॥ ७ ॥
कृतं पुंसा कर्म प्रभवति कथं तस्य घटना
निरादिः स्याद्वास्तां कथमिह निरादेर्विघटना ।
तदेवं दुस्तर्क्यव्यतिकरनिरासाक्षमधिया-
मचिन्त्यस्ते वाचां वहति महिमाऽऽश्वासनविधिम् ॥ ८ ॥

इति श्रमणोपासकदलपतिरायकृतं प्रश्नाष्टकम् ।

## श्रीमहावीरजिनस्तवनम् ।

कल्याणधामकरणं घनकेवलश्रीराजीवरोचितमनुत्तरतीर्थराजः ।
सत्वालयं प्रगुणराजिनयप्रमाणसच्छासनं पटु नवानतमामनन्तम् १
श्रीवर्द्धमानेह सतां शिवाय रुचायुरिष्यो नवि चाउलाला ।
स आडणीयाक्षरपाटवानां लब्धे त्वयि (?) सेवितथालभाणाम् २
( युग्मम् )
षुडहडीश्च सुराच्यं नवा यमी लघु अषोडन वा यमद्राषदाम् ।
षसषतत्सुरसींघोडां स्यु मः प्रबलखारिक चारोलीनताम् ॥३॥
कः कुली तव मुदाडिमनीहो वीक्ष्य जातिसषजूरति केलाम् ।
सद्रसाकर महानीमजां हो मंडली फलहुली वरसोलान् ॥ ४ ॥
आम्रासातपुडी वरारि मिहुलां पांजांतिमोदां स्फुरत्
माठाम्रामव सिंह केसर भलां त्वाङ्कूरताङ्कसमां ।

यत्राप्नोति सुपांडघीयसगुणा शास्त्रांकुलीनः परे
मांडीना गुरुकीर्ति सैव यशसा सेनो सुहाली ततः ॥ ५ ॥
सारसाकरस आंबिलवाणी जावमांदळ साटोरत्वम् (?) ।
मां त्वसादहिवडीरणभूमि व्याधिभाजिनियथेवरसन्तम् ॥ ६ ॥
आचूरिमाला गुलधीअमिश्री दहींथरा राजससाकुचीर्णा ।
तत्त्वां दया गुंदवडालकंसा कंसारभोच्चै गुललापसीदम् ॥ ७ ॥
किं नारायणमुख्या आंबा केलां सुरासकातलियां ।
मुक्तेः खलु खडबूजा कपूजिता खांडवी अस्तु ॥ ८ ॥
नावेः शालिलुदालितोघृतशुभ त्वं केवडां घारडां
भासालेवड खांडमीलरसवाग् निःप्पापडेभ्यो वडी ।
श्रेयः पूरणकोपलेह भवतो मां चे त्वदाहापरे
रक्षां बीजतरुं घृणैककरणां केलां गरागां दधेः ॥ ९ ॥
नित्यां प्रियां करमदांगिकचंबरिषुभा
पूषाखटी कृतभवैक इरीणदुःकृतः ।
आपत्रवेलितगुणामय लींबुयाघुपा
त्वं निर्भरबाहलिसुचंद्रसु चीभडां स्तुमः ॥ १० ॥
श्रेयःफली त्वमसि वाम्रिकमुंमियाप्रभृत्
आटाबलीशवनिताधवनीलुआर्च्यखः ।
कस्तुरि साय शरणं मम तत्त्व वीक्ष्यतां
जंबीरखां बहुलितोसमभावयत्सलः ॥ ११ ॥
श्रांतींडूरां डोकिकामानसभाषी डोडीमीतेर्मानसे ऊजलीराम् ।
त्वं मथोको टींकडां कां कुळेळां कंकोडायां आम्रकीकाहि रेव! ॥ १२ ॥

काचरीळ्य वचसां गरीन! भो भक्तिमुक्तककालिंगडास्त्वयम् ।
वारकं इरसत्तुंसमाम्रं विधि न समहिति कोहलां स्वतः (!) ॥१३॥

पुण्यानुकूलरिपुगुन्दलजावरीया
श्रंदं सुनेह लहिगटुं खलु काकरीयात् ।
पोलीभ्य ओसडसिते विभवेढमील-
भावात् पय तिलवटी त्वयि भक्तिपूडात् ॥ १४ ॥

मांडा खीरभवो नघीअकरस श्रीखंडला खोवला
माहीं सातवराजसाकर लवे मेली कमो खास्त्रां ।
धाणा हीमनुतूतुषां सदवडा कोरासनारिंगवो
रींफाणासुगिरां कृते कजठभस्ते बाउलीआत् प्रभो !॥१५॥

मुहदूधजभवेसाकर साहहीन जयसं करंबकः ।
कर्पटांगणसणशालघोलइ त्वं च लूनभृदयुक्शलीमुखे ॥ १६ ॥

कांत्यानि जायफलकृत्तम एलचीर
श्रीचन्द्रमौल्यचलविंग वलक्षकीर्तेः ।
श्रीज्ञातज प्रशमपूर्ण तमालपत्र
छाया भवे खयरसार निवृत्तिचेताः ॥ १७ ॥

कस्तूरी कमलालिचन्दनलसत्कर्पूरजैत्रानना-
मोदोघद्रवपानफूलसनरी चांहूलवीडां सदा ।
सोपारीत्वमिति प्रियां रसवतीं कृत्वार्थये त्वां परं
सौहित्यं सुमते विनेयसुकृते श्रीमानतुङ्ग प्रभो ! ॥ १८ ॥

इति श्रीमहावीरस्तवनम् । लिपीकृतं पं० अमीचन्द्रगणिना म०
श्रीराजचन्द्रवाचनकृते ।

# श्रीचन्द्रप्रभजिनस्तवनम् ।

यस्याऽमरा न विदधुर्नतिमङ्घ्रिपीठ-
सङ्घट्टलम्पटललालतटीभृतोऽपि ।
रूपे क्षणक्षणवियोगमहाभयेन
चन्द्रप्रभः प्रभुरसौ तनुताच्छिवं वः ॥ १ ॥

चन्द्राङ्कश्चन्द्रमूर्तिर्वदनजितशरच्चन्द्रमाश्चन्द्रदाता
मत्या कण्ठेऽर्धचन्द्रः स्मरशबरहतावर्धचन्द्रश्च हॅ ।
जातश्चन्द्राननायां पुरि शिवपुरगाचन्द्रकश्चन्द्रकीर्ति-
र्देवश्चन्द्रप्रभोऽव्यात् कलिमलविलये चन्द्रवच्चन्द्रलक्ष्या ॥२॥

दृष्टोऽपि दृष्टजनलोचनचन्द्रकान्ति-
मश्रान्तमान्तरजलाविलमादधानः ।
चन्द्रप्रभो जयतु चन्द्र इवेश! मित्रं
चित्रं पुनः शुभशताय यदष्टमोऽपि ॥ ३ ॥

नाशिक्यनामनि पुरे च सुरेन्द्रवन्द्यः
कुन्त्याः सुतैः सह तया सतताभिवन्द्यः ।
चन्द्रप्रभः प्रभुरसौ शिवसौख्यहेतुः
सञ्जायतां तनुमतां भववार्धिसेतुः ॥ ४ ॥

शशाङ्कलक्ष्मा सकलर्द्धिहेतुर्विभूतिमान् सर्वगदापहारी ।
जिनेश्वरो वः श्रियमातनोतु प्रभासनाथोऽधिकमष्टमूर्तिः ॥ ५ ॥

इति चन्द्रप्रभजिनस्तवनम् ॥

## अथ युगादिजिनस्तवनम् ।

आनन्दद्रुमकन्दलीसुचरितश्रेणीपताकाञ्चलाः
क्षुद्रोपद्रवतान्तिशान्तिकविधिव्यापारवारिच्छटाः ।
ब्रह्मज्ञानमहःस्फुलिङ्गततयः श्रीवल्लरीपल्लवाः
श्रीनाभिप्रभवप्रभुक्रमनखज्योत्स्नाङ्कुराः पान्तु वः ॥ १ ॥

आद्यः सम्प्रति सर्ववेदिषु जितस्त्वेकाङ्कपङ्क्ताविव
स्थानं तद्गुणिनो ददाति हृदये तद्देहिनां सन्ततम् ।
यश्चित्रं किल वृत्तवान् शतगुणां वृद्धिं ददौ सान्वये
स श्रीमान् वृषभः शुभाय जगतां चिन्तामणिश्चिन्तितम् ॥ २ ॥

आद्यो नृपेषु सकृपेषु जिनाधिपेषु
लोकेऽप्यनल्पपरिकल्पितशिल्पमार्गः ।
देवाधिदेवऋषभो वृषभोपयुक्तः
स्वर्णच्छविः सपदि यच्छतु वाञ्छितानि ॥ ३ ॥

अवतु वो धरणीन्द्रफणावलीप्रतिफलद्विमलाकृतिसप्तकः ।
सकलकर्मजयार्थमिवाऽष्टधाकृततनुः प्रथमो जिनपुङ्गवः ॥ ४ ॥

उद्वाहे प्रथमोदरः किल कलाशिल्पादिके यो गुरु-
र्भूपश्च प्रथमो यतिः प्रथमकस्तीर्थङ्करश्चादिमः ।
दाताऽऽद्यः परिपात्रमाद्यमपरं सिद्धो यदम्बादिमः
सच्चक्री प्रथमश्च यस्य तनयः सोऽस्त्वादिनाथः श्रिये ॥५॥

कौ पार्श्वस्थौ वनभुवि युवां सेवकौ नाभिसूनोः ?
किं निःसङ्गः फलतु युवयोः ? गच्छतं गच्छ न त्वम् ।

इत्थं कुड्मलमिवि नमिविनमिकाम्र् उज्ज्वला नागभर्तुः
किञ्चिन्मौनस्मितसवलितं वीक्षितं पातु युष्मान् ॥ ६ ॥

भङ्क्तुं पञ्चाऽऽशु पञ्चाशुगसुभटशरान् पञ्चमुख्यव्रतश्री-
क्रीडासौख्यान्यवाप्तुं सममिव समितीः पञ्च संसेवितुं वा ।
आसीद् यः पञ्चमूर्तिर्नमिविनमिधृतोर्व्यासिधाराचतुष्क-
कोकान्सः कान्तकायः स हरतु दुरितान्यादितीर्थङ्करो वः ॥७॥

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं श्रीनाभिसूनुर्जिनः ॥ ८ ॥

दद्यान्मुदं सर्वसमानबुद्धिर्जगद्गुरुर्नाभिनरेन्द्रसूनुः ।
उपार्जितं ज्ञानमहानिधानं दत्तं कुटुम्बाय विभज्य येन ॥ ९ ॥

धन्या त्वं मरुदेवि! तीर्थकृदयं यस्याः सुतस्त्वीदृशो
निन्द्याः स्मः सुरनायिका अपि वयं यासामपत्यं नहि ।
एवं देहिं यथाऽमृतैर्निजवपुः संश्लिष्य सिञ्चाम इ-
त्यात्तः स्मेरमुखः सुरीभिरभितः श्रीआदिनाथः श्रिये ॥ १० ॥

नव्योद्वाहविधौ वधूद्वययुतं पुत्रं सवित्री रति-
प्रीत्यासन्नमिव स्मरं किल ददौ यं विज्यसत्याशिषम् ।
कल्पद्रुः किल जङ्गमः किमधुना पत्रद्वयेनोद्गत-
स्तात् त्वं स्याः शतशाख इत्यनुदिनं स श्रेयसे नाभिभूः ॥११॥

इति श्रीयुगादिजिनस्तवनम् ।



## द्वात्रिंशद्दलकमलबन्धबन्धुरं[1]
## श्रीमहावीरस्तवनम्।

सम्भ्रमत्रिदशवन्द्यपदं श्रीवर्धमानममलं विजितारम्।
संस्तवीमि भवसागरपारं प्राप्तुमिच्छुरुरुसद्गुणरत्नम्॥ १॥
सद्भिरप्यहतसुरीकृतयत्नं त्वन्मते गततमस्युरुभासि।
संशयावलिहरेऽद्य विलासि स्वान्तमस्तु मम संयमगेह॥ २॥
सङ्गमुक्त! भवदावजदाहं त्वं पयोधररव! त्रिशलासू-।
संभवं तमदिताङ्गिमनःसूदात्तधीरिममनोगजवारी॥ ३॥
सन्ततं जिन! भवानघहारी यैरसेव्यततरां गततन्द्रम्।
सस्पृहं श्रयति तान्नृसुरेन्द्रश्रीर्मनोहररसापि दुरापा॥ ४॥
सङ्गतं गमशतैर्गुरुपापापोहकं जिन! नयद्रुमकन्दः।
सम्मदाय नहि कस्य तवाऽदस्सद्वचोऽमितमोभरदीपः॥ ५॥
सञ्चितं गुणगणैर्भवतापच्छेदि तेऽद्भुततमं पदपद्मम्।
संसृजन्ति भविकाः श्रितपद्मं स्वेऽमले हृदि दितारतिकामम्॥ ६॥
सङ्कटेऽपि पतितास्तव नामध्यानमग्नजजलातप! येऽधुः।
संपदं त इह यान्ति सुसाधुश्रेणिसेवित! तपस्ततितीव्र!॥ ७॥
सज्जनाम्बुजविबोधकृति भ्रान्तोपमो जननीरधितोऽवः।
संसदां दिविषदां नत! तातः पाहि मां शममयस्त्वमनीच!॥ ८॥
सम्यगूर्ध्वभुवने मरुतोऽगात् पञ्चमस्वररवैः सुसुरीकाः।
संजगुर्गुरु यशस्तव राकाचन्द्रमण्डलसद्गुणधारो!॥ ९॥

---

१ इतःप्रभृति सरसहृदयंगमाः प्रत्येकं श्लोकोद्धारपूर्वकाः कमलबन्धाद्याकृतयः सन्ति परमन्तरान्तरा तत्र तत्रायसाक्षरमुद्रणालयेऽङ्कयितुमशक्यत्वात् ग्रन्थावसाने सस्फुटनिर्देशं ताः सम्यक्तया शिलामुद्रणेनोद्धरिष्यन्ते।

संपरायरिपुभिः सह मारो वर्धतेऽमद! दधन्मयि नोदम् ।
स त्वयाऽवगणितः किमकन्द(?)काञ्चनच्छविविभूषितकाय! १०
संसृतिं भयकरीमपहाय स्फीतिनिर्मल! लभंस्तव बोधम् ।
शर्म नैर्वृतममन्दमबाधं यामि नायक! कदाहमकर्मा ॥ ११ ॥
सङ्गरे श्रियममी अरिमर्मोविच्छरोत्कररयेऽप्युपयेमुः ।
संस्मृतस्त्वमसि यैर्भवितामुदामकामिततरुः शुभ! शस्त!॥१२॥
सङ्गमाभरकुदर्पदवास्तप्रावृडम्बुद! दयापर! देव! ।
संप्रति स्फुरति ते महिमावच्छासनं भुवि विभो! सविवेकम्१३
सत्पथप्रथनसार्थपतिं कस्त्वां जिनेश! न नमत्यपकाम! ।
सत्कलाकुवलयामृतधामन्नद्भुता विधिधियं दमशाल! ॥ १४ ॥
सर्वथा भयकरः कलिकालस्तावदङ्गिनि निबद्धविटम्बः ।
संश्रितौ तव पदौ नहि यावद् वासवायुधधरौ रिपुयोध!॥१५॥
सर्वदापि भगवन्नघबन्धं प्रार्थयाम्यसमनो बहिरङ्गम् ।
सन्निधौ निजपदोरितरागं मां विधेहि शशभृद्वदनश्री! ॥ १६ ॥

श्रीरत्नसिंहसूरीन्द्रपादपद्ममधुव्रतः ।
चकारोदयधर्मोऽमुं स्तवं कमलबन्धगम् ॥ १७ ॥

परिधिश्लोकः—

श्रीसिद्धार्थनरेशनन्दन! जिन! श्रीवीर! नीरुक्तनो!
स्तुत्वा त्वां नयनाग्नि(३२)सम्मितदलाम्भोजन्मबन्धस्तवात् ।
नेहे चक्रिपदं न वासवपदं नाऽऽस्तापदं संपदं
किन्तु त्वत्पदपङ्कयोर्नियमले भृङ्गायतां मे मनः ॥ १८ ॥

इति श्रीमहावीरस्तवनं द्वात्रिंशत्पत्रबन्धकमलगं परिधिगतगुरुनामकवि-
नामकाम्यनामगर्भम् उपाध्यायश्रीउदयधर्मकृतं मन्त्रिकृपालि-
खितम् उदयसोममुनिपठनार्थमलेखि ॥

श्रीः ।

षोडशदलकमलबन्धबन्धुरा

# श्रीजिनस्तवन-चतुर्विंशतिका।

रचयिता-तपागच्छगगनाङ्गणदिनमणि-श्रीमदकब्बरबादशाह-
प्रतिबोधक-जगद्गुरुश्रीहीरविजयसूरीश्वरशासनान्तर्वर्ति-
मुनिवर्य-श्रीमदमरविजय-शिष्यावतंस-मुनिमतल्लिक-
श्रीकमलविजयमुनिशिष्यः श्रीविजयप्रशस्तिकथा-
रत्नाकर-कस्तूरिप्रकरणादिप्रणेता विद्व-
च्छिरोरत्नं श्रीहेमविजयो मुनिः ।

## षोडशदलकमलबन्धबन्धुरं श्रीयुगादिजिनस्तवनम् ॥ १ ॥

पयोजपाणिं वृषभं वृषाङ्कं रमातनूजन्मभिदावृषाङ्कम् ।
महोदयश्रीरजनीमृगाङ्कं गुरुं स्तुवे कीर्तिनिरस्तराकम् ॥ १ ॥
रुचिं दधानं परमामितांकं श्रीर्मङ्गलैस्तं समुपैति साकम् ।
हीलाप्रहीणं श्रितपुण्यपाकं ररक्ष यस्त्वां हृदि बुद्धलोकम् ॥२॥
विद्याऽनवद्या तमुपैत्यशोकं जलेशयश्रीजितशाल्यशोकम् ।
यस्त्वां स्मरेत् पीडितकामघूकं सूरप्रभं हर्षितसाधुकोकम् ॥ ३ ॥
रिपुव्रजाक्रान्तममुं वराकं पुंनाग! पुंनागनुतिष्वमूकम् ।
गभीरसंसारजलैकभेकं वाग्वर्य! नाभेय! पुनीप्रशोकम् ॥ ४ ॥

---

१ रमा-लक्ष्मीस्तस्याः तनूजन्मा मदनस्तस्य भेदने शङ्कर इव शङ्करः। २ इतं-गतं अकं दुःखं यस्य यस्माद्वा स तम्। ३ कृष्णशोभाजितमनोहरकंकेलिवृक्षमन्तम्। ४ हे नरश्रेष्ठ। ५ कल्पवृक्षस्तुतिकारिणम्।

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः।
कमलविजयसङ्ख्यावद्भिर्नेयाणुरेणी
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः॥ ५॥

इति श्रीयुगादिजिनस्तवनम्।

## श्रीअजितजिनस्तवनम् ॥ २॥



मुखश्रिया तर्जितरात्रिकान्तं निरन्तरायं जिनराजिकान्तम्।
नाथे जिनं मुक्तिरमामकान्तं यमाश्रयं मुक्तसमस्तकान्तम्॥ १॥
कम्राकृतिं नाथमहं महान्तं श्रीमन्तमीडे जितशत्रुजातम्।
विश्वैः परीतं जितशत्रुजातं जयन्तमप्युद्धतचित्तजातम्॥ २॥
यस्य क्रमद्वन्द्वमिभो नृनूतं सेव्यं सुरैराश्रयति स्म शान्तम्।
नत्वा तमानन्दरमानिशान्तं सुपात्तसौख्यं विदधे निशान्तम्॥ ३॥
रिरंसया मुक्तमिमं वहन्तं प्रभुत्वमत्यद्भुतमार्तिवान्तम्।
वशाभिरक्षुब्धमुपैति दान्तं रैः स्वत्विषा येन जितो नितान्तम्॥४॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः।

---

१ चन्द्रम्। २ जिनाः सामान्यकेवलिनस्तेषां राज्या पङ्क्त्या कान्तं-मनोहरम्, अथवा जिनराज्याः कान्तं-पतिम्। ३ जिनं मुक्तिलक्ष्मीं नाथे। ४ अकस्य-दुःखस्य अन्तो यस्य यस्माद्वा तम्। ५ जितशत्रुपुत्रम्। ६ जितं, शत्रुजातं वैरि-समूहो येन स तम्। ७ निशाया अन्तं निशान्तम्। ८ योषाभिः। ९ सुवर्णम्।

कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीअजितजिनस्तवनम् ।

## श्रीसम्भवजिनस्तवनम् ॥ २ ॥

श्रीसम्भवः[1] सम्भवतीर्थनेता विराजतेऽसौ मदनैकजेता ।
जयावहं[2] शस्तमसूत माता येकं जितारिक्षितिकान्तकान्ता ॥ १ ॥
दामार्चितः स्वर्णधनप्रदाता नयैरभाद् यः समताविधाता ।
गतिं स शैवीं[3] भुवनैकपाताऽच्छार्यास्पदं[4] यच्छतु धीजनेता ॥ २ ॥
धिनोतु युष्मान् गुणवृक्षजातारामः स सत्पूर्वपथानुयाता[5] ।
जगन्मता नीतिसुता[6]ऽविपूता पापापहा येन जने प्रसूता ॥ ३ ॥
शौर्जन्यपर्जन्यसमीरपाता भवन्मतिः कस्य समस्तसाता ।
जाता न सैनेय[7]! सदाऽभिभूताऽमितारिरुद्भूतवसन्तसूता ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीसम्भवजिनस्तवनम् ।

१ श्रियः सम्भवो यस्मात् सः । २ यम् । ३ शिवं–मोक्षस्तत्सम्बन्धिनीम् । ४ न च्छाया देहो येषां तेऽच्छायाः सिद्धास्तेषां आस्पदं स्थानम् । ५ सन्मार्गगमनकरः । ६ नीतिरूपा पुत्री । ७ सेनाया अपत्यं सैनेयस्तस्य सम्बोधनम् ।

## श्रीअभिनन्दनजिनस्तवनम् ॥ ४ ॥

श्रीसंवरक्षोणिपतेः सुताय मताय लोकप्रकरैर्नताय ।
दारेष्वसक्ताय नमोऽस्त्वकाय नन्दाहराय क्षितकोपकाय ॥ १ ॥
दमित्रजाम्भोजरवे! स्वकायविभाजितस्वर्ण! निरस्तमाय! ।
महाम्यहं त्वां प्रमदं विधाय लसन्मतिं सत्पथभागुपाय ॥ २ ॥
गरीयसे पापनिवारणाय च्छलैकभूजन्मनिवारणाय ।
राज्ञे मुनीनां धुतिकारणाय जन्युप्रियाय प्रणतोऽस्मयाय ॥ ३ ॥
ऋतुव्रतव्रातनत! त्रिसायमानन्दिनं त्वां कपटं विहाय ।
वीतारिमक्ष्णामि मनोहराय हेलाब्जहेले! जिनराट् सदाय ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीअभिनन्दनजिनस्तवनम् ।

## श्रीसुमतिजिनस्तवनम् ॥ ५ ॥

नमन्नराधीशनिषेव्यपादं मोहैकपाथोरुहशीतपादम् ।
स्तुवे कलाकोककठोरपादं धीरं जिनं त्यक्तपरापवादम् ॥ १ ॥

---

१ मोहपद्मविकासहरणे चन्द्रम् । २ कला एव कोकश्चक्रवाकस्तस्यानन्द-दाने कठोरपादः—सूर्यस्तम् ।

मदैर्विमुक्तं जलवाहनादं तेजस्विनं मेघसुतं रमादम् ।
हेमच्छविं क्लृप्तजगत्प्रसादं मनोजदर्पोद्दलनैकपादम् ॥ २ ॥
विमुच्य यो दत्तमहाविषादं मतं भजेत् तीर्थपतिं सुसादम् ।
लभेदसौ नष्टसमस्तखेदं यशो विधूतान्तरवैरिभेदम् ॥ ३ ॥
तिरस्कृतोन्मादमसादकन्दं राजास्यमीडे सुकृतेष्वमन्दम् ।
जात्युल्लसद्दन्तमशेषभन्दं य आप्तवानादृतमुक्तिनन्दम् ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीसुमतिजिनस्तवनम् ।

## श्रीपद्मप्रभजिनस्तवनम् ॥ ६ ॥

नवीमि सत्त्वान्तसरोसरालं मोक्षप्रदं कोपरसादरालम् ।
यत्नेन लावण्यगुणाकरालं मिथ्यामतोत्तुङ्गतरावरालम् ॥ १ ॥
पुरोगमानन्दसुखेन्दिरालं रम्भाभरैर्गीतमिमं धरालम् ।
दधौ सुखं वीक्ष्य गतस्मरालं रतिर्न भेत्तुं यमभूदरालम् ॥ २ ॥
सुरेश्वरन्यस्तसरोजमालं महे जिनं यः प्रणताङ्घ्रिमालम् ।
तिरोदधुस्तद्विपदोऽनुकालं स्नातं पुनः प्रादुरभूदकालम् ॥ ३ ॥

---

१ जलधरगम्भीरघोषम् । २ मेघभूपालपुत्रम् । ३ मदनमदभेदने एकपादं–शङ्करम् । ४ न सादो विषण्णता इति असाद आनन्द इत्यर्थस्तस्य कन्दम् । ५ राजा चन्द्रस्तस्य इव आस्यं मुखं यस्य स तम् ।

धुन्वन् भयं शर्मविभवबालं सूते स यत्स्वान्तमयैकबालम् ।
रसैर्नता देवमिमं शुभालं ये कायकृन्नुमनवप्रवालम् ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीपद्मप्रभजिनस्तवनम् ।

---

## श्रीसुपार्श्वजिनस्तवनम् ॥ ७ ॥



सेतुं भवाब्धौ गुणरत्नधाम! वाचंयमाम्भोजसहस्रधाम! ।
मनस्यहं त्वां प्रवहामि वामहेलं सुपार्श्व! क्षितकोपकाम! ॥ १ ॥
लब्धोदयाङ्गीकृतमुक्तिपद्मक्ष्मीदक्षमापालनताङ्घ्रिपद्म! ।
साधुप्रभो! पाहि शमाभिराम! गर्वैककोकामृतधामधाम! ॥ २ ॥
रतीशसारङ्गमृगेन्द्रभीमं गुर्वर्तिसंसारमखैकभीमम् ।
रुचिं दधानं वरभावमाममभिषक्! शुभं मां कुरु देव! नाम ॥ ३ ॥
क्षुद्रेतरस्वान्त! निरस्तभाम! कुन्दाभकीर्ते! भवभूतिराम! ।
जयाय नो देव! विमुक्तराम! रङ्गद्गुणग्राम! मनोज्ञयाम! ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीसुपार्श्वजिनस्तवनम् ।

## श्रीचन्द्रप्रभजिनस्तवनम् ॥ ८ ॥

भक्त्या शशाङ्कध्वज! वैरिवारजेतः! शशाङ्कोपमकीर्तिभार! ।
हंसेन्दुकुन्दद्युतिनेमि मारश्रीकण्ठ! चन्द्रप्रभ! निर्जितार! ॥ १ ॥
मन्देतरप्रज्ञ! रुषाविकारतन्द्रानिहन्तः! शममग्न! तार! ।
रसेन्द्रविस्फूर्तिकृतावतार! नमाम्यहं त्वां कृतरुक्निकार! ॥ २ ॥
शेषाहिमूर्तेर्विजयं सुसारखनेः सितं यस्य यशश्चकार ।
रमाभिरन्यः किमु तेऽर्तिपूरसूतात्मजैन्द्रेऽत्र तुलां बभार ॥ ३ ॥
रीतिस्थितिः संसृतिमाधिनीरशर्कि स सौख्येन नरस्ततार ।
पाथोजपाणेस्तव योऽतिसारदन्तस्य नुत्यां प्रमदं दधार ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीचन्द्रप्रभजिनस्तवनम् ।

---

## श्रीसुविधिजिनस्तवनम् ॥ ९ ॥

भयत्रियामादिनकृत्समान! जातोदय! श्रीसुविधे! समान! ।
महोभरैर्निर्जितचन्द्रमान! हेतुः श्रियां नो भव निर्निदान! ॥ १ ॥
भवत्यरं यो मनुजोऽभिमानगजे गजारे! प्रणतिं ततान ।
वन्द्यो नरैर्दुःखतरुं क्रिगानतन्द्रोज्झितः किं न स उच्चखान? ॥ २ ॥
श्रीमन्नशेषव्रतिषु प्रधान! मुक्तिप्रियाकान्त! गुणासमान! ।
निःकाम! सेवामि सुपर्णयानसुन्दर्यपत्योदलनोक्षयान! ॥ ३ ॥

दस्यूनशेषानभयप्रदानरतिः स किं नैव जनो जघान ? ।
गुर्वी त्वदाज्ञां करुणानिदानरुचिं सदा यः प्रणयान्ममान ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीसुविधिजिनस्तवनम् ।

---

## श्रीशीतलजिनस्तवनम् ॥ १० ॥

---

सोऽपास्तमोहप्रमदाप्रमादमदोऽत्र नान्देयं ! शमासमाद ।
सुन्दर्यसक्तस्य तवाऽस्तसावद्यस्य यो नाथ ! नुतिं जगाद ॥ १ ॥
रदत्विषा तर्जितचारुकुन्दमुदीक्ष्य यस्त्वां मनुजो मुमोद ।
निलोठितारिः सकलां मुकुन्दरामामवाप्याऽपि स नो ममाद ॥ २ ॥
जाग्रन्मतिः सोऽत्र रमाविनोदयतो न किं वैरिगणं मुनोद ? ।
नत्यर्हमर्हन्तमुरुप्रमोदमानं मुदा त्वां जिन ! यो विवेद ॥ ३ ॥
मिथ्यामतानि प्रगलन्मरन्दसुमार्चिताङ्गः स न किं तुतोद ? ।
मुमुक्षुराट् ते स्थितिमङ्गिवृन्ददाहाम्बु यः सत्यतमामुवाद ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीशीतलजिनस्तवनम् ।

---

१ कुन्दायाः अपत्यं नान्देयस्तस्य सम्बोधनम् । २ सुखम् ।

## श्रीश्रेयांसजिनस्तवनम् ॥ ११ ॥

भूयिष्ठतुष्टिं प्रगुणप्रभावग्रामं मुदा त्वां जिन! यो नुनाव ।
दक्षेषु मुख्यः सरलस्वभाव? सौभाग्यवान् सोऽघवनं लुलाव ॥ १ ॥
श्रेयांस! तीर्थाधिपते! सुभाव! यशोनिधे! मां विलसद्विभाव! ।
सेवां विधातुं तव सर्वदेवकुलं द्रुतं देवगृहाद् दधाव ॥ २ ॥
लब्धोदयं संसृतिसिन्धुनावमङ्गी विभो! त्वां खलु यश्चुकाव ।
उरम्यतुण्डः शिवभीरुहावनद्धः स कर्माणि न किं जुहाव? ॥ ३ ॥
सादैकदन्तावलसिंहशाव! भूतासुहृद्वृन्द! गभीरराव! ।
परद्युते! पालितसर्वजीव! तिरोहितांहो जिनराज! जीव ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति श्रीश्रेयांसजिनस्तवनम् ।

## श्रीवासुपूज्यजिनस्तवनम् ॥ १२ ॥

ज्ञानोदकन्दोद्गमवारिवाहं नमाम्यहं मुक्तजनप्रवाहम् ।
साराशयं मुक्तिपथैकवाहं गदान्धकारोत्करसप्तवाहम् ॥ १ ॥
रक्षामि रोगाम्बुदगन्धवाहं संक्रान्तमुक्तिस्मितदृग्विवाहम् ।
यमाप्य सद्यस्कमभस्तिदेहं मिषं जहू रुद्धगुणालिगेहम् ॥ २ ॥
विश्वं तमुत्तालकलासमूहं भुम्रेतरं रम्यमनन्तमूहम् ।
पदं श्रियामञ्चति राजदीहं ददर्श यस्त्वांदितमोहदाहम् ॥ ३ ॥

मतं भवन्तं त्रिजगत्तमोहं हंसाभकीर्ते! गतमानमोहम् ।
स्तुवे सराम्भोरुहशुभ्रवाहं वेगेन चिद्धीधवधुर्यवाहम् ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति वासुपूज्यजिनस्तवनम् ।

## श्रीविमलजिनस्तवनम् ॥ १२ ॥

श्रीमल्लसज्ज्ञान कलाकुनाभे देहि श्रियं देव! गभीरनाभे ।
वक्त्राननिर्धूतकुरङ्गनाभे सुमत्पितः स्वीकृतधर्मनाभे ॥ १ ॥
दद्याः सुखं मे विमलाप्तनाभे रम्यस्ववंशद्युतिमत्सनाभे ।
गुप्तेन्द्रिये दुःखमहावनेभे रुषाऽन्तमाप्ते त्वयि नाथ! लेभे ॥ २ ॥
नाथाऽङ्गभातर्जितशातकुम्भे मदीयहृत् स्तात् त्वयि शातकुम्भे ।
मन्दोऽभवस्त्वं कृतभूरिदम्भे त्रस्तैणनेत्रानिकरे सरम्भे ॥ ३ ॥
राजेत जङ्घायुगतुङ्गरम्भे जन्योस्त्वयि प्रेम शिवैकलम्भे ।
मीनध्वजाभे किमिताः सलाभे हेलाः श्रियां तत्र न मञ्जुलाभे ॥४॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसंख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति विमलजिनस्तवनम् ।

## श्रीअनन्तजिनस्तवनम् ॥ १४ ॥

स्मयोद्धुरक्ष्माधरवज्रपाणे! रामाकटाक्षक्रतुशूलपाणे!।
मिथ्यादृगालीबलिचक्रपाणे! सोपायमत्यै भव पद्मपाणे! ॥ १ ॥
मदासुहृत्संहृतिदण्डपाणे! ऽतिशायिपद्मोदधिपाशपाणे!।
लक्ष्मीं प्रयच्छाऽन्वयपद्मपाणे! कर्मव्यथातारकशक्तिपाणे! ॥ २ ॥
मुमुक्षुमार्गद्रुमसेकपाणे! निःसंशयानन्तसुधाभवाणे!।
महान् कुरु प्रीणितरम्यवाणे! हे नेतरङ्गीकृतमानवाणे ॥ ३ ॥
शस्ते त्वयि क्लेशलताकृपाणे वर्तेत हृद्यस्य लसत्प्रमाणे।
दधौ स्थितिं श्रीजितपञ्चबाणे नन्दात्र शीलोत्तमवारबाणे ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति अनन्तजिनस्तवनम्।

## श्रीधर्मजिनस्तवनम् ॥ १५ ॥

भव्याशयो यः खलु शस्ततोषजनिः स्तवैस्त्वां पुरुषस्तुतोष।
तमिन्दिरा विश्वकुवेलपोषसोमं स्वदृग्विभ्रमकैः पुपोष ॥ १ ॥
मतं त्वदीयं घनपापदोषप्रभुः प्रभो! यः पुरुषो दुदोष।
भद्राणि तस्याऽऽशु शमाप्तिमोषमुखः स्मरस्तेनवरो मुमोष ॥ २ ॥
नीरागराजे खलु दुष्टदोषशक्तस्त्वयीशे जिन! यो रुरोष।
वर्योऽपि हि प्रोज्झितपापशोषमुखा द्रुतं तस्य मतिः शुशोष ॥ ३ ॥

महाशयं चित्कुसुमप्रवेष ! [illegible] ! [illegible] जुजोष ।
राजाननं तं कलकण्ठघोष-[illegible] वरस्या जुघोष ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनाम्ना-
ऽध्वरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यानद्रिनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति धर्मजिनस्तवनम् ।

---

## श्रीशान्तिजिनस्तवनम् ॥ १६ ॥

---

विधेहि शान्ते ! श्रितरम्यरङ्गनरैर्नताङ्ग ! कृतपापभङ्ग ! ।
महान्ति शर्माणि रुजान्तरङ्गततौ भवाब्धौ ततनौ सदङ्ग ! ॥ १ ॥
धत्से विभो ! त्वं महतामनङ्गमतङ्गजेभारिरपास्तसङ्ग ! ।
गोरेतरस्वान्तकजेषु चङ्गषडङ्घ्रितां कोपकुमुत्पतङ्ग ! ॥ २ ॥
सानन्दमूर्ते ! त्वयि सत्कुरङ्ग ध्वजे विभो ! यस्य मनो ररङ्ग ।
वसन्तसूतैकमरुद्रुजङ्ग ! तं मोक्षलक्ष्मीर्वृणुतेऽरमङ्ग ॥ ३ ॥
समस्तसौभाग्यरमानिषङ्ग ! चक्रित्वशक्त्या कृतवैरिभङ्ग ! ।
लब्धोऽसि येन श्रितपुण्यलिङ्गं तन्दाङ्गना तं न किमालिलिङ्ग ? ॥४॥

इति मुदितमनस्को मूर्धगाचार्यनाम्ना-
ऽध्वरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यानद्रिनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति शान्तिजिनस्तवनम् ।

## श्रीकुन्थुजिनस्तवनम् ॥ १७ ॥

देहत्विषा निर्जितसत्सुवर्ण! वेणूत्तमैः [illegible] ।
श्रवाश्रयं त्वां प्रणमाम्यवर्ण मुक्त्यैकसूत्रार सुवारवर्ण! ॥ १ ॥
निःशेषपापानिलभुक्सुपर्ण! पुनीहि हन्नुन्नपयोजपर्ण! ।
रक्षेव राज्ञो दुरितालिकर्ण दल्मि प्रजप्रीणितविश्वकर्ण! ॥ २ ॥
रक्षैकदक्षं भुवनासवर्णमुन्मार्गमूकच्युतिसत्सवर्ण! ।
खरेतरं कुन्थुविभो! सुवर्णमहं स्तुवे प्रीतसमस्तवर्ण! ॥ ३ ॥
नुताङ्घ्रिरार्यैरमनोज्ञवर्ण स्मयः कषायाशुगनेत्रकर्ष ।
राजेव विश्वान्यव देव! तूर्णमिताघतापाद् गुणरत्नपूर्ण ॥ ४ ॥

इति मुदितमवस्कोमूर्धगाचार्यनाम्ना-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणो
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति कुन्थुजिनस्तवनम् ।

## श्रीअरजिनस्तवनम् ॥ १८ ॥

स्तुवे विभो! त्वां जगदेकभानो! तथ्याध्वपाथोनिधिशीतभानो! ।
श्रियां पदं रुक्शयनैकभानो! तनुत्विषा जुन्नहिरण्यभानो! ॥ १ ॥
तनोति यस्ते जिन! शस्तमानोपास्तिं स्थिरत्वैकसुमेरुसानो! ।
विभो! त्वदीये हृदि दत्तदानोऽरुचस्त्वमब्जेऽलिरिवाप्तचेनो ॥ २ ॥
दद्याः सुरीभिः कृतकीर्तिगानो जनस्य देवीमहिषीसुसूनो! ।
गर्वोज्झितः सर्वगुणैरनूनोऽवस्थानसागाढनिगूढजानो! ॥ ३ ॥

द्रव्यप्रकाशं सुखकामधेनो! सुवे स यः कर्मसमिद्धशानो ।।
रीतिं स दिश्याज्जगदर्च्यमानो शक्त्यां स यानो वसुदेवसूनो! ॥४॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ।

इति अरजिनस्तवनम् ।

## श्रीमल्लिजिनस्तवनम् ॥ १९ ॥

श्रीकुम्भभूपालकुलावतंसं धन्याशयं विश्वकृतप्रशंसम् ।
महामुनिस्वान्तसरोजहंसं सानन्दमीडे जिनमिद्धशंसम् ॥ १ ॥
गच्छेज्जिन! त्वामलिनीलभासं रसेन यो हृत्कजधर्मभासम् ।
वाग्भिर्जगुस्तं मरुतां पुमांसं चलेक्षणाः शस्तयशोनिवासम् ॥ २ ॥
कर्मोपहं स्वे हृदि राजहंसं चकार यस्त्वां भुवनैकहंसम् ।
क्रमस्थितं धर्मरमारिरंसं शिवावली तं समुपैत्यहिंसम् ॥ ३ ॥
रोचिष्णवस्तावकपङ्क्तिनंसं लाभाः स्ववाग्विष्णुहताघकंसम् ।
कार्यक्षमायान्ति तमाप्तशंसं रामं जगौ त्वां नतमर्त्यहंसम् ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति मल्लिजिनस्तवनम् ।

## श्रीमुनिसुव्रतजिनस्तवनम् ॥ २० ॥

श्रीसुव्रत! भ्राजिगुणालिभाजमहं स्तुवे त्वां नतदेवराज! ।
दयानिधिं रक्षित देहभाजमनङ्गसारङ्गकुरङ्गराजम् ॥ १ ॥
रक्तो भवेद् यः सुरमर्त्यराजविद्याधरैर्वीक्ष्य मुखास्तराज! ।
जनः क्रमे ते प्रणमभ्रराज! यतीश! नैवाऽत्र स किं रराज? ॥२॥
विधेहि सद्वस्त्ववबोधवीजबुद्धिं नताशेषमरुत्समाज! ।
धन्याङ्गनामुक्तमनोज्ञलाज परंपरः सुव्रत निर्मलाज! ॥ ३ ॥
दम्भाभिमानस्मरभीमुराज! नवीनपाथोधरमन्द्रवाज! ।
मान्यं स्तुवे त्वां भवतापलाजमितामयं निर्जितधर्मराज! ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति मुनिसुव्रतजिनस्तवनम् ।

## श्रीनमिजिनस्तवनम् ॥ २१ ॥

शालिव्रताम्भोरुहवासरेशं सर्वाङ्गिचेतःकु वशर्वरीशम् ।
नवीमि देवं प्रणमत्सुरेशं नाथं भवोर्वीरुहकुञ्जरेशम् ॥ १ ॥
यस्त्वां स्मरेत् पापमुरेन्दिरेशं करोति चित्ते प्रणमन्नरेशम् ।
श्रीरेति शीघ्रं स्थितिबन्धुरेशं मनोज्ञमेधामणिपुष्करेशम् ॥ २ ॥
हार्यङ्घ्रिणा पावितसर्वदेशं वीतस्मयं सद्गुणसन्निवेशम् ।
रम्यं स्तुवे त्वां जिन! सन्निदेशं स्वाधीनतानीतसुखप्रवेशम् ॥ ३ ॥

मित्रेषु मुख्यं भयजीवितेशं नेतः! शिवश्रीवरजीवितेशम् ।
नमे! स्मरेद् यो गुणवत्सदेशं मही महेत् तं गुणराजिवेशम् ॥४॥
इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥
इति नमिजिनस्तवनम् ।

---

## श्रीअरिष्टनेमिजिनस्तवनम् ॥ २२ ॥

पङ्क्तिर्नराणां त्वयि पञ्चरोपचर्चापदे या स्वदृशं करोप ।
महीतले कोऽपि परास्तकोप! गतो न तस्यां पुरुषश्रुकोप ॥ १ ॥
छलैकदृग् मन्मथकंशगोपपते! जगद् गोनिकरैकगोप! ।
तिरस्कृतारिर्जितसर्वगोप! श्रीमन् भवानेव यदून् जुगोप ॥ २ ॥
सुरावलीसेव्य! दिताघरोप! धन्यं जिनं त्वां कृतपापलोप! ।
महेन्महान्तं दुरितं न कोपपत्तिस्थितिर्नेमिविभो! लुलोप ॥ ३ ॥
स्न्ता स एव प्रणयीह गोपपत्तिप्रियायां स्वमघं जुगोप ।
रागात् त्वया प्रैक्षि पुमानरोपसौभाग्यसौजन्यनिधानगोप! ॥ ४ ॥
इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसंख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥
इति अरिष्टनेमिजिनस्तवनम् ।

## श्रीपार्श्वजिनस्तवनम् ॥ २३ ॥

पङ्केरुहास्याय गुणालिधारिणेऽडिताय कन्दर्पमदापहारिणे ।
तनूकृताखर्वसगर्ववैरिणे श्रीसूनुरूपोपमरूपधारिणे ॥ १ ॥
कलाकलापक्षितिजन्मवारिणे मत्तद्विपाधीश्वरचारुचारिणे ।
लक्ष्मस्मयारातिबलैकदारिणे विज्ञातविज्ञाशयहर्षकारिणे ॥ २ ॥
जगत्तनूमन्निकरोपकारिणे यशस्विने पूतपथानुसारिणे ।
गुणाभिरामव्रतिवृन्दहारिणे रसेशवन्द्याय लसद्विचारिणे ॥ ३ ॥
वेग्यक्षवाहालिमहानुहारिणे नमामि पार्श्वाय कुवादिवारिणे ।
मोहक्षमापालकुलप्रहारिणे स्तुताय लोकैः सतता विकारिणे ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति पार्श्वजिनस्तवनम् ।

## श्रीशासनाधीशवर्द्धमानजिनस्तवनम् ॥ २४ ॥



श्रीत्रैशलेय! श्रितशुद्धजापकलो भवन्तं जिन! यो जजाप ।
महामतिं रोपितसर्वशापलतो न वक्रोऽपि नरः शशाप ॥ १ ॥
विलासकृद् यस्य मनस्यपापजनिर्भवान् स्वीयवचांस्युवाप ।
यतिप्रियः स क्षितविश्वतापशिलं वचः शीततमं ललाप ॥ २ ॥

शुभा भवदृष्टिरिलानुतापहेला जनं यं भगवन्नवाप ।
मत्ताशयः कोऽपि नहि प्रलापविपत्तिपत्तिस्तमरिस्तताप ॥ ३ ॥
जज्ञे भवान् वीर! लसत्कलाप! यस्याशये प्रीणितसत्कलाप! ।
कृत्येष्वनैषीद् भवदीयलापतिग्मद्युतिस्तं प्रणताचलाप! ॥ ४ ॥

इति मुदितमनस्को मूर्धगाचार्यनामा-
ऽक्षरकमलनिबन्धैर्बन्धुरैः संस्तुतो यः ।
कमलविजयसङ्ख्यावद्विनेयाणुरेणौ
स भवतु मयि देवो दत्तदृष्टिः सतुष्टिः ॥ ५ ॥

इति शासनाधीशवर्धमानजिनस्तवनम् ।




॥ श्रीअजितनाथजिनस्तवनम् द्वितीयं कमलम् २.
मुनिनायक श्रीविजयसेनसूरिप्रवराः इति कमल शिरःस्थ सर्वप्रथम वर्णग्रहणेन निष्पन्नं गुरुनाम.
तम्
१६


॥ श्रीसम्भवस्वामिस्तवनम्
तृतीयं कमलम् ३.
ता
१६
श्रीविजयदानगच्छाधिपतिपादौ भजामि. इति कमलशिरःस्थसर्वप्रथमवर्णग्रहणेन निष्पन्नं मुनिनाम.


॥श्रीसुमतिजिनस्तवनम्. पञ्चमं कमलम् ५
दम्
१६
नमोऽस्तु श्रीमते हेमविमल यतिराजाय
इति कमल शिरःस्थ सर्व प्रथम वर्णैर्मूलकेन निष्पन्नं गुरुनाम.


॥ श्रीपद्मप्रभजिनस्तवनम्. षष्ठं कमलम् ६.॥
लम्
१८
नमोयमिपुरन्दर सुमतिसाधु सूरये.
इति कमल शिरःस्थ सर्वप्रथमवर्णग्रहणेन निष्पन्नं गुरुनाम.


॥ श्रीचन्द्रप्रभजिनस्तवनम् अष्टमं कमलम् ८ ॥
श्रीमन्तं रत्नशेखरसूरीशपादं भजेऽहं
इतिकमल शिरःस्थसर्वप्रथमवर्णग्रहणेन निष्पन्नगुरुनाम



॥ श्रीसुविधिजिनस्तवनम् नवमं कमलम् ९ ॥
न
१६
इति कमल शिरःस्थ सर्वप्रथमवर्णग्रहणेन निष्पन्नं गुरुनाम.


॥ श्रीशीतल जिनस्तवनम् दशमं कमलम् १० ॥
सोमसुन्दरमुनिराजाद्यनमामिसुमुदा
इति कमल शिरःस्थ सर्वप्रथम वर्णग्रहणेन निष्पन्नं गुरुनाम
द
१६



॥ श्रीश्रेयांसजिनस्तवनम् एकादशं कमलम् ११ ॥
श्रेयादसौ श्रेयसे कुलमण्डनसाधुपतिः
इतिकमलशिरःस्थसर्वप्रथमवर्णग्रहणेन निर्मलगुरुनाम.
व
१६



॥ श्रीवासुपूज्यजिनस्तवनम् द्वादशं कमलम् १२ ॥
हम्
१६
ज्ञानसागर संयमि विभुपद. महं स्तुवे.
इति कमल शिरःस्थ सर्व प्रथम वर्णग्रहणेन निष्पन्नं शुभनाम


॥श्रीविमलजिनस्तवनम् त्रयोदशांकमलम् १३॥
मे
१६
श्रीदेवसुन्दरगुरुनाममन्त्रराजमीहे
इतिकमल शिरःस्थसर्वप्रथमवर्णग्रहणेन निष्पन्नं गुरुनाम.


॥श्रीशान्तिजिनस्तवनम् षोडशांककमलम् १६॥
ग
१६
जिनमतधर्मोद्योषसाध्ववर्तसचलनम् इतिकमलशिरःस्थसर्वप्रथमवर्णग्रहणेन निष्पन्नं गुरुनाम.



॥ श्रीमुनिसुव्रतजिनस्तवनम् विंशतितमं कमलम्॥२०॥
श्रीमद्भमरविजयविबुधपदं नमामि
इतिकमलशिरस्थ सर्व प्रथमवर्णग्रहणेन निष्पन्नं गुरुनाम.
ज


॥ श्रीनेमिजिनस्तवनम् द्वाविंशं कमलम् ॥ २२ ॥
प
१६
पञ्चमगच्छपति श्रीसुधर्मपरंपरा ८सो इतिकमल शिरःस्थसर्वप्रथमवर्णग्रहणेन निष्पन्नं गुरुनाम.


॥ श्रीपार्श्वजिनस्तवनम् त्रयोविंशं कमलम् ॥२३॥
णे
१३
पण्डित श्रीकमलविजयगुरवे नमोऽस्तु इतिकमलशिरःस्थ सर्वप्रथमवर्णग्रहणेन निष्पन्नं गुरुनाम ॥


॥श्रीमहावीर (वर्द्धमान) स्तवनम् चतुर्विंशं कमलम् २४
श्रीकमलविजयशिष्य हेमविजय कृतिः
इति कमलशिरःस्थ सर्वप्रथमवर्णग्रहणेन निस्सरति स्तोत्र
प
१६

